मुने ॥ मदर्थं कर्म कुर्वाणो मद्ध्यानो मत्परायणः ॥४७॥ एतत्प्रारब्धदेहांते मत्स्वरूपमवाप्स्यसि ॥ अस्मिन्नेवाश्रमे वासं कुरुष्व मुनिपुंगव ॥४८॥ धर्मपुष्करिणी चेयं पुण्या पापविनाशिनी ॥ अस्यास्तीरे तपः कुर्वंस्तपःसिद्धिमवाप्नुयात् ॥ ४९ ॥ धर्मः पुरा समागत्य दक्षिणस्योदधेस्तटे ॥ तपस्तेपे महादेवं चिंतयन्मनसा तदा ॥ ५० ॥ स्नानार्थमेकं तीर्थं च चक्रे धर्मो महामुने ॥ धर्मपुष्करिणी तेन प्रसिद्धा तत्कृता यतः ॥ ५१ ॥ त्वया यथा तपस्तप्तमिदानीं मुनिसत्तम ॥ तथा तप्तं तपस्तेन धर्मेण हरसेविना ॥ ५२ ॥ तपसा तस्य तुष्टः सञ्छूलपाणिर्महेश्वरः ॥ प्रादुरासीत्स्वया दीप्त्या दिशो दश विभासयन् ॥ ५३ ॥ अथाश्रममनुप्राप्तं महादेवं कृपानिधिम् ॥ धर्मः परमसन्तुष्टस्तुष्टाव परमेश्वरम् ॥ ५४ ॥ ॥ धर्म उवाच ॥ ॥ प्रणमामि जगन्नाथमीशानं प्रणवात्मकम् ॥ समस्तदेवतारूपमादिमध्यांतवर्जितम् ॥ ५५ ॥ ऊर्ध्वरेतं विरूपाक्षं विश्वरूपं नमाम्यहम् ॥ समस्तजगदाधारमनन्तमजमव्ययम् ॥५६॥ यमामनन्ति योगीन्द्रास्तं वन्दे पुष्टिवर्धनम् ॥ नमो लोकाधिनाथाय वंचते परिवंचते ॥५७॥ नमोऽस्तु नीलकण्ठाय पशूनां पतये नमः ॥ नमः कल्मषनाशाय नमो मीढुष्टमाय च ॥ ५८ ॥ नमो रुद्राय देवाय कद्रुद्राय प्रचेतसे ॥ नमः पिनाकहस्ताय शूलहस्ताय ते नमः ॥ ५९ ॥ नमश्चैतन्यरूपाय पुष्टीनां पतये नमः ॥ नमः पंचास्यदेवाय क्षेत्राणां पतये नमः ॥ ६० ॥ इति स्तुतो महादेवः शंकरो लोकशंकरः ॥ धर्मस्य परमां तुष्टिमापन्नस्तमुवाच वै ॥ ६१ ॥ ॥ महेश्वर उवाच ॥ ॥ प्रीतोस्म्यनेन स्तोत्रेण तव धर्म महामते ॥ वरं मत्तो वृणीष्व त्वं मा विलंबं कुरुष्व वै ॥ ६२ ॥ ईश्वरेणैवमुक्तस्तु धर्मो देवमथाब्रवीत् ॥ वाहनं ते भविष्यामि सदाहं पार्वतीपते ॥ ६३ ॥ अयमेव वरो मह्यं दातव्यस्त्रिपुरांतक ॥ तवोद्वहनमात्रेण कृतार्थोऽहं भवामि भोः ॥ ६४ ॥ इत्थं धर्मेण कथितो देवो धर्ममथाब्रवीत् ॥ ॥ ईश्वर उवाच ॥ ॥ वाहनं भव मे धर्म सर्वदा लोकपूजितः[1] ॥ ६५ ॥ मम चोद्वहने शक्तिरमोघा ते भविष्यति ॥ त्वत्सेविनां सदा भक्तिर्मयि स्यान्नात्र संशयः ॥ ६६ ॥ इत्युक्ते शंकरेणाथ धर्मोपि वृषरूपधृक् ॥ उवाह परमेशानं तदाप्रभृति गालव ॥ ६७ ॥ महादेवस्तमारुह्य धर्मं वै वृषरूपिणम् ॥ शोभमानो भृशं धर्ममुवाच परमामृतम् ॥ ६८ ॥ ॥ ईश्वर उवाच ॥ ॥ त्वया कृतं हि यत्तीर्थं दक्षिणस्योदधेस्तटे ॥ धर्मपुष्करिणीत्येषा लोके ख्याता भविष्यति ॥६९॥अस्यास्तीरे जपो होमो दानं स्वाध्याय एव च ॥

---

१ सर्वलोकैकपूजितः–इ०पा० ।

रितः ॥ वीणावेणुमृदंगादिवादकैर्नारदादिभिः ॥ २३ ॥ उपगीयमानविजयः पीतांबरविराजितः ॥ लक्ष्मीविराजितोरस्को नीलमेघसमच्छविः ॥ ॥ २४ ॥ धुनानः पद्ममेकेन पाणिना मधुसूदनः ॥ सनकादिमहायोगिसेवितः पार्श्वयोर्द्वयोः ॥ २५ ॥ मंदस्मितेन सकलं मोहयन्भुवनत्रयम् ॥ स्वभासा भासयन्सर्वान्दिशो दश च भूसुराः ॥ २६ ॥ कंठलग्नेन मणिना. कौस्तुभेन च शोभितः ॥ सुवर्णवेत्रहस्तैश्च सेविर्तोऽनेकशः ॥ ॥ २७ ॥ अनन्यदुर्लभाचिंत्यगीयमाननिजाद्भुतः ॥ सुभक्तसुलभो देवो लक्ष्मीकांतो हरिः स्वयम् ॥ २८ ॥ सत्र्यवत्त पुरस्तस्य गालवस्य महामुनेः ॥ आविर्भूतं तदा दृष्ट्वा श्रीवत्सांकितवक्षसम् ॥ २९ ॥ पीतांबरधरं देवं तुष्टिं प्राप महामुनिः ॥ भक्त्या परमया युक्तस्तुष्टाव जगदीश्वरम् ॥ ॥३०॥ गालव उवाच ॥ नमो देवादिदेवाय शंखचक्रगदाभृते ॥नमो नित्याय शुद्धाय सच्चिदानंदरूपिणे ॥३१॥ नमो भक्तार्तिहंत्रे ते हव्यकव्यस्वरूपिणे॥ नमस्त्रिमूर्तये तुभ्यं सृष्टिस्थित्यंतकारिणे॥३२॥नमः परेशाय नमो विभूम्ने नमोऽस्तु लक्ष्मीपतये विधात्रे॥नमोऽस्तु सूर्येंदुविलोचनाय नमो विरिंच्याद्यभिवंदिताय ॥३३॥ यो नामजात्यादिविकल्पहीनः समस्तदोषैरपि वर्जितो यः ॥समस्तसंसारभयापहारिणे तस्मै नमो दैत्यविनाशनाय ॥ ३४ ॥ वेदांतवेद्याय रमेश्वराय वैकुण्ठवासाय विधातृपित्रे ॥ नमोनमः सत्यजनार्तिहारिणे नारायणायामितविक्रमाय ॥ ३५ ॥ नमस्तुभ्यं भगवते वासुदेवाय शार्ङ्गिणे ॥ भूयोभूयो नमस्तुभ्यं शेषपर्यंकशायिने ॥ ३६ ॥ इति स्तुत्वा हरिं विप्रास्तूष्णीमास्ते स गालवः ॥ श्रुत्वा स्तुतिं श्रुतिसुखां हरिस्तस्य महात्मनः ॥ ३७ ॥ अवाप परमं तोषं शंखचक्रगदाधरः ॥ अथालिंग्य मुनिं शौरिश्चतुर्भिर्बाहुभिस्तदा ॥ ३८ ॥ प्रभाषे प्रीतिसंयुक्तो वरो वै व्रियतामिति ॥ तुष्टोऽस्मि तपसा तेऽद्य स्तोत्रेणापि च गालव ॥ ३९ ॥ नमस्कारेण च प्रीतो वरदोऽहं तवागतः ॥ ॥ गालव उवाच ॥ ॥ नारायण रमानाथ पीतांबर जगन्मय ॥ ४० ॥ जनार्दन जगद्धामन्गोविंद नरकांतक ॥ त्वद्दर्शनात्कृतार्थोऽस्मि सर्वस्मादधिकस्तथा ॥ ४१ ॥ त्वां न पश्यंत्यधर्मिष्ठा यतस्त्वं धर्मपालकः ॥ यन्न वेत्ति भवो ब्रह्मा यन्न वेत्ति त्रयी तथा ॥ ४२ ॥ तं नेत्रैः परमात्मानं किमस्मादधिकं वरम् ॥ योगिनो यं न पश्यन्ति यं न पश्यंति कर्मठाः ॥ ४३ ॥ तं पश्यामि परात्मानं किमस्मादधिकं वरम् ॥ एतेन न कृतार्थोऽस्मि जनार्दन जगत्पते ॥ ४४ ॥ यन्नामस्मृतिमात्रेण महापातकिनोऽपि च ॥ मुक्तिं प्रयांति मुनयस्तं पश्यामि जनार्दनम् ॥ ४५ ॥ त्वत्पादपद्मयुगले भगवन् निश्चला भक्तिरस्तु मे ॥ ॥ हरिरुवाच ॥ ॥ मयि भक्तिर्दृढा तेऽस्तु निष्कामा गालवाधुना ॥ ४६ ॥ [illegible]

१ उपगीयमानविभवः—इ० पा० । २ भासुराः—इ० पा० । ३ [illegible]—इ० पा० ।

नंतमाप्नोति जयं परत्र पुनर्भवक्केशमसौ न गच्छेत् ॥ ११४ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये सेतुनिर्माणादिवर्णनंनाम द्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥ ऋषय ऊचुः ॥ ॥ चतुर्विंशतितीर्थानि यान्युक्तानि त्वया मुने ॥ तेषां प्रधानतीर्थानां सेतौ पापविनाशने ॥ १ ॥ आदिमस्य तु तीर्थस्य चक्रतीर्थमिति प्रथा ॥ कथं समागता सूत वदास्माकं हि पृच्छताम् ॥ २ ॥ ॥ श्रीसूत उवाच ॥ ॥ चतुर्विंशतितीर्थानां प्रधानानां द्विजोत्तमाः ॥ यदुक्तमादिमं तीर्थं सर्वलोकेषु विश्रुतम् ॥ ॥ ३ ॥ स्मरणात्तस्य तीर्थस्य गर्भवासो न विद्यते ॥ विलयं यांति पापानि लक्षजन्मकृतान्यपि[1] ॥ ४ ॥ तस्मिंस्तीर्थे सकृत्स्नाना त्स्मरणात्कीर्तनादपि ॥ लोके ततोधिकं तीर्थं तत्तुल्यं वा द्विजोत्तमाः ॥ ५ ॥ न विद्यते मुनिश्रेष्ठाः सत्यमुक्तमिदं मया ॥ गंगा सरस्वती रेवा पंपा गोदावरी नदी ॥ ६ ॥ कालिंदी चैव कावेरी नर्मदा मणिकर्णिका ॥ अन्यानि यानि तीर्थानि नद्यः पुण्या महीतले ॥ ॥ ७ ॥ अस्य तीर्थस्य विप्रेंद्राः कोटचंशेनापि नो समाः ॥ धर्मतीर्थमिति प्राहुस्तत्तीर्थं हि पुराविदः ॥ ८ ॥ यथा समागता तस्य चक्रतीर्थमिति प्रथा ॥ तदिदानीं प्रवक्ष्यामि शृणुध्वं मुनिपुंगवाः ॥ ९ ॥ सेतुमूलं हि तत्प्रोक्तं तद्दर्भशयनं मतम् ॥ तत्रैव चक्रतीर्थं तु महापातकमर्दनम् ॥ ॥१०॥ पुरा हि गालवोनाम मुनिर्विष्णुपरायणः ॥ दक्षिणांभोनिधेस्तीरे हालास्याददविदूरतः ॥११॥ फुल्लग्रामसमीपे च तथा क्षीरसरोंतिके ॥ धर्म पुष्करिणीतीरे सोऽतप्यत महत्तपः ॥ १२ ॥ युगानामयुतं ब्रह्म गृणन्विप्राः सनातनम् ॥ दयायुक्तो निराहारः सत्यवान्विजितेंद्रियः ॥१३॥ आत्म वत्सर्वभूतानि पश्यन्विषयनिःस्पृहः ॥ सर्वभूतहितो दांतः सर्वद्वंद्वविवर्जितः ॥ १४ ॥ वर्षाणि कतिचित्सोऽयं जीर्णपर्णाशनोऽभवत् ॥ किंचि त्कालं जलाहारो वायुभक्षः कियत्समाः ॥ १५ ॥ एवं पंचसहस्राणि वर्षाणि स महामुनिः ॥ अतप्यत तपो घोरं देवैरपि सुदुष्करम् ॥ १६ ॥ ततः पंचसहस्राणि वर्षाणि मुनिपुंगवः ॥ निराहारो निरालोको निरुच्छ्वासो निरास्पदः ॥ १७ ॥ वर्षास्वासारसहनं हेमंतेषु जलेशयः ॥ ग्रीष्मे पंचा ग्निमध्यस्थो विष्णुध्यानपरायणः ॥ १८ ॥ जपन्नष्टाक्षरं मंत्रं ध्यायन्हृदि जनार्दनम् ॥ ततापं सुमहातेजा गालवो मुनिपुंगवः ॥ १९ ॥ एवं त्वयुतव र्षाणि समतीतानि वै मुनेः ॥ अथ तत्तपसा तुष्टो भगवान्कमलापतिः ॥ २० ॥ प्रत्यक्षतामगात्तस्य शंखचक्रगदाधरः ॥ विकचांबुजपत्राक्षः सूर्य कोटिसमप्रभः ॥ २१ ॥ विनतानंदनारूढश्छत्रचामरशोभितः[2] ॥ हारकेयूरमुकुटकटकादिविभूषितः ॥ २२ ॥ विष्वक्सेनसुनंदादिकिंकरैः परिवा

१ लक्षजन्मार्जितान्यपि-इ० पा० । २ चक्रचामरशोभितः-इ० पा० ।

वरम् ॥ ९० ॥ अहं सेतुं विधास्यामि ह्यगाधे वरुणालये ॥ पित्रा दत्तवरश्चाहं सामर्थ्ये चापि तत्समः ॥ ९१ ॥ मातुर्मम वरो दत्तो मन्दरे विश्वकर्मणा ॥ शिल्पकर्मणि मत्तुल्यो भविता ते सुतस्त्विति ॥ ९२ ॥ पुत्रोऽहमौरसस्तस्य तुल्यो वै विश्वकर्मणा ॥ अद्यैव कामं बध्नंतु सेतुं वानरपुंगवाः ॥ ९३ ॥ ततो रामनिसृष्टास्ते वानरा बलवत्तराः ॥ पर्वतान्गिरिशृंगाणि लतातृणमहीरुहान् ॥ ९४ ॥ समाजह्रुर्महाकाया गरुडानिलरंहसः ॥ नलश्चक्रे महासेतुं मध्ये नदनदीपतेः ॥ ९५ ॥ दशयोजनविस्तीर्णं शतयोजनमायतम् ॥ जानकीरमणो रामः सेतुमेवमकारयत् ॥ ९६ ॥ नलेन वानरेन्द्रेण विश्वकर्मसुतेन वै ॥ तमेवं सेतुमासाद्य रामचन्द्रेण कारितम् ॥ ९७ ॥ सर्वे पातकिनो मर्त्या मुच्यन्ते सर्वपातकैः ॥ व्रतदानतपोहोमैर्न तथा तुष्यते शिवः ॥ ९८ ॥ सेतुमज्जनमात्रेण यथा तुष्यति शंकरः ॥ न तुल्यं विद्यते तेजो यथा सौरेण तेजसा ॥ ९९ ॥ सेतुस्नानेन च तथा न तुल्यं विद्यते क्वचित् ॥ तत्सेतुमूलं लंकायां यत्र रामो धियासया ॥ १०० ॥ वानरैः सेतुमारेभे पुण्यं पापप्रणाशनम् ॥ [illegible]यनं नाम्ना पश्चाल्लोकेषु विश्रुतम् ॥ १०१ ॥ एवमुक्तं मया विप्राः समुद्रे सेतुबंधनम् ॥ अत्र तीर्थान्यनेकानि संति पुण्यान्यनेकशः ॥ १०२ ॥ न संख्यां नामधेयं वा शेषो गणयितुं क्षमः ॥ किं त्वहं प्रब्रवीम्यद्य तत्र तीर्थानि कानिचित् ॥ १०३ ॥ चतुर्विंशतितीर्थानि संति सेतौ प्रधानतः ॥ प्रथमं चक्रतीर्थं स्याद्वेतालवरदं ततः ॥ १०४ ॥ ततः पापविनाशार्थं तीर्थं लोकेषु विश्रुतम् ॥ ततः सीतासरः पुण्यं ततो मंगलतीर्थकम् ॥ ॥ १०५ ॥ ततः सकलपापघ्नी नाम्ना चामृतवापिका ॥ ब्रह्मकुण्डं ततस्तीर्थं ततः कुंडं हनूमतः ॥ १०६ ॥ आगस्त्यं हि ततस्तीर्थं रामतीर्थमतः परम् ॥ ततो लक्ष्मणतीर्थं स्याज्जटातीर्थमतः परम् ॥ १०७ ॥ ततो लक्ष्म्याः परं तीर्थमग्नितीर्थमतः परम् ॥ चक्रतीर्थं ततः पुण्यं शिवतीर्थमतः परम् ॥ १०८ ॥ ततः शंखाभिधं तीर्थं ततो यामुनतीर्थकम् ॥ गंगातीर्थं ततः पश्चाद्गयातीर्थमनन्तरम् ॥ १०९ ॥ ततः स्यात्कोटितीर्थाख्यं साध्यानाममृतं ततः ॥ मानसाख्यं ततस्तीर्थं धनुष्कोटिस्ततः परम् ॥ ११० ॥ प्रधानतीर्थान्येतानि महापातकहंति च ॥ कथितानि द्विजश्रेष्ठाः सेतुमध्यगतानि वै ॥ १११ ॥ यथा सेतुश्च नद्योऽभ्रमाणेण जलधौ महान् ॥ कथितं तत्र विप्रेन्द्राः पुण्यं पापहरं तथा ॥ ११२ ॥ गन्धकृत्वा न पठित्वा न मुच्यते मानवो भुवि ॥ ११३ ॥ अध्यायमेनं पठते मनुष्यः शृणोति वा भक्तियुतो द्विजेन्द्राः ॥ [illegible]

१ [illegible] २ [illegible]

जने ॥ न दर्शयति साम्ना मे सागरो रूपमात्मनः ॥ ६६ ॥ चापमानय सौमित्रे शरांश्चाशीविषोपमान् ॥ सागरं शोषयिष्यामि पद्भ्यां यांतु प्लवंगमाः ॥ ६७ ॥ एनं लंघितमर्यादं सहस्रोर्मिसमाकुलम् ॥ निर्मर्यादं करिष्यामि सायकैर्वरुणालयम् ॥ ६८ ॥ महार्णवं शोषयिष्ये[1] महादानवसंकुलम् ॥ महामकरनक्राढ्यं महावीचिसमाकुलम् ॥ ६९ ॥ एवमुक्त्वा धनुष्पाणिः क्रोधपर्याकुलेक्षणः ॥ रामो बभूव दुर्धर्षस्त्रिपुरघ्नो यथा शिवः ॥ ७० ॥ आकृष्य चापं कोपेन कम्पयित्वा शरैर्जगत् ॥ मुमोच विशिखानुग्रांस्त्रिपुरेषु यथा भवः ॥ ७१ ॥ दीप्ता बाणाश्च ये घोरा भासयन्तो दिशो दश ॥ प्राविशन्वारिधेस्तोयं दृप्तदानवसंकुलम् ॥७२ ॥ समुद्रस्तु ततो भीतो वेपमानः कृतांजलिः ॥ अनन्यशरणो विप्राः पातालात्स्वयमुत्थितः॥७३॥ शरणं राघवं भेजे कैवल्यपदकारणम् ॥ तुष्टाव राघवं विप्रा भूत्वा शब्दैर्मनोरमैः ॥ ७४ ॥ ॥ समुद्र उवाच ॥ ॥ नमामि ते राघव पादपंकजं सीतापते सौख्यद पादसेवनात् ॥नमामि ते गौतमदारमोक्षजं श्रीपादरेणुं सुरवृन्दसेव्यम्॥७५॥सुन्दप्रियादेहविदारिणे नमो नमोऽस्तु ते कौशिकयागरक्षिणे ॥ नमो महादेवशरासभेदिने नमो नमो राक्षससंघनाशिने ॥ ७६ ॥ रामराम नमस्यामि भक्तानामिष्टदायिनम् ॥ अवतीर्णो रघुकुले देवकार्यचिकीर्षया ॥ ७७ ॥ नारायणमनाद्यंतं मोक्षदं शिवमच्युतम् ॥ रामराम महाबाहो रक्ष मां शरणागतम् ॥ ७८ ॥ कोपं संहर राजेंद्र क्षमस्व करुणालय ॥ भूमिर्वातो वियच्चापो ज्योतींषि च रघूद्वह ॥ ७९ ॥ यत्स्वभावानि सृष्टानि ब्रह्मणा परमेष्ठिना ॥ वर्तंते तत्स्वभावानि स्वभावो मे ह्यगाधता ॥ ८० ॥ विकारस्तु भवेद्गाध एतत्सत्यं वदाम्यहम् ॥ लोभात्कामाद्भयाद्वापि रागाद्वापि रघूद्वह ॥ ८१ ॥ न वंशजं गुणं हातुमुत्सहेयं कथंचन ॥ तत्करिष्ये च साहाय्यं सेनायास्तरणे तव ॥ ८२ ॥ इत्युक्तवन्तं जलधिं रामोऽवादीन्नदीपतिम् ॥ ससैन्योऽहं गमिष्यामि लंकां रावणपालिताम् ॥ ८३ ॥ तच्छोषमुपयाहि त्वं तरणार्थं ममाधुना ॥ इत्युक्तस्तं पुनः प्राह राघवं वरुणालयः ॥ ८४ ॥ शृणुष्वावहितो राम श्रुत्वा कर्तव्यमाचर ॥ यद्याज्ञया ते शुष्यामि ससैन्यस्य यियासतः ॥८५॥ अन्येऽप्याज्ञापयिष्यंति मामेवं धनुषो बलात् ॥ उपायमन्यं वक्ष्यामि-तरणार्थं बलस्य ते ॥ ८६ ॥ अस्ति ह्यत्र नलोनाम वानरः शिल्पिसंमतः ॥ त्वष्टुः काकुत्स्थ तनयो बलवान्विश्वकर्मणः ॥ ८७ ॥ स यत्काष्ठं तृणं वापि शिलां वा क्षेप्स्यते मयि ॥ सर्वं तद्धारयिष्यामि स ते सेतुर्भविष्यति ॥ ८८ ॥ सेतुना तेन गच्छ त्वं लंकां रावणपालिताम् ॥ उक्त्वेत्यंतर्हिते तस्मिन्रामो नलमुवाच[2] ह ॥ ८९ ॥ कुरु सेतुं समुद्रे त्वं शक्तो ह्यसि महामते ॥ तदाऽब्रवीन्नलो वाक्यं रामं धर्मभृतां

---

१ क्षोभयिष्ये—इ० पा० । २ स रामो नलमूचिवान्—इ०पा० ।

ससैन्या वरुणालयम् ॥ ४० ॥ शतयोजनमायातं मनसापि दुरासदम् ॥ अतो नु विघ्ना बहवः कथं प्राप्या च मैथिली ॥ ४१ ॥ कष्टात्कष्टतरं प्राप्ता वयमद्य निराश्रयाः ॥ महाजले महावाते समुद्रे हि निराश्रये ॥ ४२ ॥ उपायं कं विधास्यामस्तरणार्थं वनौकसाम् ॥ राज्याद्भ्रष्टो वनं प्राप्तो हृता सीता मृतः पिता ॥ ४३ ॥ इतोऽपि दुःसहं दुःखं यत्सागरविलंघनम् ॥ धिग्धिग्गर्जितमंभोधे धिगेतां वारिराशिताम् ॥ ४४ ॥ कथं तद्वचनं मिथ्या महर्षेः कुम्भजन्मनः ॥ हत्वा त्वं रावणं पापं पवित्रे गंधमादने ॥ पापोपशमनायाशु गच्छस्वेति यदीरितम् ॥४५॥ ॥ श्रीसूत उवाच ॥ ॥ इति रामवचः श्रुत्वा सुग्रीवप्रमुखास्तदा ॥ ४६ ॥ ऊचुः प्रांजलयः सर्वे राघवं तं महाबलम् ॥ नौभिरेनं तरिष्यामः प्लवैश्च विविधैरिति ॥ ४७ ॥ मध्ये वानरकोटीनां तदोवाच विभीषणः ॥ समुद्रं राघवो राजा शरणं गन्तुमर्हति ॥ ४८ ॥ खनितः सागरैरेष समुद्रो वरुणालयः ॥ कर्तुमर्हति रामस्य तज्ज्ञातेः कार्यमंबुधिः ॥ ४९ ॥ विभीषणेनैवमुक्तो राक्षसेन विपश्चिता ॥ सांत्वयन्राघवः सर्वान्वानरानिदमब्रवीत ॥ ५० ॥ शतयोजन विस्तारमशक्ताः सर्ववानराः ॥ तर्तुं प्लवोडुपैरेनं समुद्रमतिभीषणम् ॥ ५१ ॥ नावो न संति सेनाया बह्व्यो वानरपुंगवाः ॥ वणिजामुपघातं न कथमस्मद्विधश्चरेत् ॥ ५२ ॥ विस्तीर्णं चैव नः सैन्यं हन्याच्छिद्रेषु वा परः ॥ प्लवोडुपप्रतारोऽतो नैवात्र मम रोचते ॥ ५३ ॥ विभीषणोक्तं वदं मोदते मम वानराः ॥ अहं त्विमं जलनिधिमुपास्ये मार्गसिद्धये ॥ ५४ ॥ नो चेद्दर्शयिता मार्गं धक्ष्याम्येनमहं तदा ॥ महाशैलशिखोद्गत्यग्निपवनोज्ज्वलैः ॥ ५५ ॥ इत्युक्त्वा सहसौमित्रिरुपस्पृश्याथ राघवः ॥ प्रतिशिश्ये जलनिधिं विधिवत्कुशसंस्तरे ॥ ५६ ॥ तदा रामः कुशास्तीर्णे तीरे नदनदीपतेः ॥ संविवेश महाबाहुर्वेद्यामिव हुताशनः ॥ ५७ ॥ शेषभोगनिभं बाहुमुपधाय रघूद्वहः ॥ दक्षिणो दक्षिणं बाहुमुपधाय मकरालयम् ॥ ५८ ॥ तस्य रामस्य सुप्तस्य कुशास्तीर्णे महीतले ॥ नियमादप्रमत्तस्य निशास्तिस्रोऽभिनिक्रमुः ॥ ५९ ॥ स त्रिरात्रोषितस्तत्र नयज्ञो धर्मतत्परः ॥ उपास्तेस्म तदा रामः सागरं मार्गसिद्धये ॥ ६० ॥ न च दर्शयते मन्दस्तदा रामस्य सागरः ॥ प्रयतेनापि रामेण यथार्हमपि पूजितः ॥ ६१ ॥ तथापि सागरो रामं न दर्शयति चात्मनः ॥ समुद्राय ततः क्रुद्धो रामो रक्तान्तलोचनः ॥ ६२ ॥ समीपस्थमिदं वचनं लक्ष्मणं प्रत्यभाषत ॥ अद्य मद्बाणनिर्भिन्नैर्मकरैर्वरुणालयम् ॥ ६३ ॥ निरुद्धतोयं सौमित्रे करिष्यामि क्षणादहम् ॥ क्षमया हि समायुक्तं मामयं मकरालयः ॥ ६४ ॥ असमर्थं विजानाति धिक्क्षमामीदृशे जने ॥ ६५ ॥ अद्य बाणैरमोघैस्तं वारिधिं परिशोषये ॥ क्षमया हि समायुक्तं मामयं मकरालयः ॥ ६६ ॥ असमर्थं विजानाति [illegible]

[illegible]

यस्मादति पराक्रमः ॥ अहं लंकेश्वरं हत्वा भार्यामानयितास्मि ते ॥ १७ ॥ ततः सुग्रीवसहितो रामचंद्रो महाबलः ॥ सलक्ष्मणो ययौ तूर्णं किष्किंधां वालिपालिताम् ॥ १८ ॥ ततो जगर्ज सुग्रीवो वाल्यागमनकांक्षया ॥ अमृष्यमाणो वाली च गर्जितं स्वानुजस्य ॥ ॥ १९ ॥ अंतःपुराद्विनिष्क्रम्य युयुधेऽवरजेन सः ॥ वालिमुष्टिप्रहारेण ताडितो भृशविह्वलः ॥ २० ॥ सुग्रीवो निर्गतस्तूर्णं यत्र रामो महाबलः वै ततो रामो महाबाहुस्सुग्रीवस्य शिरोधरे ॥ २१ ॥ लतामाबध्य चिह्नं तु युद्धायाचोदयत्तदा ॥ गर्जितेन समाहूय सुग्रीवो वालिनं पुनः ॥ २२ ॥ रामप्रेरणया तेन बाहुयुद्धमथाकरोत् ॥ ततो वालिनमाजघ्ने शरेणैकेन राघवः ॥ २३ ॥ हते वालिनि सुग्रीवः किष्किंधां प्रत्यपद्यत ॥ ततो वर्षास्वतीतासु सुग्रीवो वानराधिपः ॥ २४ ॥ सीतामानयितुं तूर्णं वानराणां महाचमूम् ॥ समादाय समागच्छदंतिकं नृपपुत्रयोः ॥ २५ ॥ प्रस्थापयामास कपीन्सीतान्वेषणकांक्षया ॥ विदितायां तु वैदेह्यां लंकायां वायुसूनुना ॥ २६ ॥ दत्ते चूडामणौ चापि राघवो हर्षशोकवान् ॥ सुग्रीवेणानुजेनापि वायुपुत्रेण धीमता ॥ २७ ॥ तथान्यैः कपिभिश्चैव जांबवन्नलमुख्यकैः ॥ अन्वीयमानो रामोऽसौ मुहूर्तेऽभिजिति द्विजाः ॥२८॥ विलंघ्य विविधान्देशान्महेंद्रं पर्वतं ययौ ॥ चक्रतीर्थं ततो गत्वा निवासमकरोत्तदा ॥ २९ ॥ तत्रैव तु स धर्मात्मा समागच्छद्विभीषणः[2] ॥ भ्राता वै राक्षसेंद्रस्य चतुर्भिः सचिवैः[3] सह ॥ ३० ॥ प्रतिजग्राह रामस्तं स्वागतेन महात्मना ॥ सुग्रीवस्य तु शंकाऽभूत्प्रणिधिः[4] स्यादयं त्विति ॥ ३१ ॥ राघवस्तस्य चेष्टाभिः सम्यक्स्वचरितैर्हितैः ॥ अदुष्टमेनं दृष्ट्वैव तत एनमपूजयत् ॥ ३२ ॥ सर्वराक्षसराज्ये तमभ्यषिंचद्विभीषणम् ॥ चक्रे च मंत्रिप्रवरं सदृशं रविसूनुना ॥ ३३ ॥ चक्रतीर्थं समासाद्य निवसद्रघुनंदनः ॥ चिंतयन्राघवः श्रीमान्सुग्रीवादीनभाषत ॥ ३४ ॥ मध्ये वानरमुख्यानां प्राप्तकालमिदं वचः ॥ उपायः को नु भवतामेतत्सागरलंघने ॥ ३५ ॥ इयं च महती सेना सागरश्चापि दुस्तरः ॥ अंभोराशिरयं नीलश्चंचलोर्म्मिसमाकुलः ॥ ३६ ॥ उद्यन्मत्स्यो महानक्रशंखशुक्तिसमाकुलः ॥ क्वचिदौर्वानलाक्रांतः फेनवानतिभीषणः ॥ ॥ ३७ ॥ प्रकृष्टपवनाकृष्टनीलमेघसमन्वितः ॥ प्रलयांभोधरारावः सारवाननिलोद्धतः ॥ ३८ ॥ कथं सागरमक्षोभ्यं तरामो वरुणालयम् ॥ सैन्यैः परिवृताः सर्वे वानराणां महौजसाम् ॥ ३९ ॥ उपायैरधिगच्छामो यथा नदनदीपतिम् ॥ कथं तरामः सहसा

---

१ वाणेन। २ त्रिभीषणः--इ० पा०। अत्र हि 'विभिषिण त्रिभीषण' शब्दयोर्मध्ये प्रायो विवादः सर्वत्र सर्वतः शोश्रूयते नात्र निश्चयोऽधिगम्यते तन्निर्णयश्चास्मद्बुद्ध्यायमेव--'त्रिभी भये' इत्यस्य सन्नान्तत्वाद्युचि रूपम् त्रिभेतुमिच्छति अधर्मो मां मास्प्राक्षीत् इति त्रिभीषति त्रिभीषतीति त्रिभीषण--इति। ३ सह मंत्रिभिः--इ० पा०। ४ गुप्तचारः इत्यर्थः।

पम् ॥ ९९ ॥ सेतुं गच्छ धनं तेऽहं दास्यामीति प्रलोभ्य यः ॥ पश्चान्नास्तीति च ब्रूयात्तमाहुर्ब्रह्मघातकम् ॥ १०० ॥ लोभेन सेतुयात्रां [illegible] दरिद्रवत् ॥ मानवो यदि याचेत तमाहुस्तेयिनं बुधाः ॥ १०१ ॥ गमिष्ये सेतुमिति वै यो गृहीत्वा धनं नरः ॥ न याति सेतुं लोभेन तमाहुर्ब्रह्मघातकम् ॥ १०२ ॥ येन केनाप्युपायेन सेतुं गच्छेन्नरो मुदा ॥ अशक्तो दक्षिणां दत्त्वा गमयेद्वा द्विजोत्तमम् ॥१०३॥ याचित्वा ब्रह्मकर्मे तथा दोषो न विद्यते ॥ याचित्वा सेतुयात्रायां तथा दोषो न विद्यते ॥ १०४ ॥ याचित्वाप्यन्यतो द्रव्यं सेतुस्नाने प्रवर्तयेत् ॥ सोऽपि तत्फलमाप्नोति सेतुस्नायी नरो यथा ॥ १०५ ॥ ज्ञानेन मोक्षमभियांति कृते युगे तु त्रेतायुगे यजनमेव विमुक्तिदायि ॥ श्रेष्ठं तथान्ययुगयोरपि दानमाहुः सर्वेषु सेतु [illegible] शिपवो हि वरो नराणाम् ॥१०६॥ इति श्रीस्कांदे महापुराणे एकाशीतिसाहस्र्यां संहितायां तृतीये ब्रह्मखण्डे सेतुमाहात्म्ये सेतुगमनफलादिवर्णनं नाम प्रथमोऽध्यायः॥१॥ ॥ ऋषय ऊचुः ॥ ॥ कथं सूत महाभाग रामेणाक्लिष्टकर्मणा ॥ सेतुर्बद्धो नदीनाथे ह्यगाधे वरुणालये ॥१॥ सेतौ च कति तीर्थानि गंधमादनपर्वते ॥ एतन्नः श्रद्दधानानां ब्रूहि पौराणिकोत्तम ॥ २ ॥ ॥ श्रीसूत उवाच ॥ ॥ रामेण हि यथा सेतुर्निबद्धो वरुणालये ॥ तदहं संप्रवक्ष्यामि युष्माकं मुनिपुंगवाः ॥ ३ ॥ आज्ञया हि पितू रामो न्यवसद्दंडकानने ॥ सीतालक्ष्मणसंयुक्तः पंचवट्यां समाहितः॥ ४ ॥ तस्मिन्वने सतस्तस्य राघवस्य महात्मनः ॥ रावणेन हृता भार्या मारीचच्छद्मना द्विजाः ॥५॥ मार्गमाणो वने भार्यां रामो दशरथात्मजः॥ पंपातीरं जगामासौ शोकमोहसमन्वितः ॥६॥ दृष्टवान्वानरं तत्र कंचिद्दशरथात्मजः ॥ वानरेणाथ पृष्टोऽयं को भवानिति राघवः ॥ ७ ॥ आदितः स्वस्य वृत्तांतं तस्मै प्रोवाच तत्त्वतः ॥ अथ राघवसंपृष्टो वानरः को भवानिति ॥ ८ ॥ सोपि विज्ञापयामास राघवाय महात्मने ॥ अहं सुग्रीवसचिवो हनूमान्नाम वानरः ॥ ९ ॥ तेन च प्रेरितोऽभ्यागां युवाभ्यां सख्यमिच्छता ॥ आगच्छतं तद्भद्रं वां सुग्रीवांतिकमाशु वै ॥ १० ॥ तथास्त्विति स रामो [illegible] गि तेन साकं मुनीश्वराः ॥ सुग्रीवांतिकमागत्य सख्यं चक्रेऽग्निसाक्षिकम् ॥ ११ ॥ प्रतिजज्ञेऽथ रामोऽपि तस्मै वालिवधं प्रति ॥ सुग्रीवश्चापि वै देह्याः पुनरानयनं द्विजाः ॥ १२ ॥ इत्येवं समयं कृत्वा विश्वास्य च परस्परम् ॥ मुदा परमया युक्तौ नरेश्वरकपीश्वरौ ॥१३॥ [illegible] ऋष्यमूकगिरिं तथा ॥ सुग्रीवप्रत्ययार्थं च दुंदुभेः कायमाशु वै ॥ १४ ॥ पादांगुष्ठेन चिक्षेप राघवो दशयोजनम् ॥ [illegible] महा[illegible]गना ॥ १५ ॥ ततः प्रीतमना वीरः सुग्रीवो राममब्रवीत् ॥ इंद्रादिदेवताभ्योऽपि नास्ति राघव मे भयम् ॥ १६ ॥ [illegible]

हिमनःशुद्धिप्रदं तथा ॥ जपाद्धोमात्तथा दानाद्यागाच्च तपसोऽपि च ॥ ७३ ॥ सेतुस्नानं विशिष्टं हि पुराणे परिपठ्यते ॥ अकामनाकृतं स्नानं सेतौ पापविनाशने ॥ ७४ ॥ अपुनर्भवदं प्रोक्तं सत्यमुक्तं द्विजोत्तमाः ॥ यः संपदं समुद्दिश्य स्नाति सेतौ नरो मुदा ॥ ७५ ॥ ससंपदमवाप्नोति विपुलां द्विजपुंगवाः ॥ शुद्ध्यर्थं स्नाति चेत्सेतौ तदा शुद्धिमवाप्नुयात् ॥ ७६ ॥ रत्यर्थं यदि च स्नायादप्सरोभिर्नरो दिवि ॥ तदा रतिमवाप्नोति स्वर्गलोकेऽमरीजनैः ॥ ७७ ॥ मुक्त्यर्थं यदि च स्नायात्सेतौ मुक्तिप्रदायिनि ॥ तदा मुक्तिमवाप्नोति पुनरावृत्तिवर्जिताम् ॥७८॥ सेतुस्नानेन भर्गः स्यात्सेतुस्नानादघक्षयः ॥ सेतुस्नानं द्विजश्रेष्ठाः सर्वकामफलप्रदम् ॥ ७९ ॥ सर्वव्रताधिकं पुण्यं सर्वयज्ञोत्तरं स्मृतम् ॥ सर्वयोगाधिकं प्रोक्तं सर्वं तीर्थाधिकं स्मृतम् ॥ ८० ॥ इंद्रादिलोकभोगेषु रागो येषां प्रवर्तते ॥ स्नातव्यं तैर्द्विजश्रेष्ठाः सेतौ रामकृते सकृत् ॥ ८१ ॥ ब्रह्मलोके च वैकुंठे कैलासेऽपि शिवालये ॥ रंतुमिच्छा भवेद्येषां ते सेतौ स्नांतु सादरम् ॥ ८२ ॥ आयुरारोग्यसंपत्तिमतिरूपगुणाढ्यताम् ॥ चतुर्णामपि वेदानां सांगानां पारगामिनाम् ॥ ८३ ॥ सर्वशास्त्राधिगंतृत्वं सर्वमंत्रेष्वभिज्ञताम् ॥ समुद्दिश्य तु यः स्नायात्सेतौ सर्वार्थसिद्धिदे ॥ ८४ ॥ तत्तत्सिद्धिम वाप्नोति सत्यं स्यान्नात्र संशयः ॥ दारिद्र्यान्नरकाद्ये च मनुजा भुवि बिभ्यति ॥ ८५ ॥ स्नानं कुर्वंतु ते सर्वे रामसेतौ विमुक्तिदे ॥ श्रद्धया सहितो मर्त्यः श्रद्धया रहितोऽपि वा ॥ ८६ ॥ इहलोके परत्रापि सेतुस्नायी न दुःखभाक् ॥ सेतुस्नानेन सर्वेषां नश्यते पापसंचयः ॥ ८७ ॥ वर्द्धते धर्मराशिश्च शुक्लपक्षे यथा शशी ॥ यथा रत्नानि वर्द्धंते समुद्रे विविधान्यपि ॥ ८८ ॥ तथा पुण्यानि वर्द्धंते सेतुस्नानेन वै द्विजाः ॥ काम धेनुर्यथा लोके सर्वान्कामान्प्रयच्छति ॥ ८९ ॥ चिंतामणिर्यथा दद्यात्पुरुषाणां मनोरथान् ॥ यथाऽमरतरुर्दद्यात्पुरुषाणामभीप्सितम् ॥ ९० ॥ सेतुस्नानं तथा नृणां सर्वाभीष्टान्प्रदास्यति ॥ अशक्तः सेतुयात्रायां दारिद्र्येण च मानवः ॥ ९१ ॥ याचित्वा स धनं शिष्टात्सेतौ स्नानं समाच रेत् ॥ सेतुस्नानसमं पुण्यं तत्र दाता समश्नुते ॥ ९२ ॥ तथा प्रतिगृहीतापि प्राप्नोत्यविकलं फलम् ॥ सेतुयात्रां समुद्दिश्य गृह्णीयाद्ब्राह्मणाद्ध नम् ॥ ९३ ॥ क्षत्रियादपि गृह्णीयान्न दद्युर्ब्राह्मणा यदि ॥ वैश्याद्वा प्रतिगृह्णीयान्न प्रयच्छंति चेन्नृपाः ॥ ९४ ॥ शूद्रान्न प्रतिगृह्णीयात्कथंचिदपि मानवः ॥ यः सेतुं गच्छतः पुंसो धनं वा धान्यमेव वा ॥ ९५ ॥ दत्त्वा वस्त्रादिकं वापि प्रवर्तयति मानवः ॥ सोऽश्वमेधादियज्ञानां फलमाप्नो त्यनुत्तमम् ॥ ९६ ॥ चतुर्णामपि वेदानां पारायणफलं लभेत् ॥ तुलापुरुषमुख्यानां दानानां फलमश्नुते ॥ ९७ ॥ ब्रह्महत्यादिपापानां नाशः स्या न्नात्र संशयः ॥ बहुना किं प्रलापेन सर्वान्कामान्समश्नुते ॥ ९८ ॥ एवं प्रतिगृहीतापि तत्तुल्यफलमश्नुते ॥ याचतः सेतुयात्रार्थं न प्रतिग्रहकल्म

वातेन यस्यांगं स्पृश्यतेऽखिलम् ॥ ४९ ॥ सुरापानायुतं तस्य तत्क्षणादेव नश्यति ॥ वर्तते यस्य केशास्तु वपनात्सेतुमध्यतः ॥ ५० ॥ गुरुतल्पा युतं तस्य तत्क्षणादेव नश्यति ॥ यस्यास्थि सेतुमध्ये तु स्थापितं पुत्रपौत्रकैः ॥ स्वर्णस्तेयायुतं तस्य तत्क्षणादेव नश्यति ॥ ५१ ॥ स्मृत्वा त्र्यं सेतुमध्ये तु स्नानं कुर्याद्द्विजोत्तमाः ॥ महापातकिसंसर्गदोषस्तस्य लयं व्रजेत् ॥ ५२ ॥ मार्गभेदी स्वार्थपाकी यतिब्राह्मणदूषकः ॥ अन्याशी वेदविक्रेता पंचैते ब्रह्मघातकाः ॥ ५३ ॥ ब्राह्मणान्यः समाहूय दास्यामीति धनादिकम् ॥ पश्चान्नास्तीति यो ब्रूते ब्रह्महा सोपि कीर्तितः ॥ ५४ ॥ परिज्ञाय यतो धर्मांस्तस्मै यो द्वेषमाचरेत् ॥ अवजानाति वा विप्रान्ब्रह्महा सोपिकीर्तितः ॥ ५५ ॥ जलपानार्थमायातं गोवृन्दं तु जलाशये ॥ निवारयति यो विप्रा ब्रह्महा सोपि कीर्तितः ॥ ५६ ॥ सेतुमेत्य तु ते सर्वे मुच्यंते दोषसंचयैः ॥ ब्रह्मघातकतुल्या ये संति चान्ये द्विजोत्तमाः ॥ ॥ ५७ ॥ ते सर्वे सेतुमागत्य मुच्यंते नात्र संशयः ॥ औपासनपरित्यागी देवतान्नस्य भोजकः ॥५८॥ सुरापयोषित्संसर्गी गणिकान्नाशनस्तथा ॥ गणान्नभोजकश्चैव पतितान्नरतश्च यः ॥ ५९ ॥ एते सुरापिनः प्रोक्ताः सर्वकर्मबहिष्कृताः ॥ सेतुस्नानेन मुच्यंते ते सर्वे हतकिल्बिषाः ॥ ६० ॥ सुरापतुल्या ये चान्ये मुच्यंते सेतुमज्जनात् ॥ कन्दमूलफलानां च कस्तूरीपट्टवाससाम् ॥ ६१ ॥ पयश्चंदनकर्पूरक्रमुकाणां तथैव च ॥ मध्वाज्यता म्रकांस्यानां रुद्राक्षाणां तथैव च ॥ ६२ ॥ चोरकास्तु परिज्ञेया सुवर्णस्तेयिनः समाः ॥ ते सेतुक्षेत्रमागत्य मुच्यन्ते नात्र संशयः ॥ ६३ ॥ अन्ये च स्तेयिनः सर्वे सेतुस्नानेन वै द्विजाः ॥ मुच्यंते सर्वपापेभ्यो नात्र कार्या विचारणा ॥ ६४ ॥ भगिनीं पुत्रभार्यां च तथैव च रजस्वलाम् ॥ भ्रातृभार्यां मित्रभार्यां मद्यपां च परस्त्रियम् ॥६५॥ हीनस्त्रियं च विश्वस्तां योऽभिगच्छति रागतः ॥ गुरुतल्पी स विज्ञेयः सर्वकर्मबहिष्कृतः ॥६६॥ एते चान्ये च ये संति गुरुतल्पगतुल्यकाः ॥ ते सर्वे प्रविमुच्यंते सेतुस्नानेन वै द्विजाः ॥ ६७ ॥ एतैः संसर्गिणो विप्रा ये चान्ये संति पापिनः ॥ सेतुस्नानेन महता तेऽपि मोक्षमवाप्नुयुः॥६८॥ यागं विना देवलोके घृताचीमेनकादिभिः॥ संभोगकामिनो विप्राः स्नानं सेतौ समाचरेत् ॥ ६९ ॥ अनिर्वाण गौ वह्निमनुपास्य परान्सुरान् ॥ शुभकामी जनः सेतौ कुर्यात्स्नानं सभक्तिकम् ॥७०॥ तिलान्भूमिं सुवर्णं च धान्यं तंदुलमेव च ॥ [illegible] स्नांतु सेतौ तु ते द्विजाः ॥७१॥ उपवासैर्व्रतैः कृच्छ्रैरसंताप्य निजां तनुम् ॥ स्वर्गाभिलाषिणः पुंसः स्नांतु सेतौ विमुक्तिदे ॥७२॥ सेतुस्नानं [illegible]

ति यो ब्रूयाद्यं कं वापि नरं द्विजाः ॥ सोऽपि तत्फलमाप्नोति किमन्यैर्बहुभाषणः ॥ २५ ॥ सेतुस्नानकरो मर्त्यः सप्तकोटिकुलान्वितः ॥ संप्राप्य विष्णुभवनं तत्रैव परिमुच्यते ॥ २६ ॥ सेतुं रामेश्वरं लिंगं गंधमादनपर्वतम् ॥ चिंतयन्मनुजः सत्यं सर्वपापैः प्रमुच्यते ॥ २७ ॥ मातृतः पितृतश्चैव लक्षकोटिकुलान्वितः ॥ संप्राप्य विष्णुभवनं तत्रैव परिमुच्यते ॥ कल्पत्रयं शंभुपदे स्थित्वा तत्रैव मुच्यते ॥ २८ ॥ मूषावस्थां वसाकूपं तथा वैतरणीं नदीम् ॥ श्वभक्षं मूत्रपानं च सेतुस्नायी न पश्यति ॥ २९ ॥ तप्तशूलं तप्तशिलां पुरीषह्रदमेव च ॥ तथा शोणितकूपं च सेतुस्नायी न पश्यति ॥ ३० ॥ शाल्मल्यारोहणं रक्तभोजनं कृमिभोजनम् ॥ स्वमांसभोजनं चैव वह्निज्वालाप्रवेशनम् ॥ ३१ ॥ शिलावृष्टिं वह्निवृष्टिं नरकं कालसूत्रकम् ॥ क्षारोदकं चोष्णतोयं नेयात्सेत्ववलोककः ॥ ३२ ॥ सेतुस्नायी नरो विप्राः पंचपातकवानपि ॥ मातृतः पितृतश्चैव शतकोटिकुलान्वितः ॥ ३३ ॥ कल्पत्रयं विष्णुपदे स्थित्वा तत्रैव मुच्यते ॥ अधःशिरःशोषणं च नरकं क्षारसेवनम् ॥ ३४ ॥ पाषाणयन्त्रपीडां च मरुत्प्रपतनं तथा ॥ पुरीषलेपनं चैव तथा क्रकचदारणम् ॥ ३५ ॥ पुरीषभोजनं रेतःपानं संधिषु दाहनम् ॥ अंगारशय्याभ्रमणं तथा मुसलमर्दनम् ॥ ३६ ॥ एतानि नरकाण्यद्धा सेतुस्नायी न पश्यति ॥ तुसे स्नानं करिष्येऽहमिति बुद्ध्या विचिंतयन् ॥ ३७ ॥ गच्छेच्छतपदं यस्तु स महापातकोऽपि सन् ॥ बहूनां काष्ठयंत्राणां कर्षणं शस्त्रभेदनम् ॥ ३८ ॥ पतनोत्पतनं चैव गदादण्डनिपीडनम् ॥ गजदन्तैश्च हननं नानाभुजगदंशनम् ॥ ३९ ॥ धूमपानं पाशबन्धं नानाशूलनिपीडनम् ॥ मुखे च नासिकायां च क्षारोदकनिषेचनम् ॥ ४० ॥ क्षारांबुपानं नरकं तप्तायःसूचिभक्षणम् ॥ एतानि नरकान्यद्धा न याति गतपातकः ॥ ४१ ॥ क्षारांबुपूर्णरंध्राणां प्रवेशं मलभोजनम् ॥ स्नायुच्छेदं स्नायुदाहमस्थिभेदनमेव च ॥ ४२ ॥ श्लेष्मादनं पित्तपानं महातिक्तनिषेवणम् ॥ अत्युष्णतैलपानं च पानं क्षारोदकस्य च ॥ ४३ ॥ कषायोदकपानं च तप्तपाषाणभोजनम् ॥ अत्युष्णसिकतास्नानं तथा दशनमर्दनम् ॥ ४४ ॥ तप्तायःशयनं चैव संतप्तांबुनिषेचनम् ॥ सूचिप्रक्षेपणं चैव नेत्रयोर्मुखसंधिषु ॥ ४५ ॥ शिश्ने सवृषणे चैव ह्ययोभारस्य बन्धनम् ॥ वृक्षाग्रात्पतनं चैव दुर्गंधपरिपूरिते ॥ ४६ ॥ तीक्ष्णधारास्त्रशय्यां च रेतःपानादिकं तथा ॥ इत्यादिनरकान्घोरान्सेतुस्नायी न पश्यति ॥ ४७ ॥ सेतुसैकतमध्ये यः शेते तत्पांसुकुंठितः ॥ यावन्तः पांसवो लग्नास्तस्यांगे विप्रसत्तमाः ॥ ४८ ॥ तावतां ब्रह्महत्यानां नाशः स्यान्नात्र संशयः ॥ सेतुमध्यस्थ

१ बहुभाषितैः—इ० पा० । २ पुरीषलोचनम्—इ० पा० । ३ गच्छति—इ० पा० । ४ गतकल्मषः—इ० पा० । ५ मेहभोजनम्—इ० पा० ।

॥ श्रीगणेशाय नमः ॥ श्रीवेदव्यासाय नमः ॥ शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ॥ प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशांतये ॥ १ ॥ नैमिषारण्य
निलया ऋषयः शौनकादयः ॥ अष्टांगयोगनिरता ब्रह्मज्ञानैकतत्पराः ॥ १ ॥ मुमुक्षवो महात्मानो निर्ममा ब्रह्मवादिनः ॥ धर्मज्ञा अनसूयाश्च
सत्यव्रतपरायणाः ॥ २ ॥ जितेंद्रिया जितक्रोधाः सर्वभूतदयालवः ॥ भक्त्या परमया विष्णुमर्चयंतः सनातनम् ॥३ ॥ तपस्तेपुर्महापुण्ये नैमिषे
मुक्तिदायिनि ॥ एकदा ते महात्मानः समाजं चक्रुरुत्तमम् ॥ ४ ॥ कथयंतो महापुण्याः कथाः पापप्रणाशिनीः ॥ भुक्तिमुक्त्योरुपायं न जिज्ञा
संतः परस्परम् ॥ ५ ॥ षड्विंशतिसहस्राणामृषीणां भावितात्मनाम् ॥ तेषां शिष्यप्रशिष्याणां संख्या कर्तुं न शक्यते ॥ ६ ॥ अत्रांतरे महाविद्वान्व्या
सशिष्यो महामुनिः ॥ आगमन्नैमिषारण्यं सूतः पौराणिकोत्तमः ॥ ७ ॥ तमागतं मुनिं दृष्ट्वा ज्वलंतमिव पावकम् ॥ अर्घ्याद्यैः पूजयामासुर्मुनयः
शौनकादयः ॥ ८ ॥ सुखोपविष्टं तं सूतमासने परमे शुभे ॥ पप्रच्छुः परमं गुह्यं लोकानुग्रहकांक्षया ॥ ९ ॥ सूत धर्मार्थतत्त्वज्ञ स्वागतं मुनिपुंगव ॥
श्रुतवांस्त्वं पुराणानि व्यासात्सत्यवतीसुतात् ॥ १० ॥ अतः सर्वपुराणानामर्थज्ञोऽसि महामुने ॥ कानि क्षेत्राणि पुण्यानि कानि तीर्थानि भूतले
॥ ११ ॥ कथं वा लप्स्यते मुक्तिर्जीवानां भवसागरात् ॥ कथं हरे हरौ वापि नृणां भक्तिः प्रजायते ॥ १२ ॥ केन सिध्येत च फलं कर्मणस्त्रिविधा
त्मनः ॥ एतच्चान्यच्च तत्सर्वं कृपया वद सूतज ॥ १३ ॥ ब्रूयुः स्निग्धाय शिष्याय गुरवो गुह्यमप्युत ॥ इति पृष्टस्तदा सूतो नैमिषारण्यवासिभिः ॥
॥ १४ ॥ वक्तुं प्रचक्रमे नत्वा व्यासं स्वगुरुमादितः ॥ श्रीसूत उवाच ॥ ॥ सम्यक्पृष्टमिदं विप्रा युष्माभिर्जगतो हितम् ॥ १५ ॥ रहस्यं
तद्युष्माकं वक्ष्यामि शृणुतादरात् ॥ मया नोक्तमिदं पूर्वं कस्यापि मुनिपुंगवाः ॥ १६ ॥ मनो नियम्य विप्रेंद्राः शृणुध्वं भक्तिपूर्वकम् ॥ अस्ति गंध
मादनं नाम रामसेतौ पवित्रितम् ॥ १७ ॥ क्षेत्राणामपि सर्वेषां तीर्थानामपि चोत्तमम् ॥ दृष्टमात्रे रामसेतौ मुक्तिः संसारसागरात् ॥ १८ ॥ हरे हरौ
च भक्तिः स्यात्तथा पुण्यसमृद्धिता ॥ कर्मणस्त्रिविधस्यापि सिद्धिः स्यान्नात्र संशयः ॥ १९ ॥ यो नरो जन्ममध्ये तु सेतुं भक्त्यावलोकयेत् ॥
तस्य पुण्यफलं वक्ष्ये शृणुध्वं मुनिपुंगवाः ॥२०॥ मातृतः पितृतश्चैव द्विकोटिकुलसंयुतः ॥ निविश्य शंभुना कल्पं ततो मोक्षं समश्नुते ॥ २१ ॥
गण्यंते पांसवो भूमेर्गण्यंते दिवि तारकाः ॥ सेतुदर्शनजं पुण्यं शेषेणापि न गण्यते ॥ २२ ॥ समस्तदेवतारूपः सेतुबंधः प्रकीर्तितः ॥ तद्दर्शनवतः
पुंसः कः पुण्यं गणितुं क्षमः ॥ २३ ॥ सेतुं दृष्ट्वा नरो विप्राः सर्वयागकरः स्मृतः ॥ स्नातश्च सर्वतीर्थेषु तपोजप्त्वा नास्तिकम् ॥२४॥ सेतुं गन्तुं

१ [illegible] । २ [illegible] । ३ [illegible] । ४ [illegible] । ५ [illegible] ।

स्मिन्प्रथमजाऋतस्यइत्यत्रदेवींवाचमजनयंतदेवाः यद्वाग्वदंतीतिद्वौप्रतीकौ ॥ अनंतामंतादित्यादिनिदधातिदेवयु
मित्यंतं ॥ नतानशंति ॥ नताअर्वारेणुककाटइतिद्वौप्रतीकौ ॥ गावोभगोगावइत्यंतमनुवाकं ॥ अग्निर्नःपातु *॥* ऋध्या
स्महव्यैः *॥* अस्यानुवाकस्यांते ॥ निवेशनीसंगमनी ॥ यत्तेदेवाअदधुरितिद्वौ ॥ नवोनवोभवति ॥ यमादित्याइतिद्वौ
॥ येविरूपेसमनसा *॥* उदुत्यंजातवेदसं *॥* चित्रंदेवानां *॥* अदितिर्नउरुष्यत्वदितिः *॥* महीमूषुमातरगुँसुव्रतानां *॥* इदंवि
ष्णुः *॥* प्रतद्विष्णुः *॥* अग्निर्मूर्द्धा *॥* भुवोयज्ञस्य *॥* अनुनोद्यानुमतिः *॥* अन्विदनुमतेत्वंमन्यासै *॥* हव्यवाहमभिमा
तिषाहं *॥* स्विष्टमग्ने *॥* इतिद्वादश ॥ अग्नयेस्वाहाकृत्तिकाभ्यःस्वाहेत्यादिप्रश्नसमाप्तिपर्यंतमुत्तमानुपहोमान् ॥
दधिक्राव्णः ॥ आपोहिष्ठेतितिस्रः ॥ यच्चिद्धितेविशइतितिस्रः ॥ हिरण्यवर्णाइतिचतस्रः ॥ पवमानस्सुवर्ज
नइत्यनुवाकं ॥ भूः भुवः सुवः ॥ तच्छंयोरावृणीमहे *॥* ॥ ७ ॥ अथघृतसूक्तं ॥ योब्रह्माब्रह्मणउज्जभारप्राणेश्वरः
कृत्तिवासाःपिनाकी ॥ ईशानोदेवस्सनआयुर्दधातुतस्मैजुहोमिहविषाघृतेन ॥ १ ॥ विभ्राजमानस्सरिरस्य
मध्याद्रोचमानोघर्मरुचिर्यआगात् ॥ समृत्युपाशादपनुद्यघोरादिहायुषेनोघृतमत्तुदेवः ॥ २ ॥ ब्रह्मज्योतिर्ब्रह्म
पत्नीषुगर्भंयमादधात्पुरुरूपंजयंतं ॥ सुवर्णरंभग्रहमर्कमर्च्यंतमायुषेवर्धयामोघृतेन ॥ ३ ॥ श्रियंलक्ष्मीमोपला
मंबिकांगांषष्ठींचयामिंद्रसेनेत्युदाहुः ॥ तांविद्यांब्रह्मयोनिंसरूपामिहायुषेतर्पयामोघृतेन ॥ ४ ॥ दाक्षायण्यस्सर्वयो
न्यस्सुयोन्यस्सहस्रशोविश्वरूपाविरूपाः ॥ ससूनवस्सपतयस्सयूथ्यादिहायुषेनोघृतमिदंजुषंतां ॥ ५ ॥ दिव्यागणाब

हुरूपाः पुराणाआयुच्छिदोनप्रमथ्नंतुवीरान् ॥तेभ्योजुहोमिबहुधाघृतेनमानःप्रजाँरीरिषोमोतवीरान् ॥ ६ ॥ एकः पुरस्ताद्यइदंबभूवयतोबभूवभुर्वनस्यगोपाः ॥ यमप्येतिभुवनँसांपरायेसनोहविर्घृतमिहायुषेत्तुदेवः ॥ ७ ॥ वसूनुद्रा नादित्यान्मरुतोथसाध्यान्नृभून्यक्षान्गंधर्वाँश्चपितृँश्च॥विश्वान्भृगून्त्सर्पांश्चांगिरसोथसाध्यान्घृतँहुत्वास्वायुष्यामि हयामशश्वत् ॥ ८ ॥ इत्युदकशांतिप्रयोगः ॥ ७ ॥ अथप्रतिसरबंधः ॥ तमेवकुंभमन्वारभ्यव्याहृतिगायत्रीवेदा दींश्चपूर्ववज्जपित्वा ॥ कृणुष्वपाजइत्यंतमनुवाकं ॥ अग्नेयशस्विन्नितिचतस्रः ॥ हिरण्यवर्णाःशुचयःपावकाः॥ पवमा नस्सुवर्जनः ॥ इत्येतावनुवाकौ ॥ उदुत्तमंवरुणास्तभ्नाद्द्यांयत्किंचेदंकितवासःअवतेहेडस्तत्त्वायामीतिषड्वरुणसू क्तं ॥ परिणोरुद्रस्तुहिश्रुतंमीढुष्टमार्हन्बिभर्षित्वमग्नेरुद्रआवोराजानामितिषड्रुद्रसूक्तं॥ ब्रह्मजज्ञानमितिब्रह्मसूक्तं॥ वि ष्णोर्नुकंतदस्यप्रियंप्रतद्विष्णुः परोमात्रयाविचक्रमेत्रिर्देवइतिषड्विष्णुसूक्तं ॥ जातवेदसइतिपंचदुर्गासूक्तं ॥ हिरण्यव र्णामितिश्रीसूक्तंपंचदशर्चं ॥ विंदेयंपुरुषानहं॥ १५ ॥एतानिप्रातिसरसूक्तानि ॥ ॐनमोब्रह्मणइतित्रिरुक्त्वा॥ॐमित्यु दकुंभमुत्थाप्य व्याहृतिभिः प्रोक्षत्यथदक्षिणांददाति पुरस्तादुपविष्टायहिरण्यंदक्षिणाःप्रतिपादयामि॥ दक्षिणतउपवि ष्टाय रजतंदक्षिणाःप्रतिपादयामि ॥ पश्चादुपविष्टाय कांस्यंदक्षिणाः प्रतिपादयामि ॥ उत्तरतउपविष्टाय वस्त्रंद क्षिणाः प्रतिपादयामि ॥सर्वत्रतत्तन्मूल्यंवा ॥ ततःप्रतिसरसूत्रमादायव्याहृतिभिःप्रोक्ष्य वासुकिंध्यात्वा त्र्यंबकंयजाम हइतिभस्मनोर्ध्वांत्रिस्संमृज्य ॥ बृहत्सामक्षत्रभृद्वृद्धवृष्णियंत्रिष्टुभोजःशुभितमुग्रवीरं ॥ इंद्रस्तोमेनपंचदशेनमध्यमिदं

वातेनसगरेणरक्ष॥इतिदक्षिणहस्तेबध्वा स्त्रीणांवामहस्ते॥अथभस्मगृहीत्वा योब्रह्माब्रह्मणइत्यष्टचैनरक्षांकृत्वाग्निरायुष्मा
नितिपंचभिःपर्यायैराशीर्भिरभिनंद्य ॥ अनेनोदकशांतिप्रतिसरबंधकर्मणाश्रीपरमेश्वरःप्रीयतां ॥ आवाहितदेवतायैपु
नःषोडशोपचारान्कृत्वादेवतामुद्वासयेत् ॥ अत्रोदकशांतौप्रणवव्याहृतिगायत्रीवेदादीन्मंत्रान्यथाक्रमंपठित्वा पुनःप्रति
सरांगत्वेनपृथगेवमंत्राः पठनीयाः ॥ अन्यथातयोर्न्यूनातिरिक्तदोषप्रसंगः ॥ समानतंत्रस्यतु कलशसंकल्पऋत्विग्वर्ण
पूजादक्षिणादिषुचरितार्थत्वात् ॥ नतुप्रधानमंत्रेषु ॥ अथवैतावुदकशांतिप्रतिसरबंधौपृथक्कर्त्तव्यौ ॥ अथोदकशांतिक
र्त्तव्यकालः ॥ स्वजन्मत्रयेवाजन्मसप्तमाष्टमराशिषुवाग्रहणेवाग्रहोत्पातेवामनुष्याणांपशूनांवाभयकालेपुण्यनक्षत्रेवो
दकशांतिंकुर्यात् ॥ एवमेवज्वरगृहीतानांग्रहगृहीतानांभूतोपसृष्टानांमित्रसंबंधिज्ञातिबांधवानांराज्ञांराजपुरोहितानांबा
लवृद्धगर्भिणीकृशानांदीर्घरोगिणांहस्त्यश्वोष्ट्रगोमहिषीणांभृत्यानांगृहाणांचप्रोक्षतिमहत्स्वस्त्ययनंभवत्यपपुनर्मृत्युंजय
तीत्याहभगवान्बोधायनः ॥ ॥ ७ ॥ ॥ इतिप्रयोगमालायामुदकशांतिप्रतिसरबंधप्रयोगः ॥ ॥ ७ ॥
अथसर्वकर्मसधारणाग्निमुखप्रयोगः ॥ तत्रादौहोममंडलप्रकारः ॥ विश्वामित्रकारिकायां ॥ साम्यंशुभ्रंकोणयुक्तंप्रमा
णंरेखाढ्याढ्यंदिक्षुपत्रंविशुद्धं ॥ कुर्य्यादेतन्मंडलंसप्तचिन्हंचत्वारिंशत्साष्टसंख्यांगुलाढ्यं ॥ गोचर्मांतःषडंघ्रिंहिमकर
सदृशंमंडलंचाष्टकोणंरेखाभिस्तत्रयुक्तंतिसृभिरतिशुभंश्वेतमृद्भिर्नवक्रं ॥ दिक्ष्वश्वत्थाकृतिवैंपरिलिखतुबुधःस्वर्णयुक्तं
यथावच्चान्योन्यंचाष्टकोणंसममितिविलिखेद्धोमकार्येष्वभीष्टं ॥ पूर्वभागेतथापूर्वेदक्षिणेचतदुत्तरे ॥ पश्चिमेपूर्वभागेच

उत्तरेचतदुत्तरे ॥ इतिमंडललक्षणं ॥ ७॥ अथदर्भाः॥अथसर्वदर्विहोमानामष्टोत्तरशतंदर्भाः ॥हस्तपवित्रेद्वे॥आत्मासने द्वे ॥ परिस्तरणार्थंप्राक्षोड शदक्षिणतस्सप्तदश पश्चिमेष्टादश उत्तरेसप्तदश ॥ पात्राणांपंच ॥ [ पात्राच्छादनार्थमि त्यर्थः ]॥ब्रह्मासनेसप्तदश ॥ प्रणीतासनेद्वे ॥ उपरिष्टाद्वे ॥ आज्यपवित्रेद्वे ॥ अभिद्योतनेद्वे ॥ दर्भाग्रेद्वे ॥ पर्यग्नि करणेद्वे ॥ स्रुक्संमार्जनेद्वे ॥ इत्यष्टोत्तरशतं ॥ ॥ ७ ॥ अथापस्पर्शनस्थानानि ॥ सर्वत्रछेदनभेदनखनननिरस नविस्रंसनदाहनिर्ऋतिपितृराक्षसरौद्रात्माभिमर्शनेष्वपउपस्पृशेत् ॥ ॥ ७ ॥ अथपरिसमूहनं ॥ नृसिंहकारिका यां ॥ सजलेनकरेणत्रिरैशानींदिशमादितः ॥ प्रदक्षिणंतदाशांतंयथाग्नेर्नजलंपतेत् ॥ परितोमार्जयेत्तद्वदेतत्परिसमूह नं ॥ पुनःपुनर्गृहीत्वाथत्रिर्निषिंचेत्प्रदक्षिणं ॥अन्यत्रापि॥पाणिनासोदकेनाग्नेस्समंतात्परिमार्जनं ॥ तत्समूहनमित्युक्तं जयंतवचनंयथेति ॥ ७ ॥ अथपरिषेकादीनामंगुलीक्रमउक्तः ॥ सिंगाभट्टीये ॥ अष्टमेनवमेचैवदशमैकादशेतथा ॥ सेचनंपरिधिश्चैवस्तरणंपूजनंक्रमादिति ॥ अत्रस्थंडिलाद्बहिरष्टमेंगुल अदितेनुमन्यस्वेत्यादिभिःपरिषेचनं ॥ तन्नव मेपरिधिः तद्दशमेपरिस्तरणं ॥ तदेकादशेपूजनमितिक्रमोज्ञेयः ॥ ७ ॥ अथपात्राणि ॥ कारिकायां ॥ आज्यस्थालीं स्रुवंचैवप्रणीतांप्रोक्षणींतथा ॥ शूर्पंशिलापुत्रकंचाथेध्माबर्हिषीतथा ॥ स्फ्यंमेक्षणंचेतितेषांपरिमाणानिमेशृणु ॥ आज्य स्थालीप्रोक्षणीचप्रसृतिद्वयसम्मिते॥ प्रणीताद्विगुणात्वष्टागुणस्थालीचरोरपि ॥ दर्व्यादैर्घ्यप्रमाणंस्यादंगुलान्येकाविंश तिः ॥ पंचैवतुबिलंतस्यादंडःस्यात्तुचतुर्दशः ॥ अरत्निमात्रीवाकार्याबाहुमात्रीत्यथापरे ॥ वैकंकत्यन्नहोमार्थापालाशीस्रु

क्रताहशी ॥ चतुर्गृहीतहोमार्थास्स्रुवस्तावत्प्रमाणकाः ॥ पालाशःखादिरोवास्यात्सचताम्रायसोपिवा ॥ कृष्णायस
स्त्वाभिचारेप्रादेशंमेक्षणंस्मृतं ॥ पित्र्येत्वौदुंबरीदर्वीप्रमाणेनंतथाविधा ॥ सर्वत्रोद्धननार्थायखादिरस्फ्यइहेष्यते
॥ पालाशंमद्ध्यमंपर्णंस्त्रुक्स्त्रुवाणामसंभवे ॥ प्रादेशमात्रास्समिधइध्मस्याष्टादशस्मृताः ॥ त्रयः परिधयोरत्निस
म्मितास्स्युस्समामिथः ॥ मद्ध्यमःपरिधिःस्थूलोमितश्चोपकनिष्ठया ॥ परिधिर्दक्षिणार्द्धः स्यात्कनिष्ठोमद्ध्यमान्वि
तः ॥ कनिष्ठयामितोनिष्ठः परिधिस्तूत्तरार्द्धकः ॥ समेद्धस्थौल्यदैर्घ्याभ्यांसाग्रेप्रादेशसम्मिते ॥ पवित्रेग्रंथितेज्ञेयेपि
त्र्येत्वेकमबंधनं ॥ अरत्निमात्रंबर्हिस्स्याच्छूर्पादीनांतुलोकतइति ॥ ७ ॥ अथप्रोक्षणादिलक्षणं ॥ कारिकायां॥ उत्ताने
नतुहस्तेनकर्त्तव्यंप्रोक्षणंभवेत् ॥ अवाचीनेनहस्तेनकर्त्तव्यंस्यादवोक्षणं ॥ मुष्टीकरोतुयत्तोयमभ्युक्षणमितिस्मृतं ॥७॥
अथहोतृप्रवेशनलक्षणं॥ताक्ष्यासनेबद्धबिसासनेवापद्मासनेस्वस्तिकविष्टरेवा॥ निवेश्यतत्राध्वरकर्मकुर्यात्प्राचीमुखश्शु
द्धवपुर्विधिज्ञः ॥ अन्यच्च ॥ निधायभूमावथसव्यजानुंचोद्धृत्यवामंचतदंघ्रिपार्श्वे॥स्पृष्ट्वाचपत्सव्यतलेनवामहस्तात्स्पृश
न्दक्षिणबाहुमूलं ॥ ७ ॥ अथोद्धन्यमानलक्षणं ॥ स्फ्यमद्ध्यमंगृहीत्वाथसंयोगांगुलिभिः पुरा ॥ अंत्यांगुलिस्मृते
तत्रभुवंस्फ्याग्रेणसंमृजेत् ॥ मद्ध्येचाधेचमद्ध्येसुरपतिदिशितद्दक्षिणेमध्यमेंत्येदिक्पश्चान्मध्यइंदोर्दिशशुचिसमिधा
संस्पृशेत्पश्चिमेंद्रे ॥ उद्धन्येत्यस्यवर्णैश्शरशरविशिखद्वीपबाणांगसंख्यैर्वर्णैराम्नायशुष्माजलपतिगुणितैर्यज्ञभूशुद्धये
च ॥ इति ॥ ७ ॥ अथपवित्रं ॥ चतुर्भिःपौष्टिकेयज्ञेपंचाभिस्त्वाभिचारके ॥ पित्र्येत्रिभिः पवित्रार्थंद्वौदर्भौनित्यकर्म

णि ॥ षोडशांगुलविस्तारंग्रंथिरेकांगुलंभवेत् ॥ व्द्यंगुलंवलयंप्रोक्तंपवित्रस्यप्रमाणकं ॥ अग्रंप्रदक्षिणीकृत्यपूर्वरंध्राद्वि
निर्गतं ॥ अधोरंध्राद्विनिर्गत्यपवित्रस्यचलक्षणं ॥ ७ ॥ अथोद्देशत्यागः ॥ संकल्पेनविनोद्देशत्यागेनचविनाहुतं ॥
समंत्रमपितत्कर्मनयथोक्तफलप्रदं ॥ पूर्वंचपूर्वोदितदेवताश्चपरंचपश्चादुदिताःक्रमेण ॥ तत्तन्मनूक्तक्रमसंप्रयुक्तानुद्दि
श्यहोमंपरिदापयेतात् ॥ ७ ॥ अथोपवेशनं ॥ संस्कारकस्तुसर्वत्रतिष्ठेदुत्तरतस्सदा ॥ संस्कार्य्यःपुरुषोवाथस्त्रीवाद
क्षिणतस्सदा ॥ इयंव्यवस्थानिर्णीताकपर्दिप्रमुखैरिह ॥ स्मार्तकर्मसुसर्वत्रतस्मादेवंहिकारयेदिति ॥ ॥ ७ ॥ ७ ॥
अथाग्निमुखप्रयोगः॥अथशुचौसमेदेशेतथाकृतेवाईषत्प्रागुदक्प्लवेगोमयेनगोचर्ममात्रंचतुरस्रंस्थंडिलमुपलिप्य पूर्वोक्तप्र
कारेणविंशतिरेखात्मकमष्टदिक्ष्वश्वत्थदलाकारमष्टकोणात्मकंहोममंडलंविलिख्यतत्पश्चात्कर्ताप्राङ्मुखउपविश्य द्विराच
म्यपवित्रपाणिःप्राणानायम्यदेशकालौसंकीर्त्यामुककर्मकर्तुंस्थलशुद्ध्यर्थंस्थंडिलोल्लेखनाख्यंकर्मकरिष्ये ॥ इतिसंकल्प्य
॥ स्फ्याग्रेण उद्धन्यमानं ॥ अस्याअमेध्यं ॥ अपपाप्मानं ॥ यजमानस्यहंतु ॥ शिवानस्संतु ॥ प्रदिशश्चतस्रः ॥
शन्नोमाता ॥ पृथिवीतोकसाता ॥ इतिनवपदैः ॥ मद्ध्येमद्ध्येपश्चिमपूर्वेषु ॥ तद्दक्षिणे ॥ मध्याग्नेयनिर्ऋतिषु ॥ तदुत्त
रे ॥ मध्यवायव्येशान्येषु ॥ क्रमेणस्फ्येनोद्धत्यापउपस्पृश्य ॥ शन्नोदेवीरभिष्टय ✱ वंतुनः ॥ इत्यधोमुखेनहस्तेनाद्भि
रवोक्ष्य ॥ तत्रसिकताःशुक्लाः अनार्द्राः शुद्धप्रदेशास्थिताः केशकीटतुषभस्मांगारापिपीलिकादिवर्जिताः पंचप्रस्थसम्मि
ताआनीय ॥ देवस्यत्वा ✱ हस्ताभ्यामितिसिकतान्युप्य ॥ ताभिररत्निमात्रंसमचतुरस्रंचतुरंगुलोन्नतंप्रागुदक्प्लवंस्थं

डिलमीशान्यादारभ्येशानपर्यंतंकृत्वा ॥ सुवर्णरजतताम्रशकलव्रीहियवदर्भाणामन्यतममंगुष्ठानामिकाभ्यां गृहीत्वा तस्यमध्येप्राचीनगुँसंततमृजुमुल्लिखेत् ॥ ॐब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतस्सुरुचोवेनआवः ॥ सबुध्नियाउपमाअस्यविष्ठास्सतश्चयोनिमसतश्चविवइति ॥ अथदक्षिणतः प्राचीनं ॥ नाकेसुपर्णमुपयत्पतंतगुँहृदावेनंतोअभ्यचक्षतत्वा ॥ हिरण्यपक्षंवरुणस्यदूतंयमस्ययोनौशकुनंभुरण्युं ॥ इतिअपउपस्पृश्य ॥ अथोत्तरतः प्राचीनं ॥ आप्यायस्वसमेतुतेविश्वतः सोमवृष्णियं ॥ भवावाजस्यसंगथे ॥ इतिपूर्वाग्रास्तिस्रः ॥ अथमध्यादुदीचीनं ॥ योरुद्रोअग्नौयोअप्सुयओषधीषुयोरुद्रोविश्वाभुवनाविवेशतस्मैरुद्रायनमोअस्तु ॥इत्यपउपस्पृश्य॥अथपश्चादुदीचीनं॥इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूढमस्यपागुँसुरे इति ॥ अथप्रागुदीचीनं॥इंद्रंविश्वाअवीवृधन्त्समुद्रव्यचसंगिरः॥रथीतमगुँरथीनांवाजानागुँसत्पतिंपतिं ॥ इत्युत्तराग्रास्तिस्रः ॥ ततईशान्यांशकलंनिधाय मुष्ट्याभ्युक्ष्य नैर्ऋत्यांदिशितंशकलंनिरस्यापउपस्पृश्य ॥ विरलमुष्ट्यास्थंडिलमभ्युक्ष्याथसमृद्धंद्वादशांगारयुक्तंविधूममग्निंमृन्मयादिपात्रद्वयेनसंपुटीकृत्य ॥ सुवासिन्याहृतंस्थंडिलादाग्नेय्यान्निधाय ॥ देवस्यत्वा ❋ हस्ताभ्यां ॥ भूर्भुवस्सुवरोममुकनामाग्निंप्रतिष्ठापयामि॥इत्यात्माभिमुखंपाणिभ्यांप्रतिष्ठाप्य तत्पात्रेसाक्षतजलमासिच्य॥ईशान्यांनिधाय प्रोक्षितकाष्ठानिनिक्षिप्य वेणुधमन्याप्रज्वाल्य प्राणानायम्यदेशकालौसंकीर्त्य श्रीपरमेश्वरप्रीत्यर्थममुकहोमंकरिष्ये॥अमुकहोमःकर्म आघारवत्तंत्रंपंचदशदारुरिध्मः अग्नीषोमावाज्यभागौअमुकनामाग्निस्सवितादेवताउक्तद्रव्यंहविःअग्निस्विष्टकृतुआज्यस्यमांत्रवर्णिक्यो

देवताएताअंगदेवताःप्रधानदेवतास्तास्सर्वास्सन्निहितास्संतु ॥ एवंसांगेनकर्मणासद्योयक्ष्ये ॥ तदंगमन्वाधानंकरि
ष्ये ॥ इतिसंकल्प्य॥ॐभूः॥ॐभुवः ॥ॐगुँसुवः ॥ इतिमध्यदक्षिणोत्तरक्रमेणातिस्रस्समिधआधायाथाग्नेरुत्तरतस्त्रिरसं
धात्मकेनप्रदक्षिणावृत्तेनोदीचीनाग्रंनिहितेनशुल्बेनेध्ममेकविंशतिदारुकंतथैवबर्हिर्मुष्टिगुँसन्नह्यपरिस्तरणाद्यर्थंदर्भैस्स
हाध्यायतनात्पश्चाद्भागेपरिनिधायाथैनमग्निमुपतिष्ठते ॥ जुष्टोदमूनाअतिथिर्दुरोणे॥इमन्नोयज्ञमुपयाहिविद्वान् ॥ वि
श्वाअग्नेअभियुजोविहत्य॥शत्रूयतामाभराभोजनानीत्युपस्थाय ॥अथाग्नेरीशानमारभ्यसजलेनहस्तेनप्रदक्षिणक्रमेणई
शानपर्यंतंत्रिःपरिसमूह्यपर्य्युक्ष्य स्थंडिलाद्दशांगुलिमितेदेशेपरिस्तृणाति॥ ॐदेवस्यत्वा ॥ हस्ताभ्यां ॥ परिस्तृणा
मीतिपुरस्तादुदगग्रैःषोडशभिः॥ॐभूर्भुवस्सुवरोंपरिस्तृणामीतिदक्षिणतःप्रागग्रैस्सप्तदशभिः ॥ ॐउद्वयंतमसस्परिप
श्यंतोज्योतिरुत्तरं ॥ देवंदेवत्रासूर्य्यमगन्मज्योतिरुत्तमं ॥ परिस्तृणामीतिपश्चादुदगग्रैरष्टादशभिः ॥ ॐअग्नआ
याहिवीतयेगृणानोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ परिस्तृणामीत्युत्तरतःप्रागग्रैस्सप्तदशभिः ॥ इतिपरि
स्तीर्य्य ॥ दक्षिणान्दर्भान्पूर्वपश्चिमपरिस्तरणयोरुपरिकुर्यात् उत्तरागुँस्तयोरधः ॥ अथपात्रासादनार्थमग्नेरुत्तरतः
प्रागारभ्यपश्चादपवर्गंदक्षिणतआरभ्योदगपवर्गंत्रिस्संधमग्रैर्मूलगुँसंच्छाद्यसगुँस्तृणाति ॥ दक्षिणेनाग्निंब्रह्मासनार्थं
प्रागग्रान्सप्तदशदर्भान्निदधाति ॥ ॐभूर्भुवस्सुवरों ब्रह्मन्ब्रह्मासिनमस्तेब्रह्मन्ब्रह्मणेनमः ॥ इत्यथोत्तरतःप्रणीता
सादनार्थंदर्भद्वयंनिदधाति ॥ वरुणोसिधृतव्रतोवारुणमसीति ॥ अथात्मासनार्थंप्रागग्रंदर्भद्वयंनिधायाथास्तीर्णेषु

दर्भेषुद्वंद्वमधोबिलानिपात्राणिसादयति॥आज्यस्थालींस्रुवंदर्वींप्रणीताप्रणयनंचरुस्थालींप्रोक्षणीमिध्माबर्हिरिध्मप्रव्रश्च
नानिरूपथ्यंमेक्षणंस्रुचंचेतिसादयित्वा पंचभिर्दर्भैःप्रच्छाद्य प्रादेशमात्रेसमेअप्रच्छिन्नाग्रेअनखच्छिन्नेकुशद्वयात्मकेपवित्रे
कृत्वाद्भिरनुमृज्य प्रोक्षणीपात्रमुत्तानंकृत्वा तस्मिन्नुदगग्रेपवित्रेनिधायाद्भिःपूरयित्वा हस्तयोरंगुष्ठानामिकाभ्यामु
दगग्रेपवित्रेगृहीत्वा विच्छिद्यविच्छिद्य त्रिरुत्पूयोत्तानेनपाणिनाताभिरेवाद्भिरपात्रैःप्रोक्ष्य पात्राण्युत्तानानिकृत्वा
विस्रस्येध्मंत्रिरुसर्वाभिःप्रोक्ष्य उदक्स्थितंब्रह्माणमस्मिन्कर्मणिब्रह्माणंत्वांवृणइति ॥ स्वदक्षिणपाणिनातस्यदक्षिणपा
णिंस्पृष्ट्वावरयित्वावृतोस्मीत्युक्तेतंगंधादिभिरभ्यर्च्याथब्रह्माप्राङ्मुखउपविश्य द्विराचम्याग्रेणाग्निंपरीत्यदक्षिणतउदङ्
मुखस्तिष्ठन्तूष्णींब्रह्मसदनमुपस्थायासनतृणेषुदक्षिणभागस्थमेकंतृणमंगुष्ठानामिकाभ्यांगृहीत्वानैर्ऋत्यांदिशिनिरस्या
पउपस्पृश्य द्यावापृथिवीसमीक्षमाणउपविशेत्॥ब्राह्मणाभावेब्रह्मासनदर्भेषुप्रागग्रंकूर्चंनिधाय॥ॐब्रह्मन्ब्रह्मासिनमस्ते
ब्रह्मन्ब्रह्मणेनमः॥इतिब्रह्मासनमंत्रेणोपस्थाय॥अथाग्नेःपश्चात्प्रणीतापात्रंनिधाय तस्मिन्नुदगग्रेपवित्रेनिधायाद्भिःपूर
यित्वा ब्रह्मन्नपः प्रणेष्यामीत्युक्त्वा॥ ॐप्रणयेत्युक्तेतस्मिन्गंधपुष्पाक्षतान्निधाय दर्भस्थंदर्भसंच्छन्नंमुखसममुद्धृत्यावि
षिंचन्हृत्वोत्तरेणाग्निंदर्भेषुसादयित्वा दर्भद्वयेनप्रच्छाद्याथपवित्रेआदायाग्नेःपश्चाच्चरुस्थालींनिधाय तत्रप्रागग्रेपवित्रेनि
धाय देवस्यत्वा * हस्ताभ्यां॥सवित्रेजुष्टंनिर्वपामीतिसकृन्मंत्रेणत्रिस्तूष्णींचतुर्थं॥ अथपवित्रेगृहीत्वा देवस्यत्वा *हस्ता
भ्यां॥सवित्रेवोजुष्टंप्रोक्षामीतिसकृन्मंत्रेणद्विस्तूष्णींप्रोक्ष्योत्तरतआसाद्य ॥अथाग्नेःपश्चादाज्यस्थालींनिधायतस्मिन्नुदग

ग्रेपवित्रेनिधायाज्यंविलीनमप्यग्नावधिश्रित्यतस्मिन्नाज्यमानीयाग्नेरुत्तरतःस्थितानंगारानग्नेरुदक्परिस्तरणाद्बहिर्निरू
ह्यतेष्वाज्यमधिश्रित्याभिद्योतनकुशद्वयेनाभिद्योत्यापउपस्पृश्य॥अथकुशद्वयेनाज्यंहविश्चत्रिःपर्यग्निकृत्वाज्यपात्रंकर्षन्नि
वोदगुद्वास्यांगारानग्नौप्रत्यस्य तत्रस्थमेवाज्यमुदीचीनाग्राभ्यांपवित्राभ्यामंगुष्ठोपकानिष्ठिकाभ्यामुत्तानाभ्यांपाणिभ्यां
पुरस्तादारभ्यपश्चादानीय पुनःपुरस्तादाहरतिसएकःपुनराहार एवंत्रिः कृत्वापवित्रेउद्धरति॥तदेकमुत्पवनमेवंत्रिवार
मुत्पूयविस्रस्यपवित्रेद्भिस्संसृज्यप्राग्रेपवित्रेग्नावनुप्रहरति॥अथाग्नेः पश्चात्परिस्तरणाद्बहिरात्मनोग्रतोभुवंप्रोक्ष्यत
स्मिन्बर्हिरुसन्नहनंप्रागुदगग्रंप्रसार्य्यतस्मिन्बर्हिस्संसृज्यस्तीर्य्य ॥आज्यपात्रंनिधायदक्षिणेनहस्तेनस्रुवंदर्वींमेक्षणंचगृही
त्वावामेनकुशद्वयमादायसहैवाग्नौप्रतितप्यदर्भाग्राभ्यांबिलंमध्याभ्यांपृष्ठंमूलाभ्यांदंडमितित्रिस्त्रिस्संमृज्याद्भिस्संसृज्यस्पृ
श्यपुनर्निष्टप्यप्रोक्ष्याज्यस्थाल्याउत्तरतोनिदधाति एवंदर्वींस्रुचंचसंमृज्यतदुत्तरतोनिधायमेक्षणंगृहीत्वाग्राभ्यामग्रंमध्या
भ्यांमध्यंमूलाभ्यांमूलंचसंमृज्यचरौनिदधाति दर्भानद्भिरुसंसृज्यस्पृश्याग्नावनुप्रहरति॥अथस्रुवेणचरुमभिघार्योदगुद्वास्या
ग्र्याज्यमध्येचस्थापयन्नाज्यस्यदक्षिणतोबर्हिषिप्रतिष्ठाप्याभिघारयति॥अरत्निमात्रान्परिधींस्थंडिलान्नत्र्यंगुलिमितेदेशेप
रिदधाति मध्यमपरिधिरुदगग्रस्तस्योपरिदक्षिणतःप्रागग्रस्तस्याधउत्तरतःप्रागग्रः॥ द्वेऊर्ध्वसमिधावाग्नेयेशान्ययोर्निपा
त्याग्निधायप्रागादिप्रदक्षिणमग्निंपरिसमूहति॥ॐजुषस्वनस्समिधमग्नेअद्यशोचाबृहद्यजतंधूममृण्वन्॥उपस्पृशदिव्यंसा
नस्तूपैस्संरश्मिभिस्ततनस्सूर्यस्य॥इतिस्थंडिलाद्दशांगलिमितेदेशेपरिध्यंतः प्रदक्षिणमग्निंपरिषिंचति॥अदितेनमन्यस्वे

तिदक्षिणतः॥प्राचीनमनुमतेनमन्यस्वेति पश्चादुदीचीनगुँसरस्वतेनुमन्यस्वेत्युत्तरतःप्राचीनं॥ देवसवितःप्रसुवेतिप्रागा
दिसमंतात्प्रदक्षिणमग्निंपरिषिच्य स्थंडिलादेकादशांगुलिमितेदेशेगंधपुष्पाक्षतैः प्रागाद्यष्टदिक्षुप्रदक्षिणमाग्निमलंकरो
ति॥ॐअग्नयेनमः ॥ जातवेदसेनमः ॥ सहोजसेनमः ॥ अजिराप्रभवेनमः ॥वैश्वानरायनमः ॥नर्यापसेनमः ॥ पांक्ति
राधसेनमः ॥ विसर्पिणेनमः ॥ इतियज्ञेश्वरायनमः ॥ गंधपुष्पाक्षतान्समर्पयामि ॥ अग्निंप्रज्वलितंवंदेजातवेदंहुताश
नं ॥ सुवर्णवर्णमनलंसमिद्धंविश्वतोमुखं ॥ एकंद्वेत्रीणीत्यादिभिः पंचदशसमिधोगणयित्वा एकांसमिधंप्रणीतादेशेनि
धायरज्जुनारुफ्यगुँसंवेष्ट्याग्निमलंकृत्येध्मामलंकृत्यस्वयमलंकृत्यब्रह्माणमलंकृत्येध्माग्रमध्यमूलान्यभिघार्य ॥ ॐचत्वा
रिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्यागुँआविवेश॥इत्यग्निंध्यात्वाप्र
जापतिंमनसाध्यायन्त्स्वाहेति इध्मंहुत्वाप्रजापतयइदंनमम॥अथाघारावाघारयति प्रजापतयेस्वाहा ॥ प्रजापतयइदंन
मम॥इतिमनसोत्तरपरिधिसंधिमारभ्यसंततमृजुमक्ष्णयाग्निमध्यपर्यंतंस्रुवेणजुहोति॥अथेध्मसन्नहनेरुफ्येनसंगृह्यमध्य
मपरिधिमूलादारभ्याग्रपर्यंतंत्रिस्त्रिस्संमार्ष्टि ॥ततोग्नेःपुरस्तादानीयदक्षिणपरिधिंतथैवसंमृज्यतथैवप्रत्यानीयोत्तरपरि
धिंतथैवसंमार्ष्टि ॥ तथैवाग्निंत्रिः प्राचीनगुँसंमृज्यपूर्ववत्प्रणीतापात्रेनिधाय ॥ ॐइंद्रायस्वाहा ॥ इंद्रायेदं ॥ इत्युपा
गुँशुदक्षिणपरिधिसंधिमारभ्याग्निमध्यपर्यंतंपूर्ववद्धुत्वाथाज्यभागौजुहोति ॥ ॐअग्नयेस्वाहा ॥ अग्नयइदं ॥ इत्युत्त
रार्धपूर्वार्धेप्रतिमुखं प्रबाहुग्जुहोति॥ ॐसोमायस्वाहा ॥ सोमायइदं ॥ इतिदक्षिणार्द्धपूर्वार्द्धेप्रतिमुखंप्रबाहुग्जुहोति

अथाग्निमुखंजुहोति ॥ ॐयुक्तोवहजातवेदःपुरस्तादग्नेविद्धिकर्मंक्रियमाणंयथेदं ॥ त्वंभिषग्भेषजस्यासिकर्तात्वयागा अश्वान्पुरुषान्त्सनेमिस्वाहा ॥ जातवेदसेऽग्नयइदं ॥ १ ॥ ॐचतस्त्रआशाःप्रचरंत्वग्नयइमन्नोयज्ञन्नयतुप्रजानन् ॥ घृतं पिन्वन्नजरगुँसुवीरंब्रह्मसमिद्भवत्याहुतीनागुँस्वाहा ॥ घृतंपिन्वतेऽग्नयेजिरायब्रह्मणइदं॥ २॥ॐआनोभद्राःक्रतवोयंतुवि श्वतोदब्धासोअपरीतासउद्भिदः॥देवानोयथासदमिद्वृधेसन्नप्रायुवोरक्षितारोदिवेदिवेस्वाहा ॥असन्नप्रायुभ्योरक्षितृभ्यः क्रतुभ्योदेवेभ्यइदं ॥ ३ ॥ ॐविरूपाक्षमाविबाधिष्ठामाविबाधविबाधिथाः ॥ निर्ऋत्यैत्वापुत्रमाहुस्सनःकर्माणिसाधय स्वाहा ॥ विरूपाक्षायनिर्ऋतिपुत्रायेदं ॥४॥ ॐविरूपाक्षमहंयजेनिजंघगुँशबलोदरं ॥ योमायंपरिबाधतेश्रियैपुष्ट्यैच नित्यंदातस्मैस्वाहा॥ विरूपाक्षायनिजंघायशबलोदरायमांपरिबाधमानायश्रियैपुष्ट्याइदं ॥५॥ॐयातिरश्चीनिपद्यसेहं विधरणीइति ॥ तांत्वाघृतस्यधारयाग्नौसगुँराधनीयजेस्वाहा ॥ ६ ॥ ॐतिर्यङ्ङि पद्यमानायैविधरिण्यैसगुँराधिन्याइदं॥ सगुँराधन्यैदेव्यैस्वाहा॥सगुँराधन्यैदेव्याइदं॥७॥प्रसाधिन्यैदेव्यैस्वाहा॥प्रसाधिन्यैदेव्याइदं ॥८॥ ॐभूःस्वाहा॥अग्नय इदं॥९॥ॐभुवःस्वाहा॥वायवइदं॥१०॥ॐस्वःस्वाहा॥सूर्य्यायइदं ॥११॥ ॐभूर्भुवस्स्वःस्वाहा॥प्रजापतयइदं॥ १२ ॥ अथचरुप्रायश्चित्तं॥ॐअग्नयेस्वाहा॥अग्नयइदं ॐयमायस्वाहा ॥यमायइदं॥अपउपस्पृश्य ॥ ॐवरुणायस्वाहा॥वरुणा येदं ॥ ॐसोमायस्वाहा ॥ सोमायेदं ॥ ॐनिर्ऋतयेस्वाहा॥निर्ऋतयइदं ॥ अपउपस्पृश्य॥ ॐवायवेस्वाहा वायवइदं ॥ ॐईशानायस्वाहा ॥ ईशानायेदं ॥ अथाज्येनचरुमाप्यायर्यति ॥ ॐआप्यायस्व ॥ संगथे ॥ ॐसंतेपयागुँसिसमु

यंतुवाजास्संवृष्णियान्यभिमातिषाहः ॥ आप्यायमानोअमृतायसोमदिविश्रवागुँस्युत्तमानिधिष्वेतिद्वाभ्यां ॥ अथस्त्रु
वेणदर्व्यामुपस्तीर्य्यपूर्वार्धाच्चरोरंगुष्ठपर्वमात्रमवदायापरार्धादवद्यति ॥ पंचावत्तिनांतु ॥ मध्यात्पूर्वार्धादपरार्धादिति
क्रमेणत्रिरवदानं ॥ द्वितीयाद्यवदानेतु ॥ अपरार्धादवदायपूर्वार्धादवद्यति ॥ पंचावत्तिनांतु मध्यादपरार्धात्पूर्वार्धादि
तित्रिरवदायाभिघार्य ॥ पात्रस्थचरुमध्यवत्तदेशक्रमेणाभिघार्यपुरस्तात्स्रुवाहुतिंहुत्वा ॥ तत्तदुक्तकर्मप्रधानदेवतायै
तत्तन्मंत्राभ्यांयाज्यापुरोनुवाक्यानुधर्मेणपक्वंहुत्वा ॥ अथअनाम्नातेषु ॥ ॐभूर्भुवस्सुवरों तत्सवितुः ० प्रचोदयात्स्वा
हा ॥ सवित्रइदं ॥ यत्रैकएवमंत्रस्तत्रतंयाज्यानुवाक्यार्थंद्विवारमुक्त्वा पूर्वमंत्रस्यांत्यस्वरादिस्थानेप्रणवंसंयोज्यप्लुतमु
क्त्वांत्यमंत्रस्यार्धर्चेवसायमंत्रांतेजुहुयात् ॥ सर्वत्रस्वाहांतअकारेहोमः ॥ नत्वाकारात्पूर्वं ॥ वत्साभिदाआर्षिणषेणाजा
मदग्न्याइत्येतेपंचावत्तिनः ॥ इतिपक्वंहुत्वा अथतत्कर्मोक्तप्रकारेणसमिच्चर्वाज्यतिलादिकंतत्तदुक्तमंत्रेणजुहुयात् ॥ स
र्वत्रमंत्रादौप्रणवमुक्त्वास्वाहांतेजुहुयात् ॥ चरुहोमाभावेपक्वहोमानंतरंस्रुवेणदर्व्यामुपस्तीर्य्य बिल्वफलप्रमाणंस्विष्टकृ
तमुत्तरार्धात्सकृदवदायद्विरभिघार्य्यपंचावत्तिनांतुत्रिरभिघारणं ॥ नप्रत्यनक्तिभंतःपरिधिस्सादयित्वातत्तदुक्तमंत्रैराज्यंहु
त्वा तस्याप्यभावेव्याहृतिभिराज्यमुपहुत्य पुरस्तात्स्रुवाहुतिंहुत्वा ॥ ॐहव्यवाहमभिमातिषाहगुँरक्षोहणंपृतनासु
जिष्णुं ॥ ज्योतिष्मंतंदीद्यतंपुरंधिमग्निगुँस्विष्टकृतमाहुवेमगुँ स्विष्टमग्ने अभितत्पृणाहिविश्वादेवपृतनाअभिष्य ॥ उरु
न्नः पंथांप्रदिशन्विभाहिज्ज्योतिष्मद्धेह्यजरन्नआयःस्वाहा ॥ अग्नयेस्विष्टकृतइदं॥इत्युत्तरार्धपूर्वार्धेतिहायपूर्वमाहुतिंहु

त्वामेक्षणमग्नौ प्रहृत्य स्रुचिचतुर्गृहीतंगृहीत्वास्रुवेणाज्यमादायद्वाभ्यांजुहोति ॥देवेभ्यःस्वाहा॥देवेभ्यइदं॥अथदर्व्यामुद कंपूरयित्वांतःपरिधि उत्तरपरिधिसंधिमारभ्यदक्षिणसंधिपर्यंतंनिनयति ॥ॐवैश्वानरेहविरिदंजुहोमिसहस्रमुत्सगुँशत धारमेतं ॥ सनःपितरंपितामहंप्रपितामहगुँस्वर्गेलोकेगच्छतुपिन्वमानगुँस्वधानमः ॥ इत्यथापउपस्पृश्य ॥ पुनःपूरयि त्वा बहिःपरिध्युदीचीनंनिनयति ॥ इमगुँसमुद्रगुँशतधारमुत्संव्यच्यमानंभुवनस्यमध्ये॥घृतंदुहानामदितिंजनायाग्ने माहिगुँसीःपरमेव्योमन्नित्यनुयाजसामिधमाधाय केवलेनेध्मसन्नहनेनपरिधीनग्निंचपूर्ववत्सकृत्सकृत्संमृज्य इध्मसन्नहनं विस्रस्याद्भिस्सगुँस्पृश्य रुद्रायपशुपतयेस्वाहा ॥ रुद्रायपशुपतयइदं ॥ इतिहुत्वापउपस्पृश्य॥एतत्कर्मसमृद्ध्यर्थंजया दिहोमंकरिष्ये ॥ इतिसंकल्प्य ॥ ॐयन्मआत्मनोमिंदाभूदग्निस्तत्पुनराहार्जातवेदाविचर्षणिःस्वाहा ॥ जातवेदसेवि चर्षणयइदं॥ॐपुनरग्निश्चक्षुरदात्पुनरिंद्रोबृहस्पतिः॥पुनर्मेअश्विनायुवंचक्षुराधत्तमक्ष्योःस्वाहा ॥ अग्नींद्रबृहस्पत्यश्वि भ्यइदं॥अथचित्तंचेत्यादित्रयोदशजयादिमंत्राणांविश्वेदेवाऋषयः॥लिंगोक्तादेवताः आज्यहोमेविनियोगः॥ॐचित्तंचस्वा हा॥चित्तायेदं॥ॐचित्तिश्चस्वाहा॥चित्त्याइदं॥ॐआकूतंचस्वाहा॥अकूतायेदं॥ॐआकूतिश्चस्वाहा ॥ आकूत्याइदं॥ॐवि ज्ञातंचस्वाहा ॥ विज्ञातायेदं ॥ ॐविज्ञानंचस्वाहा ॥ विज्ञानायेदं ॥ ॐमनश्चस्वाहा ॥मनसइदं॥ॐशक्वरीश्चस्वाहा ॥शक्वरीभ्यइदं ॥ ॐदर्शश्चस्वाहा ॥ दर्शायेदं॥ॐपूर्णमासश्चस्वाहा ॥ पूर्णमासायेदं ॥ ॐबृहच्चस्वाहा ॥बृहतइदं ॥ ॐरथंतरंचस्वाहा ॥ रथंतरायेदं ॥ॐप्रजापतिर्जयानिंद्रायवृष्णेप्रायच्छदुग्रःपृतनाज्येषुतस्मैविशस्समनमंतस्सर्वास्स

उग्रस्सहिहव्योबभूवस्वाहा ॥ प्रजापतयइदं॥ ॐयन्मआत्मनः *॥*ॐपुनरग्निः *॥* अग्निभूतानामितिसप्तदशाभ्याता
नाविश्वेदेवाऋषयः ॥ लिंगोक्तादेवताआज्यहोमेविनियोगः ॥ ॐअग्निभूतानामधिपतिस्समावत्वस्मिन्ब्रह्मन्नस्मिन्
क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मन्नस्यांदेवहूत्यागुँस्वाहा ॥ अग्नयेभूतानामधिपतयइदं ॥ १ ॥ ॐ इंद्रोज्ज्ये
ष्ठा ॐ स्वाहा॥इंद्रायज्येष्ठानामधिपतयइदं॥२॥ॐयमःपृथिव्या ॐ स्वाहा ॥ यमायपृथिव्याअधिपतयइदं ॥ ३ ॥
अपउपस्पृश्य॥ॐवायुरंतरिक्षस्या ॐ स्वाहा ॥ वायवेंतरिक्षस्याधिपतयइदं ॥४॥ॐसूर्योदिवो ॐ स्वाहा ॥ सूर्यायदि
वोधिपतयइदं ॥ ५ ॥ ॐचंद्रमानक्षत्राणा ॐ स्वाहा ॥ चंद्रमसेनक्षत्राणामधिपतयइदं ॥ ६ ॥ ॐबृहस्पतिर्ब्रह्मणोधि
पतिः ॐ स्वाहा ॥ बृहस्पतेब्रह्मणोधिपतयइदं ॥ ७ ॥ ॐमित्रस्सत्याना ॐ स्वाहा ॥ मित्रायसत्यानामधिपतयइदं
॥८ ॥ ॐवरुणोपा ॐ स्वाहा ॥ वरुणायापामधिपतयइदं ॥ ९ ॥ ॐसमुद्रस्स्त्रोत्याना ॐ स्वाहा ॥समुद्रायस्त्रोत्या
नामधिपतयइदं ॥ १० ॥ ॐअन्नगुँसाम्राज्याना ॐ स्वाहा ॥ अन्नायसाम्राज्यानामधिपतिनइदं ॥ ११ ॥
ॐसोमओषधीना ॐ स्वाहा ॥ सोमायौषधीनामधिपतयइदं ॥ १२ ॥ ॐसविताप्रसवाना ॐ स्वाहा ॥ सवित्रेप्रस
वानामधिपतयइदं॥१३॥रुद्रःपशूना ॐ स्वाहा॥रुद्रायपशूनामधिपतयइदं॥१४॥अपउपस्पृश्य ॥ ॐत्वष्टारूपाणा ॐ
स्वाहा॥त्वष्ट्रेरूपाणामधिपतयइदं ॥ १५ ॥ ॐविष्णुःपर्वताना ॐ स्वाहा॥विष्णवेपर्वतानामधिपतयइदं ॥१६॥ॐमरु
तोगणानामधिपतयस्तेमावंत्वस्मिन् ॐ स्वाहा॥ मरुद्भ्योगणानामधिपतिभ्यइदं ॥ १७ ॥ ॐपितरःपितामहाःपरेव

रेततास्ततामहाइहमावत् ॥अस्मिन्ब्रह्मन्नस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मन्नस्यांदेवहूत्यां ॥ इतिसप्तदश
स्वपिहोमांतेप्रातिमंत्रंजपेत् ॥ इहमावतेत्यंतं ॥ प्रतिहोमंवासप्तदशांतेवाजपेदितिविष्णुभट्टः ॥ जुहुयादितिविश्वपतिः
॥ तच्चिंत्यं ॥ तथाचगृह्यसूत्रे ॥ अग्निर्भूतानामधिपतिस्समावत्स्वाहेंद्रोज्ज्येष्ठानामधिपतिस्समावत्स्वाहेतिसप्तदशस्त्रु
वाहुतीर्हुत्वावाचयति ॥ पितरः पितामहाइहमावतेत्यंतादनुवाकस्येति ॥ कारिकायां ॥ अनुषंगोधिपतिस्सइत्यादिस्या
च्चतुष्पदैः ॥ अस्मिन्ब्रह्मंस्ततोब्रूयादितिसप्तदशस्वपि ॥ जपेत्पितरइत्यादियजुर्होमेहुतेहुते ॥ यद्वापितरइत्यादिमंत्र
स्सर्वोजपेभवेदिति ॥ प्रयोगतिलकेप्येवं ॥ अंतःप्रतिमंत्रमावृत्तिःकर्तव्या ॥ होमपक्षेसप्तदशाभ्यातानांनित्यस्यव्या
घातःस्यात् ॥ अतिरिक्तत्वापत्तेश्च ॥ अतःपितरःपितामहाइत्यादिदेवहूत्यामित्यंतंसप्तदशस्वपिहोमांतेप्रातिमंत्रंप्रा
चीनावीतीदक्षिणांदिशंपश्यन्जपति ॥ अपउपस्पृश्य ॥ मिंदाहुतीर्हुत्वा ॥ ऋताषाडित्यादिद्वाविंशतिमंत्राणांवि
श्वेदेवाऋषयः ॥ लिंगोक्तादेवताः आज्यहोमेविनियोगः ॥ ॐऋताषाडृतधामाग्निर्गंधर्वस्सइदंब्रह्मक्षत्रंपातुत
स्मैस्वाहा ॥ऋतासहऋतधाम्नेग्नयेगंधर्वायतस्माइदं ॥ १ ॥ ॐतस्यौषधयोप्सरसऊर्जोनामताइदंब्रह्मक्षत्रंपांतु
ताभ्यःस्वाहा ॥ ओषधीभ्योप्सरोभ्यऊर्ग्भ्यस्ताभ्यइदं ॥ २ ॥ ॐसंहितोविश्वसामासूर्योगंधर्वस्सइदंब्रह्मक्षत्रंपातुत
स्मैस्वाहा ॥ संहितायविश्वसाम्नेसूर्यायगंधर्वायतस्माइदं ॥ ३ ॥ ॐतस्यमरीचयोप्सरसआयुवोनामताइदंब्रह्मक्ष
त्रंपांतुताभ्यःस्वाहा ॥ मरीचिभ्योप्सरोभ्यआयुभ्यस्ताभ्यइदं ॥ ४ ॥ ॐसुषुम्नस्सूर्य्यरश्मिश्चंद्रमागंधर्वस्सइदंब्रह्म

क्षत्रंपातुतस्मैस्वाहा ॥ सुषुम्नायसूर्यरश्मयेचंद्रमसेगंधर्वायतस्माइदं ॥ ५ ॥ ॐतस्यनक्षत्राण्यप्सरसोबेकुरयोनाम
ताइदंब्रह्मक्षत्रंपांतुताभ्यःस्वाहा ॥ नक्षत्रेभ्योप्सरोभ्योबेकुरिभ्यस्ताभ्यइदं ॥ ६ ॥ ॐभुज्युस्सुपर्णोयज्ञोगंधर्वस्सइ
दंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ भुज्यवेसुपर्णाययज्ञायगंधर्वायतस्माइदं ॥ ७ ॥ ॐतस्यदक्षिणाअप्सरसस्तवानामता
इदंब्रह्मक्षत्रंपांतुताभ्यः स्वाहा ॥ दक्षिणाभ्योप्सरोभ्यःस्तवाभ्यस्ताभ्यइदं ॥ ८ ॥ ॐप्रजापतिर्विश्वकर्मामनोगंधर्व
स्सइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ प्रजापतयेविश्वकर्मणेमनसेगंधर्वायतस्माइदं ॥ ९ ॥ ॐतस्यक्सामान्यप्सरसोवन्ह
योनामताइदंब्रह्मक्षत्रंपांतुताभ्यःस्वाहा ॥ ऋक्सामेभ्योप्सरोभ्योवन्हिभ्यस्ताभ्यइदं ॥ १० ॥ ॐइषिरोविश्वव्यचा
वातोगंधर्वस्सइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ इषिरायविश्वव्यचसेवातायगंधर्वायतस्माइदं ॥ ११ ॥ ॐतस्यापोप्स
रसोमुदानामताइदंब्रह्मक्षत्रंपांतुताभ्यःस्वाहा ॥ अद्भ्योप्सरोभ्योमुदाभ्यस्ताभ्यइदं ॥ १२ ॥ ॐभुवनस्यपतेयस्य
तउपरिगृहाइहच ॥ सनोरास्वाज्यानिगुँरायस्पोषगुँसुवीर्यगुँसंवत्सरीणागुँस्वस्तिगुँस्वाहा ॥ भुवनस्यपत्याइदं ॥ १३
ॐपरमेष्ठ्यधिपतिर्मृत्युर्गंधर्वस्सइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ परमेष्ठिनेधिपतयेमृत्यवेगंधर्वायतस्माइदं ॥ १४ ॥
ॐतस्यविश्वमप्सरसोभुवोनामताइदंब्रह्मक्षत्रंपांतुताभ्यःस्वाहा ॥ विश्वस्माअप्सरोभ्योभूभ्यस्ताभ्यइदं ॥ १५ ॥ ॐ
गुँसुक्षितिस्सुभूतिर्भद्रकृत्सुवर्वान्पर्जन्योगंधर्वस्सइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ सुक्षितयेसुभूतयेभद्रकृतेसुवर्वतेपर्जन्या
यगंधर्वायतस्माइदं ॥ १६ ॥ ॐतस्याविद्युतोप्सरसोरुचोनामताइदंब्रह्मक्षत्रंपांतुताभ्यःस्वाहा ॥ विद्युद्भ्योप्सरोभ्यो

रुभ्यस्ताभ्यइदं ॥ १७ ॥ ॐ दूरेहेतिरमृडयोमृत्युर्गंधर्वस्सइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ दूरेहेतयेअमृडयायमृत्यवे गंधर्वायतस्माइदं ॥ १८ ॥ ॐ तस्यप्रजाअप्सरसोभीरुवोनामताइदंब्रह्मक्षत्रंपांतुताभ्यःस्वाहा ॥ प्रजाभ्योप्सरोभ्यो भीरुभ्यस्ताभ्यइदं ॥१९॥ॐ चारुःकृपणकाशीकामोगंधर्वस्सइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ चारवेकृपणकाशिनेकामा यगंधर्वायतस्माइदं ॥ २० ॥ॐ तस्याधयोप्सरसश्शोचयंतीर्नामताइदंब्रह्मक्षत्रंपांतुताभ्यःस्वाहा ॥ आधिभ्योप्सरो भ्यश्शोचयंतीभ्यस्ताभ्यइदं ॥ २१ ॥ ॐसनोभुवनस्यपतेयस्यतउपरिगृहाइहच ॥ उरुब्रह्मणेस्मैक्षत्रायमहिशर्मय च्छस्वाहा ॥ भुवनस्यपत्येब्रह्मणइदं ॥ २२ ॥ ॐ यन्मआत्मनः ॥ ॥ पुनरग्निः ॥ अथामात्यहोमः ॥ ॐयद्देवादे वहेडनंदेवासश्चकृमावयं ॥ आदित्यास्तस्मान्मामुंचतर्तस्यर्तेनमामुतस्वाहा ॥ देवेभ्यआदित्येभ्यइदं ॥ १॥ ॐदेवाजी वनकाम्यायद्वाचानृतमूदिम ॥ अग्निर्मातस्मादेनसोगार्हपत्यः प्रमुंचतुदुरितायानिचकृमकरोतुमामनेनसगुँस्वाहा ॥ अग्नयेगार्हपत्याइदं ॥२॥ ॐऋतेनद्यावापृथिवीऋतेनत्वगुँसरस्वती ॥ ऋतान्मामुंचतागुँहसोयदन्यकृतमारिमस्वाहा ॥ द्यावापृथिवीभ्यागुँसरस्वत्याइदं ॥३॥ ॐसजातशगुँसादुतवाजामिशगुँसाज्ज्यायसश्शगुँसादुतवाकनीयसः ॥ अ नाज्ञातंदेवकृतंयदेनस्तस्मात्त्वमस्मान्जातवेदोमुमुग्धिस्वाहा ॥ जातवेदसइदं ॥ ४ ॥ ॐ यद्वाचायन्मनसावा हुभ्यामूरुभ्यामष्ठीवद्भ्यागुँशिश्नैर्यदनृतंचकृमावयं ॥ अग्निर्मातस्मादेनसोगार्हपत्यः प्रमुंचतुदुरितायानिचकृमकरोतुमा मनेनसगुँस्वाहा ॥ अग्नयेगार्हपत्यायेदं ॥ ५ ॥ ॐयद्धस्ताभ्यांचकरकिल्बिषाण्यक्षाणांवग्नुमुपजिघ्रमानः ॥ दूरेपश्या

चराष्ट्रभृद्व्रतान्यप्सरसावनुदत्तामृणानिस्वाहा ॥ दूरेपश्यायैराष्ट्रभृतेप्सरोभ्यामिदं ॥ ६ ॥ ॐअदीव्यन्नृणंयदहंचकार यद्वादास्यन्त्संजगाराजनेभ्यः ॥अग्निर्मातस्मा* स्वाहा॥अग्नयेगार्हपत्यायेदं॥७॥ॐयन्मयिमातागर्भेसत्येनश्चकारयत्पि ता ॥ अग्निर्मातस्मा * स्वाहा ॥ अग्नयेगार्हपत्यायेदं ॥ ८ ॥ ॐयदापिपेषमातरंपितरंपुत्रः प्रमुदितोधयन् ॥ अहि गुँसितौपितरौमयातत्तदग्नेअनृणोभवामिस्वाहा ॥ अग्नयइदं ॥ ९ ॥ ॐयदंतरिक्षंपृथिवीमुतद्यांयन्मातरंपितरंवाजहि गुँसिम ॥ अग्निर्मातस्मा * स्वाहा ॥ अग्नयेगार्हपत्यायेदं ॥ १० ॥ ॐयदाशसानिशसायत्पराशसा ॥ यदेनश्च कृमानूतनंयत्पुराणं ॥ अग्निर्मातस्मा * स्वाहा ॥ अग्नयेगार्हपत्यायेदं ॥ ११ ॥ ॐअतिक्रामामिदुरितंयदेनोजहामि रिप्रंपरमेसधस्थे ॥ यत्रयंतिसुकृतोनापिदुष्कृतस्तमारोहामिसुकृतांल्लोकगुँस्वाहा ॥ अग्नयेसुकृतांल्लोकायेदं ॥ १२ ॥ ॐत्रितेदेवाअमृजतैतदेनस्त्रितएतन्मनुष्येषुमामृजे ॥ ततोमायतिकिंचिदानशेग्निर्मातस्मा * स्वाहा ॥ अग्नयेगार्हपत्या येदं ॥ १३ ॥ ॐदिविजाताअप्सुजातायाजाताओषधीभ्यः ॥ अथोयाअग्निजाआपस्तानश्शुंधंतुशुंधनीःस्वाहा ॥ अद्भ्यश्शुंधनीभ्यामिदं ॥ १४ ॥ ॐयदापोनक्तंदुरितंचरामयद्वादिवानूतनंयत्पुराणं ॥ हिरण्यवर्णास्ततउत्पुनीतनः स्वाहा ॥ अद्भ्योहिरण्यवर्णाभ्यइदं ॥ १५ ॥ ॐइमंमेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचकेस्वाहा ॥ वरुणा येदं ॥ १६ ॥ ॐतत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोद्ध्युरुशगुँसमानआ युःप्रमोषीःस्वाहा ॥ वरुणायेदं ॥ १७ ॥ ॐत्वन्नोअग्नेवरुणस्यविद्वान्देवस्यहेडोवयासिसीष्ठाः ॥ यजिष्ठोवन्हितमः

शोशुचानोविश्वाद्वेषागुँसिप्रमुमुग्ध्यस्मत्स्वाहा ॥ अग्निवरुणाभ्यामिदं ॥ १८ ॥ ॐसत्वन्नोअग्नेवमोभवोतीनेदिष्ठोअ
स्याउषसोव्युष्टौ ॥ अवयक्ष्वनोवरुणगुँरराणोवीहिमृडीकगुँसुहवोनएधिस्वाहा ॥ अग्निवरुणाभ्यामिदं ॥ १९ ॥ ॐत्वम
ग्नेअयास्ययासन्मनसाहितः ॥ अयासन्हव्यमोहिषेयानोधेहिभेषजगुँस्वाहा ॥ अग्नयेअयसइदं ॥ २० ॥ ॐप्रजा
पतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवयगुँस्यामपतयोरयीणागुँस्वाहा ॥ प्रजा
पतयइदं ॥ २१ ॥ अथेध्मप्रवृश्चनान्यभ्याधाय ॥ अथप्रायश्चित्ताहुतीर्जुहोति ॥ द्रव्यहविर्मंत्रसंस्काराणांचतुर्णांमध्ये
अन्यतमदोषस्यनित्यत्वात्तन्निमित्तप्रायश्चित्तहोमंकरिष्ये ॥ ॐमनोज्योतिर्जुषतामाज्यंविच्छिन्नंयज्ञगुँसमिमंदधातु ॥
॥२॥याइष्टाउषसोनिम्रुचश्चतास्संदधामिहविषाघृतेनस्वाहा॥मनसेज्योतिषउषोभ्योनिम्रुग्भ्यइदं ॥१॥ ॐअयाश्चाग्नेरन
भिशस्तीश्चसत्यमित्वमयाआसि॥अयासामनसाघृतोयासाहव्यमोहिषेयानोधेहिभेषजगुँस्वाहा ॥ अग्नयेअयसइदं॥ २॥
ॐयदस्मिन्कर्मन्यंतरगामिमंत्रतःकर्मतोवा॥अनयाहुत्यातच्छमयामिसर्वंतृप्यंतुदेवाअवसंताघृतेनस्वाहा॥देवेभ्यइदं॥३
ॐस्वस्तिनइंद्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः॥ स्वस्तिनस्तार्क्ष्योअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातुस्वाहा॥इंद्रा
यवृद्धश्रवसेपूष्णेविश्ववेदसेतार्क्ष्यायारिष्टनेमयेस्वस्तयेबृहस्पतयइदं ॥ ४ ॥ ॐतत्सवितुः ⁘ प्रचोदयात्स्वाहा॥सवित्रइ
दं॥५॥ॐयन्मआत्मनः॰॥॰पुनरग्निः ॰॥॰ ॐभूःस्वाहा ॥ अग्नयइदं ॥ ॐभुवःस्वाहा ॥ वायवइदं ॥ ॐ गुँसुवःस्वाहा ॥
सूर्यायेदं ॥ ॐभूर्भुवस्सुवस्स्वाहा ॥ प्रजापतयइदं ॥ ॐइष्टेभ्यःस्वाहा ॥ इष्टेभ्यइदं ॥ ॐवषडनिष्टेभ्यःस्वाहा ॥

वषडनिष्टेभ्यइदं ॥ ॐभेषजंदुरिष्टयैस्वाहा ॥ दुरिष्टयाइदं ॥ ॐनिष्कृत्यैस्वाहा ॥ निष्कृत्याइदं॥ ॐदौराध्यैस्वाहा ॥ दौराध्याइदं ॥ ॐदैवीभ्यस्तनुभ्यःस्वाहा ॥ दैवीभ्यस्तनुभ्यइदं ॥ ॐऋद्धयेस्वाहा ॥ ऋद्ध्याइदं ॥ ॐसमृद्ध्यै स्वाहा ॥ समृद्ध्याइदं ॥ ॐसर्वसमृद्ध्यैस्वाहा॥ सर्वसमृद्ध्याइदं ॥ॐयतइंद्रभयामहेततोनोअभयंकृधि ॥मघवंच्छ ग्धितवतन्नऊतयेविद्विषोविमृधोजहिस्वाहा ॥ अभयंकरेंद्रायेदं ॥ ॐस्वस्तिदाविशस्पतिर्वृत्रहाविमृधोवशी ॥ वृषेंद्रः पुरएतुनःस्वस्तिदाअभयंकरःस्वाहा ॥ अभयंकरेंद्रायेदं ॥ ॐआभिर्गीर्भिर्यदतोनऊनमाप्याययहरिवोवर्धमानः ॥ यदास्तोतृभ्योमहिगोत्रारुजासिभूयिष्ठभाजोअधतेस्यामस्वाहा ॥ हरिवतेवर्धमानायेदं ॥ ॐअनाज्ञातंयदाज्ञातंयज्ञ स्यक्रियतेमिथु ॥ अग्नेतदस्यकल्पयत्वँहिवेत्थयथातथँस्वाहा ॥ अग्नयइदं॥ॐपुरुषसंमितोयज्ञोयज्ञःपुरुषसंमितः ॥ अग्नेतदस्यकल्पयत्वँहिवेत्थयथातथँस्वाहा ॥अग्नयइदं॥ॐयत्पाकत्रामनसादीनदक्षानयज्ञस्यमन्वतेमर्तासः ॥अग्नि ष्टद्धोताक्रतुविद्विजानन्यजिष्ठोदेवाँऋतुशोयजातिस्वाहा ॥ अग्नयइदं ॥ ॐभूरग्नयेचपृथिव्यैचमहतेचस्वाहा ॥ अग्नये पृथिव्यैमहतइदं ॥ ॐभुवोवायवेचान्तरिक्षायचमहतेचस्वाहा ॥ वायवेंतरिक्षायमहतइदं ॥ ॐसुवरादित्यायचदिवे चमहतेचस्वाहा ॥ आदित्यायदिवेमहतइदं ॥ ॐभूर्भुवस्सुवश्चंद्रमसेचनक्षत्रेभ्यश्चदिग्भ्यश्चमहतेचस्वाहा॥ चंद्रमसे नक्षत्रेभ्योदिग्भ्योमहतइदं ॥ ॐपाहिनोअग्नएनसेस्वाहा ॥ अग्नयइदं ॥ ॐपाहिनोविश्ववेदसेस्वाहा ॥ विश्ववेदस इदं ॥ ॐयज्ञंपाहिविभावसोस्वाहा ॥ विभावसवइदं ॥ ॐसर्वंपाहिशतक्रतोस्वाहा ॥ शतक्रतवइदं ॥ ॐपाहिनोअ

ग्नएकया ॥ पाह्युतद्वितीयया ॥ पाह्यूर्जंतृतीयया ॥ पाहिगीर्भिश्चतसृभिर्वसोस्वाहा ॥ अग्नयइदं ॥ ॐसप्ततेअग्नेस
मिधःसप्तजिव्हास्सप्तर्षयस्सप्तधामप्रियाणि ॥ सप्तहोत्रास्सप्तधात्वायजंतिसप्तयोनीरापृणस्वाघृतेनस्वाहा ॥ अग्नये
सप्तवतइदं ॥ ॐपुनस्त्वादित्यारुद्रावसवस्समिंधतांपुनर्ब्रह्माणोवसुनीथयज्ञैः ॥ घृतेनत्वंतनुवोवर्धयस्वसत्यास्संतुयज
मानस्यकामाःस्वाहा ॥ आदित्येभ्योरुद्रेभ्योवसुभ्योब्रह्मभ्योवसुनीथायेदं ॥ इत्येकामाज्याक्तसमिधंहुत्वा ॥ पुनरेतयै
वस्रुवाहुतिंजुहुयात् ॥ इतिप्रयोगरत्नेप्रयोगतिलकेविश्वामित्रकारिकायामप्युक्तं ॥ ॐब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमत
स्सुरुचोवेनआवः ॥ सबुध्नियाउपमाअस्यविष्ठास्सतश्चयोनिमसतश्चविवःस्वाहा ॥ ब्रह्मणइदं ॥ ॐइदंविष्णुर्विचक्रमे
त्रेधानिदधेपदं ॥ समूढमस्यपाँसुरेस्वाहा ॥ विष्णवइदं ॥ ॐत्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिव
बंधनान्मृत्योर्मुक्षीयमामृतात्स्वाहा ॥ त्र्यंबकायेदं ॥ ॐगणानांत्वागणपतिँहवामहेकविंकवीनामुपमश्रवस्तमं ॥
ज्येष्ठराजंब्रह्मणांब्रह्मणस्पतआनश्शृण्वन्नूतिभिसीदसादनँस्वाहा ॥ गणपतयइदं ॥ ॐजातवेदसेसुनवामसो
ममरातीयतोनिदहातिवेदः ॥ सनःपरुषदतिदुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निःस्वाहा ॥ दुर्गायाइदं ॥ ॐ
ब्रह्मप्रतिष्ठामनसोब्रह्मवाचः ॥ ब्रह्मजज्ञानागँहविषामाज्यस्य ॥ अतिरिक्तंकर्मणोयच्चहीनं ॥ यज्ञःपर्वाणिप्रति
रन्नेतिकल्पयन्स्वाहा ॥ कृताहूतीरेतुदेवान्स्वाहा ॥ यज्ञायेदं ॥ ॐयद्वोदेवाअतिपादयानिवाचाचित्प्रयतंदेवहेडनं ॥
अरावायोनो अभिदुच्छुनायते ॥ अन्यत्रास्मिन्मरुतस्तन्निधेतनस्वाहा ॥ देवेभ्योमरुद्भ्यइदं ॥ ॐततंमआपस्तदुताय

तेपुनः ॥ स्वाधिष्ठाधीतिरुचथायशस्यते ॥ अयगुँसमुद्रउतविश्वभेषजःस्वाहा ॥ कृतस्यसमुत्पणुतर्भुवःस्वाहा ॥
ऋभुभ्यइदं ॥ ॐक्षेत्रस्यपतिनावयगुँहितेनेवजयामसि ॥ गामश्वंपोषयित्न्वासनोमृडातीदृशेस्वाहा॥ क्षेत्रपतयइदं ॥
ॐवास्तोष्पतेप्रतिजानीह्यस्मान्त्स्वावेशोअनमीवोभवानः ॥यत्त्वेमहेप्रतितन्नोजुषस्वशन्नएधिद्विपदेशंचतुष्पदेस्वाहा॥वा
स्तोष्पतयइदं ॥ॐविष्णोर्नुकंवीर्याणिप्रवोचंयः पार्थिवानिविममेरजागुँसि ॥ योअस्कभायदुत्तरगुँसधस्थंविचक्रमाणस्त्रे
धोरुगायःस्वाहा॥विष्णवइदं॥ॐतदस्यप्रियमभिपाथो अश्यान्नरोयत्रदेवयवोमदंति ॥ उरुक्रमस्यसहिबंधुरित्थाविष्णोः
पदेपरमेमध्वउत्सःस्वाहा ॥ विष्णवइदं ॥ ॐप्रतद्विष्णुस्तवतेवीर्याय ॥ मृगोनभीमः कुचरोगिरिष्ठाः ॥ यस्योरुषु
त्रिषुविक्रमणेषु ॥ अधिक्षियंतिभुवनानिविश्वास्वाहा ॥ विष्णवइदं ॥ ॐपरोमात्रयातनुवावृधानः ॥ नतेमहित्वमन्व
श्नुवंति ॥ उभेतेविद्मरजसीपृथिव्याः ॥ विष्णोदेवत्वंपरमस्यवित्सेस्वाहा ॥ विष्णवइदं ॥ ॐविचक्रमेपृथिवीमेषएतां
॥ क्षेत्रायविष्णुर्मनुषेदशस्यन् ॥ ध्रुवासोअस्यकीरयोजनासः ॥ उरुक्षितिगुँसुजानिमाचकारस्वाहा ॥ विष्णवइदं ॥ॐ
त्रिर्देवःपृथिवीमेषएतां ॥ विचक्रमेशतर्चसंमहित्वा ॥ प्रविष्णुरस्तुतवसस्तवीयान् ॥ त्वेषगुँह्यस्यस्थविरस्यनामस्वाहा॥
विष्णवइदं ॥ ॐयदस्यकर्मणोत्यरीरिचंयद्वान्यूनमिहाकरं ॥ अग्निष्टत्स्विष्टकृद्विद्वान्त्सर्वंगुँस्विष्टगुँसुहुतंकरोतुमेअग्नयेस्वि
ष्टकृतेसुहुतहुतआहुतीनांकामानागुँसमर्द्धयित्रेस्वाहा ॥ इत्युत्तरार्धपूर्वार्धे ॥ अग्नयेस्विष्टकृतइदं ॥ अथाज्येनपरिधीन्
मध्यमदक्षिणोत्तरक्रमेणानक्त्यथप्रागादिस्थितपरिस्तरणदर्भानादायआज्यस्थाल्यामग्रमध्यमूलानिसंमृज्यदर्भमेकं

पृथक्कृत्यदर्भत्रयंप्रांचमूर्ध्वाग्रमतिर्यंचमकंपयन्नग्रादारभ्यमूलांतंदाहयन्नेवप्रास्येत् ॥ पृथक्कृतमपितथैवप्रास्य मध्यमंपरि
धिमनुप्रहृत्य ॥ अथेतरौयुगपत्प्रहृत्य ऊर्ध्वेसमिधावपिप्रहृत्यतेषुसंस्रावंजुहोति तूष्णीं ॥ प्रजापतयइदं ॥ यत्तूष्णीं
तत्प्राजापत्यमितिश्रुतेः ॥ ॐतच्छंयोरावृणीमहे ॥ गातुंयज्ञाय ॥ गातुंयज्ञपतये ॥ दैवीस्वस्तिरस्तुनःस्वाहा ॥ शंयु
वाकायेदं ॥ ॐस्वस्तिर्मानुषेभ्यः ॥ ऊर्ध्वंजिगातुभेषजं ॥ शन्नोअस्तुद्विपदे ॥ शंचतुष्पदेस्वाहा ॥ शंयुवाकायेदं ॥
ॐसर्वप्रायश्चित्तंकरिष्ये ॥ ॐभूर्भुवस्सुवःस्वाहा ॥ प्रजापतयइदं ॥ अथपूर्णाहुतिः ॥ ॐदेवागातुविदोगातुंवित्वा ॥
गातुमितमनसस्पतइमन्नोदेवदेवेषुयज्ञंस्वाहा ॥ वाचिस्वाहा ॥वातेधास्स्वाहा ॥ देवेभ्योगातुविद्भ्योयज्ञायेदं ॥ ॐ
मूर्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतायजातमग्निं ॥ कविंसम्राजमतिथिंजनानामासन्नापात्रंजनयंतुदेवास्स्वाहा ॥
मूर्धाग्नयइदं॥ॐपूर्णाहुतिमुत्तमांजुहोति॥सर्वंवैपूर्णाहुतिः॥सर्वमेवाप्नोति॥अथोइयंपूर्णाहुतिः॥अस्यामेवप्रतितिष्ठति॥अथ
हुतशेषनिधानप्राशनाद्युपरिष्टात्तंत्राण्यप्यत्रैवकार्याणि ॥ अत्रकारिका ॥हुतशेषनिधानंचप्राशनंमूर्ध्निचाहुतिः ॥कुर्यात्क
र्मसमाप्तेःप्राक्परिषेकविसर्जनात् ॥ इति ॥ सर्वत्रानाम्नातेषुव्याहृत्याहुतशेषनिधानंप्राशनंचेतिप्रयोगसारे ॥ पुनर्जु
षस्वनइत्यादि॥अदितेन्वमंस्थाः॥अनुमतेन्वमंस्थाः॥सरस्वत्येन्वंस्थाः॥देवसवितःप्रासावीरितिपूर्ववत्प्रागादिपरि
षिच्याथोत्थायउपातिष्ठते॥ॐयत्तेअग्नेतेजस्तेनाहंतेजस्वीभूयासं॥यत्तेअग्ने वर्चस्तेनाहंवर्चस्वीभूयासं॥यत्तेअग्नेहरस्तेनाहं
हरस्वीभूयासं ॥ मयिमेधांमयिप्रजांमय्यग्निस्तेजोदधातु ॥ मयिमेधांमयिप्रजांमयींद्रइंद्रियंदधातु ॥ मयिमेधां

मयिप्रजांमयिसूर्यौभ्राजोदधातु ॥ इतिषड्भिरुपस्थायाथोपविश्य ॥ मानस्तोकेतनयेमानआयुषिमानोगोषुमानो अश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतोनमसाविधेमते ॥ इत्युपस्थायाथस्राग्वोदग्वाहुतभस्मगृहीत्वा ॥ ओजोसीतिललाटे ॥ सहोसीतिकंठे ॥ बलमसीतिदक्षिणबाहुमूले ॥ भ्राजोसीतिकंठपृष्ठे ॥ देवानांधामनामसी तिनाभौ ॥ विश्वमसिविश्वायुरितिहृदये ॥ सर्वमसिसर्वायुरभिभूरोमितिशिरसि ॥ इत्याभिमृश्य ॥ मंत्रहीनंक्रियाही नंभक्तिहीनंहुताशन ॥ यद्धुतंतुमयादेवपरिपूर्णंतदस्तुते ॥ अज्ञानाद्वाप्रमादाद्वावैकल्यात्साधनस्यवा ॥ यन्न्यूनमतिरिक्तं चतत्सर्वंक्षंतुमर्हसि ॥ श्रद्धांमेधांयशःप्रज्ञांविद्यांबुद्धिंश्रियंबलं ॥ आयुष्यंतेजआरोग्यंदेहिमेहव्यवाहन ॥ अन्यथाशर णंनास्तित्वमेवशरणंमम ॥ तस्मात्कारुण्यभावेनरक्षरक्षहुताशन ॥ इतिप्रार्थ्य ॥ प्रणीतापात्रमग्नेःपश्चाद्बर्हिषिनि धायमार्जयते ॥ सदसिसन्मेभूयास्सर्वमसिसर्वंमेभूयाःपूर्णमसिपूर्णंमेभूयाअक्षितमसिमामेक्षेष्ठाः ॥ प्राच्यांदिशिदेवा ऋत्विजोमार्जयंतां ॥ दक्षिणायांदिशिमासाःपितरोमार्जयंतां ॥ अपउपस्पृश्य ॥ प्रतीच्यांदिशिग्रहाःपशवोमार्जयंतां ॥ उदीच्यांदिश्यापओषधयोवनस्पतयोमार्जयंतां ॥ ऊर्ध्वायां दिशियज्ञस्संवत्सरोयज्ञपतिर्मार्जयतां ॥ इतिकुशाग्रैस्तत्तद्दिक्षु मार्जयित्वा ॥ समुद्रंवःप्रहिणोम्यक्षिताःस्वांयोनिमपिगच्छत ॥अच्छिद्रःप्रजयाभूयासंमापरासेचिमत्पयइति ॥ पराची र्निनीयताभिरद्भिःकुशाग्रैर्दंपतीप्रोक्षेत् ॥ अथवायजमानवामपार्श्वस्थितपत्न्यंजलौप्रणीतापात्रजलंप्राङ्मुखंनिषिच्यांज लिस्थजलैःपापनिरसनार्थंयजमानंपत्नींचप्रोक्षति ॥ पत्नीतज्जलंबर्हिषिनिषिंचाति ॥ अथवायजमानःस्ववामपाणिंब

र्हिषिनिधायोत्तानीकृत्यदक्षिणपाणिनाप्रणीतापात्रंगृहीत्वातज्जलंप्रत्यङ्मुखंनिषिच्य ताआपःसमुद्रंगच्छंतीतिध्यात्वा पाणिस्थजलैरात्मानंपत्नींचप्रोक्षेत् ॥ अथब्रह्मणेवरंददाति ॥ ब्रह्मन्वरंतेददामीति ( गामित्यर्थः )॥ यथाशक्तितन्मूल्यंवा दद्यात्॥अनुपविष्टेब्रह्मणिब्राह्मणमेकंभोजयित्वा यथाशक्तिदक्षिणांदत्वा सदस्येभ्यश्चदक्षिणांदत्वा ॥ यस्यस्मृत्याचना मोक्त्यातपोयज्ञक्रियादिषु ॥ न्यूनंसंपूर्णतां यातिसद्योवंदेतमच्युतं ॥ अनेनामुकहोमकर्मणाश्रीपरमेश्वरःप्रीयतां॥इतीश्व रार्पणंकृत्वा ॥ नमस्तेगार्हपत्यायनमस्तेदक्षिणाग्नये ॥ नमआह्वनीयायमहावेद्यैनमोनमः ॥ कांडद्वयमुपात्तायकर्म ब्रह्मस्वरूपिणे ॥ स्वर्गापवर्गदात्रेचयज्ञेशायनमोनमः ॥ इतिनमस्कृत्य ॥ प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् ॥ त द्विष्णोस्मरणादेवसंपूर्णस्यादितिश्रुतिः ॥ विष्णोविष्णोविष्णो इतिविष्णुस्मरणंकुर्यात् ॥ इतिसर्वसाधारणाग्निमुखप्र योगः ॥ ७ ॥ ७ ॥ अथाग्निहोत्रिकप्रयोगः ॥ अथदेवयजनोल्लेखनप्रभृत्यग्निप्रतिष्ठापनान्तंकृत्वा॥ प्राणानायम्यदेश कालौसंकीर्त्यामुककर्मकरिष्ये ॥ अमुकहोमःकर्म आग्निहोत्रिकंतंत्रं ॥ मृडोनामाग्निरितिपूर्णाहुतौ ॥अन्यत्र तत्रतत्रोक्ता ग्निः अमुकदेवता॥आज्यस्यमांत्रवर्णिक्योदेवता इत्यादिसंकल्प्यान्वाधानंकृत्वापात्रासादनकाले ॥ आज्यस्थालींस्रुवं चैवस्रुचंचसमिधंतथा ॥ कूर्चंप्रोक्षणपात्रंचसादयेद्वाग्निहोत्रिके ॥ इत्यासाद्यपवित्रकरणादिप्रोक्षण्याज्यसंस्कारस्रुक्सं मार्जनान्तंकृत्वास्रुचिचतुर्गृहीतंगृहीत्वाउपरिसमिधंनिधाय कूर्चेस्रुचंनिधाय ॥जुषस्वनइत्याद्यदितेनुमन्यस्वेत्यादिभिःप रिषिच्याग्नयेनमइत्यादिभिरभ्यर्च्य समिधमग्नौनिधायाद्यंतयोस्पृष्टातस्यामादीप्तायांयत्कर्मकरोतितस्यप्रधानमंत्रान्स

र्वान्सहैवानुच्छ्वसन्ननुद्रत्य याज्यानुवाक्यानुरूपंविनासर्वान्तेस्वाहाकारेसमिधोपरार्धेसकृदेवाधंजुहोति ॥ ततःस्रुचंसकृत्संताप्याथाग्नयेस्विष्टकृतेस्वाहेतिपूर्वमाहुतिमतिहाय समिध्येवपूर्वार्धेहुत्वाथस्रुचंत्रिस्संताप्यकूर्चेनिधाय प्रातःकालिने कर्मण्यूर्ध्वमुन्मृज्य प्राच्युत्तानेनपाणिनाकूर्चे लेपमुन्मार्ष्टि तूष्णीमुत्तरभागे॥अथचेदन्यकालिकंकर्म ॥प्राचीनावीतीतद्वैवाचीनमवमृज्य प्रतीच्यानीय पाणिनाकूर्चेलेपन्निमार्ष्टि तूष्णीमुत्तरभागेपउपस्पृश्य यज्ञोपवीतीद्विरंगुल्याप्राश्यापआचम्योदङ्मुखःप्राचीनदंडयास्रुचाहस्तेनवाभक्षयित्वापआचम्य दर्भैस्स्रुचंनिमृज्यानिष्टप्याद्भिःपूरयित्वापात्रेषुस्थापयित्वा सर्वप्रायश्चित्तार्थमिंदाहुतीर्व्याहृतीश्चहुत्वोत्तरपरिषेकादिकंकुर्यात् ॥ इत्याग्निहोत्रिकविधिः ॥ ७ ॥ अथापूर्विकं ॥ अथापूर्विकेस्थंडिलोल्लेखनाद्यग्निप्रतिष्ठापनान्तंकृत्वा संकल्प्यान्वाधायपात्रासादनकाले ॥आज्यस्थालींस्रुवंचैवचरुस्थालीं समेक्षणं ॥ दर्वींचप्रोक्षणींचैवचतस्रस्समिधस्तथा ॥एतान्यासाद्यपवित्रकरणादि हविर्निर्वापप्रोक्षणाज्यसंस्काराद्यलंकरणान्तंकृत्वा ताश्चतस्रस्समिधोभ्याधायव्याहृतीर्हुत्वापूर्ववद्धविरादाय तत्तदुक्तमंत्रैर्नाममंत्रैर्वापक्वंहुत्वापूर्ववत्स्विष्टकृतमवदाय यथागोत्रमभिधायाग्नयेस्विष्टकृतेस्वाहेतिनाममंत्रेणस्विष्टकृतंहुत्वा मिंदाहुतीर्व्याहृतीश्चहुत्वा परिस्तरणप्रहरणाद्युत्तरपरिषेकान्तंकृत्वासमापयेत्॥ नपरिधिर्नचब्रह्मानप्रणीतानबर्हिषः ॥ नचस्विष्टकृदादीनितंत्रमापूर्विकंस्मृतं॥एतेषांत्रयाणांतंत्राणांपरस्परसंकरंनकुर्यात् ॥ इत्यापूर्विकविधिः ॥ ७ ॥ अथापूर्वतंत्रंगृह्यसूत्रे ॥ अथातोपूर्वविधिंव्याख्यास्यामः ॥ परिसमूह्यपर्युक्ष्यपरिस्तीर्य परिषिच्योपसमाधायालंकृत्य यावदाम्नातमाज्याहुतीर्जुहोत्याद्यंतयोर्व्याहृतिभिराज्याहु

तिः परिधानंप्रणीताप्रणयनंब्रह्मोपवेशनंचनविद्यतइति इत्यापूर्विकविधिः ॥ ॥ इतिवेंकटेशीयेप्रयोगमालायामा
घाराद्यग्निमुखप्रयोगः ॥ ७ ॥ ७ ॥ अथसर्वकर्मांगप्रायश्चित्तं ॥ तस्यकालः प्रधानस्यादितोंतेवाप्राक्स्विष्टकृ
तएववा ॥ प्रायश्चित्ताहुतिःकुर्यादर्थलुप्तेष्वनादरः ॥ (अर्थलुप्तेषुप्रयोजनशून्येष्वित्यर्थः) ॥ इति ॥ तत्रप्राय
श्चित्तमेव ॥ यथा ॥ शाखाछेदनमकृत्वाअच्छिन्नशाखयावत्यपाकरणेकृतेपुनः शाखाछेदनंनकर्तव्यं ॥ प्रयोजना
भावात् ॥ इतिश्रौतप्रायश्चित्तेचोदाहृतं ॥ इति ॥ अथहोमार्थमुपलिप्तंदेशंश्वावैडकोवाकीटोवापिंडकारीगच्छेत्तंदे
शंपुनरुपलिप्यप्रोक्षति ॥ ॐदेवस्यत्वा॥ ÷ हस्ताभ्यां ॥ तेजसाप्रोक्षामीतिप्रोक्ष्यस्थंडिलमुद्धरेत् ॥ अथोद्धृतंस्थंडि
लंगौरश्वोवाश्वापदमधितिष्ठेत्॥ ॐशन्नोदेवी ÷ रभिस्त्रवंतुनः ॥ इतितस्यपदमभ्युक्ष्य ॥ पृथिवीदेवयजन्योषध्यास्तेमू
लंमागुँहिगुँसिषमितिजपत्यथयदिप्रणीतापात्रंभिद्येततदभिमंत्रयते ॥ अभिन्नोघर्मोजीरदानुर्यतआत्तस्तदगन्पुनरिति ॥
अथान्यदाहरति ॥ घर्मोदेवागुँअप्येत्विति पूरयित्वोपातिष्ठते ॥ ॐभूर्भुवस्सुवरित्यथयदिप्रणीतानांप्रणयिमानानांवाविप्रु
षोयदिपतेयुःस्त्रवेद्वा ॥ आपोहिष्ठेतितिसृभिर्व्याहृतिभिश्चपूरयित्वास्त्रावितमभिमंत्रयते ॥ अक्षितोस्यक्षित्यैत्वामा
मेक्षेष्ठा ॥ अमुत्रामुष्मिंल्लोके ॥ इति ॥ अथपूरितमुपतिष्ठते ॥ भूरायुर्मेधारयत्प्राणान्मेधारयत्प्रजाम्मेधारयत्पशू
न्मेधारयत् मामआयुःप्राणाःप्रजाःपशवःपरासिच्येरन्नित्यथजुहोति ॥ ॐ ततम्मआपस्तदुतायतेपुनः ॥ स्वादिष्ठा
धीतिरुचथायशस्यते ॥ अयगुँसमुद्र उतविश्वभेषजःस्वाहाकृतस्यसमुतृप्णुतर्भुवःस्वाहा ॥ ऋभुभ्यइदं ॥ ७ ॥ अथ

स्थालीभेदे ॥ अभिन्नोघर्मोजीरदा नुर्यतआत्तस्तदगन्पुनः॥इत्यभिमंत्र्याज्यंसंस्कृत्य स्रुचिचतुर्गृहीतंगृहीत्वा॥ॐइध्मोवे
दिः परिधयश्चसर्वेयस्यायुरनुसंचरंतिस्वाहा ॥ यज्ञायेदं ॥ इतिहुत्वाथान्यामाहरति ॥ घर्मोदेवाँअप्येत्विति
सर्वत्रस्रुवंदर्वीकूर्चप्रस्तरबर्हिः पवित्रेध्मपरिधिद्रव्यसंभाराणांछेददाहोपघातेषुनाशेवान्यंयथालिंगंकृत्वासाद्य॥त्वंनोअग्ने
सत्वन्नोअग्नेत्वमग्नेअयासिप्रजापतइतिचतुर्भिःस्रुवाहुतीर्जुहुयात् ॥ परिस्तरणदाहे ॥ ॐअग्नयेक्षामवतेस्वाहा ॥ अ
ग्नयेक्षामवतइदं ॥ इतिहुत्वापरिस्तृणाति ॥ ॐइंद्रंवोविश्वतस्परिहवामहेजनेभ्यः ॥ अस्माकमस्तुकेवलः ॥ १ ॥ ॐ
इंद्रंनरोनेमधिताहवंतेयत्पार्यायुनजतेधियस्ताः ॥ शूरोनृषाताशवसश्चकानआगोमतिव्रजेभजात्वन्नः ॥ २ ॥ इतिद्वा
भ्यांपरिस्तीर्य इंद्रायस्वाहेतिपुनर्जुहुयात् ॥ परिधिदाहे ॥ अन्येनपरिधाय ॥ ॐपरित्वाग्नेपुरंवयंविप्रँसहस्यधीमहि
॥ धृषद्वर्णंदिवेदिवे भेत्तारंभंगुरावतःस्वाहा ॥ अग्नयइदं ॥ इतिजुहुयात् ॥ वस्त्राणांप्रोक्षितानांछेददाहोपघातेषु ॥
ॐसोमायस्वाहेतिहुत्वाहुतिंजुहुयात् ॥ सर्वत्रस्कन्नेभिन्नेछिन्नेकर्मविपर्यासेउद्दाहेऊनातिरेकेपवित्रनाशेपात्रभेदेचद्वेमिं
दाहुतीर्जुहुयात् ॥ ५ ॥ अथमशकमाक्षिककेशकीटपिपीलिकादिभिर्हविषिदुष्टेतदुत्सृज्य प्रजापतेनत्वादितिहुत्वान्यदा
सादयेत् ॥ मंत्रस्यपदाक्षरस्वरवर्णवृत्तादिभ्रंशे ॥ ॐआभिर्गीर्भिर्यदतोनऊनमाप्याययहरिवोवर्धमानः ॥ यदास्तोतृ
भ्योमहिगोत्रारुजासिभूयिष्ठभाजोअधतेस्यामस्वाहा ॥ हरिवतेवर्धमानायेदं ॥ इति ॥ परिस्तरादिकर्मविपर्यासे ॥
ततम्मआपोयत्पाकत्रामनोज्योतिरितिजुहुयात् ॥ यदिपरकीयवस्त्रपात्राद्यभिधातःस्यात्तदभिमंत्रयते ॥ सिगासिन

सिवञ्चोसिनमस्ते अस्तुमामाहिगुँसीरिति ॥ दशासूत्रमादायमुखवातेनध्वंसयेत् ॥ यदिगौर्वाश्वोवामृगमेषम
हिषदंष्ट्रिणामन्यद्वापादमंतराऽयपसव्यंगछेत्तस्यपदं शन्नोदेवीरित्यभ्युक्ष्यजपति ॥ तद्विष्णोःपरमंपदगुँसदापश्यंति
सूरयः ॥ दिवीवचक्षुराततं ॥ तद्विप्रासोविपन्यवोजागृवागुँसस्समिंधते ॥ विष्णोर्यत्परमंपदमिति ॥ ७ ॥ अथवै
तेषांपदानिइदंविष्णुरितिभस्मनाध्वंसयित्वामनोज्योतिरितिस्त्रुवाहुतिंजुहुयात् ॥ यद्येतेगोरश्वादयो रौद्रमभि व्याहरे
युः ॥ ॐत्वमग्नेरुद्रोअसुरोमहोदिवस्त्वगुँशर्धोमारुतंपृक्षईशिषे ॥ त्वंवातैररुणैर्यासिशंगयस्त्वंपूषावितथःपासिनुत्मना
स्वाहा ॥ अग्नयइदं ॥ ॐआवोराजानमध्वरस्यरुद्रगुँहोतारगुँसत्ययजगुँरोदस्योः ॥ अग्निंपुरातनयित्नूरचित्ताद्धिर
ण्यरूपमवसेकृणुध्वगुँस्वाहा ॥ रुद्रायाग्नयइदं ॥ इतिजुहुयाज्जपेद्वा ॥ यदिपक्षिणोभिव्याहरेयुस्तांवाचमनुमंत्रयते
॥ द्विपच्चतुष्पदस्माकगुँसर्वमस्त्वनातुरं ॥ उद्गातेवशकुनेसामगायसिब्रह्मपुत्रइवसवनेषुशंससि ॥ स्वास्तिनश्शकुनेअ
स्तुप्रतिनस्सूमनाभवेति ॥ अथयदिसृगालीवानरीवावास्येत्तांवाचमनुमंत्रयते ॥ दीर्घमुखिदुर्हणु ॥ मायमदक्षिणतोव
दः ॥ यदिदक्षिणतोवदाद्विषंतम्मेवबाधासै ॥ इति॥ अथयद्यग्नेरेकदेशमपहरयेयुस्तदा मनोज्योतिरितिस्त्रुवाहुतिंजुहुया
त् ॥ यदिपरिखासेपरिक्षयेवापउपस्पृश्ययथालिंगंजपेत् ॥अनुहवंपरिहवंपरीवादंपरिक्षिणं॥ दुःस्वप्नंदुरुदितंतद्विषद्भ्यो
दिशाम्यहं ॥ अनुहूतंपरिहूतंशकुनैर्यदशाकुनं ॥ मृगस्यश्रुतमक्ष्णयातद्विषद्भ्योदिशाम्यहं ॥ दीक्षितोन्यदीक्षितोन्य
दीक्षितेननसमेयाद्यदिसमेयात् ॥ कयानश्चित्रआभुवदूतीसदावृधस्सखा ॥ कयाशचिष्ठयावृता ॥ इतिजपेत् ॥ सर्वत्र

दीक्षितस्सूर्योदयास्तसमयेदेवयजनागारादन्यत्रशयीत ॥ सूर्योमादेवोदेवेभ्यः पातुवायुरंतरिक्षाद्यजमानोऽग्निर्मापा
क्षुषः ॥ सक्षशूषस्सवितर्विश्वचर्षणएतेभिःसोमनामभिर्विधेमतेतेभिःसोमनामभिर्विधेमतइतिजपेत् ॥ अथस्वयंप्रज्व
तेऽग्नौ ॥ उद्दीप्यस्वजातवेदोपघ्नंनिर्ऋतिंमम ॥ पशूंश्चमह्यमावहजीवनंचदिशोदिशस्वाहा ॥ जातवेदसेऽग्नयइदं ॥
मानोहिंसीज्जातवेदोगामश्वंपुरुषंजगत् ॥ अबिभ्रदग्नआगहिश्रियामापरिपातयस्वाहा ॥ जातवेदसेऽग्नयइदं
इतिद्वाभ्यांसमिधौजुहुयात् ॥ अथसप्तपाकयज्ञानांद्रव्यहविर्मंत्रसंस्कारादीनामतिपन्नस्कन्नभिन्नभग्ननष्टदुष्टविपरी
गधाश्रुतातिश्रुतानामन्यत्कीटोवाङ्गलिजोऽग्नीनंतरागच्छेयुस्तदाद्वादशगृहीतेनस्रुचंपूरयित्वा ॥ ॐजातवेदसे॰॥॰जातवे
सेऽग्नयइदं ॥ ॐमनोज्योतिः॰॥॰मनसेज्योतिषइदं ॥ महाव्याहृतीश्चविग्राहंजुहुयात् ॥ अथसर्वत्रानाम्नातेषु ॥
मनोज्योतिरयाश्चाग्नेयंदस्मिन्कर्मणिस्वस्तिनइंद्रोवृद्धश्रवाव्याहृतयश्चप्रायश्चित्तं ॥ अथगर्भाधानपुंसवनसीमंतोन्न
नविष्णुबलिजातकर्मनामकरणोपनिष्क्रमणान्नप्राशनकर्णवेधनचौलव्रतादीनांमुख्यकालातिक्रमे ॥ चित्तंचेत्यादित्र
दशाग्निर्भूतानामित्यादिरुद्रः पशूनामित्यंतंचतुर्दश ॥ ततस्मआपोयत्पाकत्रामनोज्योतिर्मिंदाहुतीर्महाव्याहृतीव्याहृ
श्चप्रायश्चित्तंजुहुयात् ॥ प्रधानादावप्रधानादौचव्याहृतिपूर्वकंद्वेद्वेमिंदाहुतीर्जुहुयात् ॥ अथसर्वत्रविपरीतदर्भास्तरण
वित्रपात्रासादनप्रोक्षणीसंस्कारब्रह्मप्रणीताहविर्निर्वापाज्यसंस्कारपर्यग्निकरणस्रुक्संम्मार्जनपरिधिपरिषेचनेध्माधा
विपरीतेषु ॥ ततस्मआपोयत्पाकत्रामनोज्योतीर्मिंदाहुतीर्महाव्याहृतीव्याहृतीश्चजुहुयात् ॥ अथसर्वत्ररौद्रराक्षस

ऋंइतियमपैतृकछेदभेदननिरसनात्माभिमर्शनेष्वपउपस्पृशेत् ॥स्कंदेद्धविर्गृहीतंतुचरुर्वापरिधिर्बर्हिः॥तद्भूपतयइत्यादिमं
त्रैःस्कन्नंतुमंत्रयेत्॥सुरभिमतेतंतुमतइत्याभ्यांजुहुयात्ततः॥प्रणवव्याहृतीर्हुत्वापुनश्शेषंसमाचरेदिति॥यथा॥भूपतयेस्वाहा
भुवनपतयेस्वाहा॥भूतानांपतयेस्वाहेतिस्कन्नंहविरभिमंत्र्य॥ॐदाधिक्राव्णोअकारिषं ⁑ तारिषत्स्वाहा॥दधिक्राव्णइदं ॥
ॐतंतुंतन्वन् ॥ तंतुमतइदं॥ॐगुँस्वाहा॥सवित्रइदं॥व्याहृतीर्हुत्वाशेषंसमाचरेत्॥ अथवाशीतभस्मनिनिधाय मिंदाहुती
र्हुत्वान्यग्निर्वपेत्॥आज्येनवाप्रचरेत्॥अथांतरागमने ॥ ॐचित्तिस्स्रुक् ॥ चित्तमाज्यं ॥ वाग्वेदिः ॥ आधीतंबर्हिः॥
केतोअग्निः ॥ विज्ञातमग्निः ॥ वाक्पतिर्होता ॥ मनउपवक्ता ॥ प्राणोहविः ॥ सामाध्वर्युः ॥ वाचस्पतेविधेनामन् ॥
विधेमतेनाम ॥ विधेस्त्वमस्माकन्नाम ॥ वाचस्पतिस्सोमंपिबतु ॥ अस्मासुनृम्णंधात्स्वाहा ॥ वाचस्पतयेब्रह्मणइदं ॥
अन्वग्निरुषसां ॥ अग्नयेद्यावापृथिवीभ्यामिदं ॥ इतिसप्तपाकयज्ञान्तरागमनेज्ञेयं ॥ अथमंडूकसर्पमूषकमार्जारांतरा
गमने ॥ ॐवाग्घोता ॥ दीक्षापत्नी ॥ वातोध्वर्युः ॥ आपोभिगरः ॥ मनोहविः ॥ तपसिजुहोमि ॥ भूर्भुवस्सुवः ॥
ब्रह्मस्वयंभु॥ब्रह्मणेस्वयंभुवेस्वाहा॥ब्रह्मणेस्वयंभुवइदं॥ॐतच्छंयोरावृणीमहे ⁑ स्वतिरस्तुनःस्वाहा॥ शंयुवाकायेदं॥ॐ
स्वास्तिर्मानुषेभ्यः ⁑ चतुष्पदेस्वाहा॥शंयुवाकायेदं॥अन्वग्निः॥अग्नयेद्यावापृथिवीभ्यामिदं॥अथपतितचांडालसूतिकोद
क्यारजकादिवाक्यश्रवणे ॥ ॐमहाहविर्होतासत्यहविरध्वर्युः ॥ अच्युतपाजाअग्नीत् ॥ अच्युतमनाउपवक्ता ॥ अना
धृष्यश्चाप्रतिधृष्यश्चयज्ञस्याभिगरौ ॥ अयास्यउद्गाता ॥ वाचस्पतेहृद्विधेनामन् ॥ विधेमतेनाम ॥ विधेस्त्वमस्माक

न्नाम ॥ वाचस्पतिस्सोममपात् ॥ मादैव्यस्तंतुच्छेदिमामनुष्यः ॥ नमोदिवेनमःपृथिव्यैस्वाहा॥वाचस्पतयेब्रह्मणइदं॥
ॐअन्वग्निरुषसां *॥* अग्नयेद्यावापृथिवीभ्यामिदं॥ इतिजुहुयात्॥ अथश्रप्यमाणेचरौयस्यांदिश्युत्सिच्येततस्यैतस्यैदे
वतायैस्त्रुवाहुतिंजुहुयात्॥यथा ॥पूर्वादि इंद्रायस्वाहा॥इंद्रायेदं॥अग्नयेस्वाहा॥ अग्नयइदं॥यमायस्वाहा॥यमायेदं ॥अ
पउपस्पृश्य ॥ निर्ऋतयेस्वाहा ॥ निर्ऋतयइदं ॥ अपउपस्पृश्य ॥ वरुणायस्वाहा॥ वरुणायेदं ॥ वायवेस्वाहा ॥ वा
यवइदं ॥ सोमायस्वाहा ॥ सोमायेदं ॥ईशानायस्वाहा ॥ ईशानायेदं ॥इतिहुत्वा ॥आप्यायस्वसंतेपयाँसीतिद्वाभ्या
माज्येनचरुमाप्याययति ॥ अथाग्नावुद्वाते ॥ अथयदिहोमकालेग्निरुद्वातःस्यादथवोपनयनाग्निर्विवाहाग्निर्जातकर्माग्निश्श्म
शानाग्निराचतुर्थाद्वादशाहादासंचयनादग्निरुद्वातःस्यात्॥ ॐअपहताअसुरारक्षाँसिपिशाचायेक्षियंतिपृथिवीमनु ॥ अ
न्यत्रैतोगच्छंतुयत्रैषांगतंमनइति तत्सर्वंभस्माद्भिःप्रोक्ष्य अयंतेयोनिर्ऋत्वियइतिक्षिप्रंभस्मसमिधिसमारोपणंकृत्वालौ
किकाग्निंप्रतिष्ठाप्य संपरिस्तीर्यआजिव्हानउद्बुध्यस्वाग्नइतिद्वाभ्यामारोपितसमिधमाधायाज्यंसंस्कृत्यस्त्रुवेणाज्यमादा
यजुहोति ॥ अयाश्चाग्नेः *॥* अग्नयअयसइदं ॥ अग्निर्होता*॥* इंद्रायसोमायेदं ॥ब्राह्मणएकहोतेत्यादिदश भिंदाहुती
र्महाव्याहृतीर्व्याहृतीश्चजुहुयात् ॥ अथसंस्कारांतेग्नावुद्वाते ॥ तद्भस्मोषणमयंतेयोनिर्ऋत्वियइतिसामिधिसामारोप्याजु
व्हानउद्बुध्यस्वेतिलौकिकाग्नौसमिधमाधायाज्यंसंस्कृत्यमहाव्याहृतिभिःप्रणवेनमनस्वत्याचजुहुयात् ॥ अथान्वाधा
नेष्टिमध्येसोमसूर्योपरागे ॥ ॐउद्वयंतमसस्परिपश्यंतोज्योतिरुत्तरं ॥ देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमगुँस्वाहा ॥ सू

र्यायज्योतिषइदं ॥ ॐउदुत्यंजातवेदसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसूर्यगुँस्वाहा ॥ सूर्यायेदं ॥ ॐचित्रंदेवानामुद
गादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्यावापृथिवीअंतरिक्षगुँसूर्यआत्माजगतस्तस्थुषश्चस्वाहा ॥ द्यावापृथिवी
भ्यामंतरिक्षायसूर्यायेदं ॥ इतिसूर्योपरागे ॥ ॐआप्यायस्वसमेतुते ॥ सोमायेदं ॥ संतेपयागुँसि ॥ सोमायेदं ॥
ॐत्वन्नस्सोमविश्वतोरक्षाराजन्नघायतः ॥ नरिष्येत्वावतस्सखास्वाहा ॥ सोमायेदं ॥ ॐयातेधामानिदिवियापृथिव्यां
यापर्वतेष्वोषधीष्वप्सु ॥ तेभिर्नोअश्वैस्सुमनाअहेडन्नाजन्त्सोमप्रतिहव्यागृभायस्वाहा ॥ सोमायेदं ॥७॥ मिंदाहुतीर्व्या
हृतिभिश्चजुहुयात्॥इतिचंद्रोपरागे॥अथप्रधानकर्मण्यंतरितोविपर्यासेच ॥ ॐत्वन्नोअग्नेसत्वन्नोअग्नइति्द्वाभ्यांजुहुयात्॥
अथाज्यस्थाली चरुस्थालीवोद्धृत्तेचरुस्थालीवेपितेस्पंदितेभिन्नेसंसर्पणेवाप्रभूतेनसर्पिषावासिच्याभिमंत्रयते॥ॐकिमुत्प
तसिकिमुत्प्रोष्ठा श्शांताश्शांतेरिहागहि ॥ अघोरोयज्ञियोभूत्वासीदसदनगुँस्वं ॥ इत्याभिमंत्र्य ॥ ॐत्वमग्ने ॥ अ
यास्ययासन्मनसा॥प्रजापते॥ मिंदाहुतीर्व्याहृतीश्चजुहुयात् ॥ अथयदिमृन्मयस्थालींतामपोह्य ॥ ॐभूमिर्भू
मिमगान्मातामातरमप्यगात् ॥ भूयास्मपुत्रैः पशुभिर्योनोद्वेष्टिसभिद्यतामित्यथान्यदाहरति ॥ घर्मोदेवागुँअप्येत्वि
तिब्रह्मप्रतिष्ठामनसइतिप्रतिष्ठाप्य ॥ पुनः ब्रह्मप्रतिष्ठामनसः ॥ ब्रह्मणइदं ॥ यद्वोदे॥तनस्वाहा ॥ देवेभ्योमरुद्भ्य
इदं॥ यत्पाकत्रा ॥ अग्नयेदेवेभ्यइदं ॥ इतिजुहुयात् ॥ ८ ॥ अथगृहमेधिनोवाब्रह्मचारिणोवाग्निरुद्धातस्याद्धोमकाला
तिक्रमेपर्वातिक्रमेआग्रयणेनानिष्पानवान्नभक्षणे आज्यसंस्काराभावेस्कन्नावधूतमंत्रहीनाधिकत्वेष्वकृतसीमंतायांप्र

सूतौगोस्त्रियोर्यमलजन्मनिरजस्वलागमनेपतितसंभाषणेदिवामैथुनेशूद्राभिगमनेस्वप्नेरेतस्कन्नेचोदकेमूत्रपुरीषकरणेकु
मारस्यसंस्काराकरणेग्नेश्चमिश्रणेदेवतामंत्रतंत्रविपर्यासेकर्मविपर्यासेब्रह्मचारिणोव्रतविपर्यासेदंडोपवीतमेखलाकृष्णा
जिनानामधारणेदंडभंगेसंध्याग्निकार्योदकुंभभिक्षाध्ययनलोपेष्वन्येष्वेवंविधेषुप्रायश्चित्तं ॥उल्लेखनादाज्यसंस्कारान्तंकृ
त्वा चतस्त्रोव्याहृतिःपाहिनोअग्नइतिपंचपुनर्व्याहृतिचतुष्टयंचजुहुयात् ॥ एवंपाहित्रयोदशहोमंसर्वत्रकर्मान्तेजुहुयात् ॥
यथाकालकरणमविच्छिन्नंसंततंभवतीति॥ अथाग्नौमुखवातहस्तवातशूर्पादिवायुभिर्वाहृते सावित्र्याजुहुयात् ॥अथर्त्विजो
यजमानस्यवोच्छिष्टस्पर्शे ॥पवमानस्सुवर्जनइतिजुहुयात्॥इतिवेंकटेशीयेप्रयोगमालायांप्रायश्चित्तप्रयोगः॥ ७ ॥ ७॥
अथौपासनप्रायश्चित्तं ॥ औपासनाग्निर्विवाहादारभ्यदंपतीभ्यांयतोनित्योधार्यः ॥ यदिविवाहव्रतमध्येग्नावनुगतेपूर्वो
क्तप्रायश्चित्तमेवकुर्यात् ॥ अतऊर्ध्वमनुगतेपत्नीपतिर्वोपवसेत् ॥ अथसद्यःसंधानपक्षेग्निंप्रतिष्ठाप्य अयाश्चाग्नयइतिजु
हुयात् ॥ द्वितीयेहनिसंधानेमनस्वती ॥ तृतीयेवारुणी ॥ मनस्वत्यासहेमम्मेवरुणेतिजुहुयात् ॥ चतुर्थेन्हितंतुमतीः ॥
मनोज्योतिरिमम्मेवरुणेतिहुत्वा॥ तंतुंतन्वन्नुद्बुध्यस्वाग्नेत्रयस्त्रिंशत्तंतवइतिजुहुयात् ॥ पंचाहादारभ्यद्वादशाहपर्यंतम
भ्यावर्तिनीः ॥ पूर्वोक्ताहुतिभिस्सहाग्नेभ्यावर्तिन्नग्नेअंगिरःपुनरूर्जासहरय्येतिजुहुयात् ॥ द्वादशाहादूर्ध्वमनुगतेय
थाप्रकृतिप्रणवेनाहरति (पुनःसंधानंकुर्यादित्यर्थः) ॥ नास्तिक्यादाग्निंपरित्यज्यप्राजापत्यंचरेत् ॥ किंचआसायंक
र्मणः प्रातराप्रातःसायंकर्मणः ॥ इतिहोमकालस्यावधेरुक्तत्वाद्यदिसायंहोमःप्रभातेक्रियेतप्रातर्होमःसायंकालेवातदा

कालातिपन्नप्रायश्चित्तार्थंमनस्वतींजुहुयात् ॥ विष्णुभट्टप्रयोगेतु ॥ आदशरात्राद्धोमाभावेमनस्वतींजुहुयात् ॥ आविंशतिरात्राद्धोमाभावेतिस्रस्तंतुमतीर्जुहुयात् ॥ आत्रिंशद्रात्राद्धोमाभावेत्वेकाहमुपवासः ॥ आषष्टिरात्रात्र्यह मुपवासः ॥ अतः परंप्राजापत्यंचरेत् ॥ एवंषण्मासपर्यंतं ॥ सत्यग्नौहोमाभावेपुनराधानंवर्जयित्वा षाण्मासप्रा यश्चित्तमेवकुर्यात् ॥ दशरात्रपर्यंतंप्रायश्चित्तानन्तरमतीतहोमान्कुर्यात् ॥ अतऊर्ध्वंहोमद्रव्यंपरिगणय्य श्रोत्रि यायदद्यादितिगृह्यसूत्रे ॥ अथास्याहुतप्रायश्चित्तं ॥ मनोज्योतिरित्युपक्रम्यएकाहंमनस्वतीद्व्यहंवारुणीत्र्यहंतंतुमती श्चतुरहाद्द्वादशाहमभ्यावर्तिनीरिति॥ कारिकायां ॥कालात्ययेतुहोमस्यमनस्वत्यैवनिष्कृतिः ॥ अग्नेनयेत्यृग्द्वयेनहोम पार्वणहानिषु ॥ इति ॥ तत्रैव ॥ एकाहहोमातिपत्तौमनस्वत्याहुतिंहुनेत् ॥ इमंमेवरुणेत्याभ्यांद्व्यहेवापित्र्यहेतथा ॥ आभ्यांतंतुमतीभिश्चचतुरात्रेव्यतिक्रमे॥ एभिः पूर्वादिकैश्चाग्नेभ्यावर्तिनिचतुष्टयैः ॥ ऊर्ध्वंचतुरहादर्वाक्द्वादशाहादयं विधिः ॥ अतोहोमेव्यतीतेग्नेः पुनराधानमिष्यते ॥ इत्युक्तत्वाद्द्वादशाहादूर्ध्वंषण्मासपर्यंतसत्यग्नौहोमाभावइतिविष्णु भट्टावुक्तंतस्यमूलंमृग्यं॥शिष्टैरनादृतत्वात्॥धार्याग्निपक्षइतिकेचित् ॥ अतोमुख्यकालातिक्रमेएकाहव्यतिक्रमेचमनोज्यो तिरितिजुहुयात् ॥ द्विदिनेहोमाभावेमनोज्योतिरिमम्मेवरुणेत्याभ्यांजुहुयात् ॥ त्रिदिनेहोमाभावेमनोज्योतिरिमम्मे वरुणतंतुंतन्वन्नुद्बुध्यस्वाग्नेत्रयस्त्रिंशत्तंतवइतिजुहुयात्॥ चतुरहादारभ्यद्वादशरात्रिपर्यंतंहोमाभावेपूर्वोक्तमनोज्योतिरि त्यादिभिस्सहाग्नेभ्यावर्तिन्नग्नेअंगिरःपुनरूर्जासहरय्येत्येतैर्जुहुयात् ॥ द्वादशाहादूर्ध्वंषण्मासपर्यंतंपुनराधानमेवकुर्यात्

॥षण्मासादूर्ध्वंप्राजापत्यकृच्छ्रंकृत्वापुनराधानंचकृत्वाषाण्मासप्रायश्चित्तंकुर्यात्॥अथयदिद्वादशरात्रादर्वागग्नावनुवते ॥
तस्यानुगतस्ययथाप्रकृतिस्ततआहरणमुपवासश्चानुगतेन्यतरस्यभार्यायाःपत्युर्वापिवैतांजुहुयादयाश्चाग्नइतिसूत्र उक्त
त्वात्॥सद्यश्चेदपहताअसुरारक्षांसिपिशाचायेक्षियंतिपृथिवीमनु ॥ अन्यत्रैतोगच्छंतुयत्रैषांगतंमनइति तत्सर्वंभस्मप्रो
क्ष्यायंतेयोनिरितितदुष्णंभस्मसमिधिसमारोप्याजुह्वानउद्बुध्यस्वाग्नइतिलौकिकाग्नौसामिधमाधायाज्यसंस्कारंकृत्वा
अयाश्चाग्नइतिजुहुयात्॥कालांतरेचेत्पुनःसंधानमेवकार्यं॥७॥अथपुनःसंधानप्रयोगः॥तत्रादौमंत्रानुक्रमणिका॥सप्तते‌अ
ग्नेतिस्रस्तंतुंतन्वन्नुद्बुध्यस्वाग्नेत्रयस्त्रिंशत्तंतवोग्नेभ्यावर्तिन्नग्नेअंगिरःपुनरूर्जासहरय्या।मनोज्योतिःप्रजापतअन्वग्निरया
श्चाग्नउद्वयमायुर्दायन्मआत्मनोमिंदाभूत्पुनरग्निस्तत्सवितुर्महा०व्याहृतयोमहा०व्याहृतयश्चहोतव्याइति ॥अथशुचौसमदे
शेगोमयेनोपलिप्तउद्धत्यावोक्ष्य०व्याहृतिभिस्सिकतान्युप्यस्थंडिलंकृत्वा॥ आखूत्करोवल्मीकवपासूदःपुष्करपर्णंवराहवि
हतंशर्कराअश्वत्थौदुंबरपर्णशमीविकंकताशनिहताइत्येतेऽग्न्याधेयिकसंभारास्तेषुयथोपपन्नमाहृत्य ०व्याहृतिभिर्नियुप्यत
त्रप्रणवेनलौकिकाग्निंप्रतिष्ठाप्यप्राणानायम्यदेशकालौसंकीर्त्य नष्टमाग्निंपुनस्संधास्य इतिसंकल्प्य पुनस्संधानहोमःक
र्माग्निहोत्रिकंतत्रंमृडोनामाग्निःअग्निरग्निस्तंतुमानग्निरभ्यावर्तिमनोज्योतिःप्रजापतिरग्निर्द्यावापृथिव्यग्निरयास्सूर्योज्यो
तिरग्निरग्निर्जातवेदाविचर्षणिरग्नींद्रबृहस्पत्याश्विनस्सविताग्निः पृथिवीमहान्वाय्वंतरिक्षमहानादित्यद्यौर्महांश्चंद्रमानक्ष
त्रदिशोमहानग्निर्वायुस्सूर्यः प्रजापतिर्देवता आज्यंहविरेताअंगदेवताः प्रधानदेवतास्तास्सर्वास्सन्निहितास्संतुएवंसांगे

नकर्मणासद्योयक्ष्ये॥तदंगमन्वाधानंकरिष्ये॥इत्यन्वाधानंकृत्वा आज्यस्थालींस्रुवंचैवस्रुचंचसमिधंतथा॥कूर्चंप्रोक्षणपात्रं
चसादयेदाग्निहोत्रिके ॥ इतिपात्राण्यासाद्यस्रुक्स्रुवसम्मार्जनान्तंकृत्वा स्रुचिचतुर्गृहीतंगृहीत्वा समिधमेकामग्नौनिधाय
परिश्रितेपूर्णाहुतिंजुहोति ॥ ॐसप्ततेअग्नेसमिधस्सप्तजिव्हास्सप्तर्षयस्सप्तधामाप्रियाणि ॥ सप्तहोत्रास्सप्तधात्वायजंति
सप्तयोनीरापृणस्वाघृतेनस्वाहा ॥ अग्नयेसप्तवतइदं ॥ अथब्रह्मणेवरंददाति ॥धेनुमृषभमनड्वाहंहिरण्यंकांस्यंवासोवेति
यथासंभवंदत्वाथातिपन्नहोमद्रव्यंपरिगणय्य ॥ ममौपासनविच्छित्तिदिनादारभ्यैतत्कालपर्यंतमौपासनाहुतिपरिमितं
द्रव्यंपरिगणय्यब्राह्मणायदातुमहमुत्सृजे॥ इतिब्राह्मणायदत्वा औपासनविच्छित्तिदोषपरिहारोस्त्वितिवाचयित्वा पुनश्च
तुर्गृहीतंगृहीत्वातिस्रस्तंतुमतीर्विग्राहंजुहोति ॥ ॐतंतुंतन्वन्रजसोभानुमन्विहिज्योतिष्मतःपथोरक्षाधियाकृतान् ॥
अनुल्बणंवयतजोगुवामपोमनुर्भवजनयादैव्यंजनगुँस्वाहा ॥ अग्नयेतंतुमतइदं॥ ॐउद्बुध्यस्वाग्नेप्रतिजागृह्येनमिष्टापूर्ते
सगुँसृजेथामयंच ॥ पुनःकृण्वगुँस्त्वापितरंयुवानमन्वातागुँसीत्त्वयितंतुमेतगुँस्वाहा ॥ अग्नयेतंतुमतइदं ॥ ॐत्रयस्त्रि
गुँशत्तंतवोयेवितत्निरेयइमंयज्ञगुँस्वधयाददंतेतेषांछिन्नंप्रत्येतद्दधामिस्वाहायमोंदेवागुँअप्येतुस्वाहा ॥ अग्नयेतंतुमतइ
दं ॥ अपरंचतुर्गृहीतंगृहीत्वा चतस्रोभ्यावर्तिनीर्विग्राहंजुहोति ॥ ॐ अग्नेभ्यावर्तिन्नभिनआवर्तस्वायुषावर्चसासन्या
मेधयाप्रजयाधनेनस्वाहा ॥ अग्नयेभ्यावर्तिनइदं ॥ ॐअमग्नेअंगिरश्शतंतेसंत्वावृतस्सहस्रंतउपावृतः ॥ तासांपोषस्य
पोषेणपुनर्नोनष्टमाकृधिपुनर्नोरयिमाकृधिस्वाहा ॥ अग्नयेभ्यावर्तिनइदं ॥ ॐपुनरूर्जानिवर्तस्वपुनरग्नइषायुषा ॥ पु

नर्नः पाहिविश्वतःस्वाहा ॥ अग्नयेभ्यावर्तिनइदं ॥ ॐसहरय्यानिवर्तस्वाग्नेपिन्वस्वधारया ॥ विश्वाप्स्नियाविश्वत
स्परिस्वाहा ॥ अग्नयेभ्यावर्तिनइदं ॥ पुनश्चतुर्गृहीतंगृहीत्वामनस्वतींजुहोति ॥ ॐमनोज्योतिर्जुषतामाज्यंविच्छिन्नं
यज्ञगुँसमिमंदधातु ॥ याइष्टाउषसोनिम्रुचश्चतास्संदधामिहविषाघृतेनस्वाहा ॥ मनसेज्योतिषइदं ॥ पुनश्चतुर्गृही
तंगृहीत्वाप्राजापत्यांजुहोति ॥ ॐप्रजापते ॥ गुँस्वाहा ॥ प्रजापतयइदं ॥ अपरंचतुर्गृहीतंगृहीत्वामुख्यांजुहोति ॥
ॐअन्वग्निरुषसामग्रमुख्यदन्वहानिप्रथमोजातवेदाः ॥ अनुसूर्यस्यपुरुत्राचरश्मीननुद्यावापृथिवीआततानस्वाहा ॥
अनुख्यायाग्नयेजातवेदसेद्यावापृथिवीभ्यामिदं ॥ पुनश्चतुर्गृहीतंगृहीत्वा॥ॐअयाश्चाग्नेरनभिशस्तीश्चसत्यमित्वमयाअ
सि ॥ अयासामनसाघृतोयासाहव्यमोहिषेयानोधेहिभेषजगुँस्वाहा॥ अग्नयेअयसइदं॥ पुनश्चतुर्गृहीतंगृहीत्वायुष्मतीं
जुहोति॥ ॐउद्वयंतमसः ॥ मगुँस्वाहा ॥ सूर्यायज्योतिषइदं ॥ पुनश्चतुर्गृहीतंगृहीत्वायुदांजुहोति॥ॐआयुर्दाअग्नेह
विषाजुषाणोघृतप्रतीकोघृतयोनिरेधि ॥ घृतंपीत्वामधुचारुगव्यंपितेवपुत्रमभिरक्षतादिमगुँस्वाहा ॥ आयुर्दाग्नय
इदं ॥ पुनश्चतुर्गृहीतंगृहीत्वाद्वेमिंहाहुतीर्विग्राहंजुहोति ॥ ॐयन्मआत्मनो ॥ जातवेदसेविचर्षणयइदं ॥ पुनर
ग्निः ॥ अग्नींद्रबृहस्पत्यश्विभ्यइदं ॥ पुनश्चतुर्गृहीतंगृहीत्वासावित्रींजुहोति ॥ ॐतत्सवितुः ॥ सवित्रइदं ॥
पुनश्चतुर्गृहीतंगृहीत्वामहाव्याहृतीर्विग्राहंजुहोति ॥ भूरग्नयइत्यादिचतस्रः ॥ पुनश्चतुर्गृहीतंगृहीत्वाव्याहृती
र्विग्राहंजुहोति ॥ ॐभूस्वाहेत्यादिचतस्रः ॥ इतिहुत्वाथाग्नयेस्विष्टकृतेस्वाहेत्युत्तरार्धपूर्वार्धेस्रुवाहुतिंहुत्वा कूर्चसंमा

र्जनादिसर्वमाग्निहोत्रिकतंत्रवत्कुर्यात् ॥ अथवापूर्णाहुतिवरदानांतंसर्वंपूर्ववत्कृत्वा पुनस्त्वादित्याइत्येकांसमिधंहुत्वा पु
नस्तयैवचतुर्गृहीतंगृहीत्वाजुहुयात्॥ॐपुनस्त्वा ॥ नस्यकामाःस्वाहा ॥ आदित्येभ्योरुद्रेभ्योवसुभ्योब्रह्मभ्योवसुनीथाये
दं ॥ इत्येकयाहुत्यावाप्रसंध्यायशेषंसमापयेत् ॥ इदंतुसद्यस्संधानपक्षेवेदितव्यं ॥ अत्रसमारोपणंनकुर्वंति ॥ अपवृ
त्तेकर्मणिलौकिकस्संपद्यतइतिन्यायात्॥ ततस्सायंकालपर्यंतंस्थित्वा सायंसंध्यामुपास्य औपासनंकृत्वा समारोपणंकुर्या
त्॥इतिपुनस्संधानविधिः॥७॥७ ॥अथषाण्मासप्रायश्चितप्रयोगः॥ यद्यग्निः षण्मासादूर्ध्वंविच्छिन्नःस्यात्तत्रप्रायश्चित्तं ॥
आचम्यप्राणानायम्यदेशकालौसंकीर्त्य पुनस्संधानषाण्मासप्रायश्चित्तहोमंकर्तुंममशरीरशुद्ध्यर्थंस्नानपवनमंत्राचमन
मंत्रप्रोक्षणानिकरिष्ये ॥ इतिसंकल्प्य तत्कृत्वागणपतिंसंपूज्यपुण्याहंवाचयित्वा ॥ सविताग्न्यादयश्चप्रीयंतामिति
वाचयित्वा प्रोक्षणांतंकृत्वाथस्थंडिलोल्लेखनादिसंभाराहरणाद्यग्निप्रतिष्ठापनान्तंकृत्वा पूर्वोक्तप्रकारेणपुनस्संधानंकृत्वा
तत्रैवपुनःप्राणानायम्य देशकालौसंकीर्त्यषण्मासादूर्ध्वमौपासनविच्छित्तिदोषपरिहारार्थं षाण्मासप्रायश्चित्तहोमंकरि
ष्ये ॥ षाण्मासप्रायश्चित्तहोमःकर्म आघारवत्तंत्रंपंचदशदारुरिध्मः अग्नीषोमावाज्यभागौ चित्तिर्नामाग्निः सवि
तादेवता चरुर्हविः अग्निस्सोमोग्निरन्नावानग्निरन्नादोग्निरन्नपतिरग्निः पवमानोग्निः पावकोग्निः शुचिरग्निर्ज्यो
तिष्मानग्निर्व्रतपतिरग्निः पथिकृदग्निस्तंतुमानग्निर्वैश्वानरस्सूर्यः प्रजापतिर्देवताआज्याक्तचरुर्हविरग्निः स्विष्टकृदाज्य
स्यमांत्रवर्णिक्योदेवता इत्यादिसंकल्प्यान्वाधानाद्यग्निमुखान्तंकृत्वापक्वाज्जुहोति ॥ ॐभूर्भुवस्सुवरों तत्सवितुः॥

प्रचोदयात्स्वाहा॥सावित्रइदं ॥ अथचरौप्रभूतमाज्यमानीयमेक्षणेनगृहीत्वाहस्तेनैवजुहोति॥ तत्रानुक्रमणिका ॥ अग्नि
स्सोमोन्नवांश्चैवअन्नादोन्नपतिस्तथा॥ पवमानः पावकश्चशुचिर्ज्योतिष्मदात्मकः ॥ व्रतपतिःपथिकृच्चतंतुर्वैश्वानरस्तथा
॥ सूर्यःप्रजापतिश्चैवव्याहृतिश्चततःपरं॥ अन्नादयोग्निपूर्वास्तेप्रोक्तावैश्वानरांतकाः ॥ इति ॥ ॐअग्नयेस्वाहा॥ अग्नयइदं
॥ ॐसोमायस्वाहा॥ सोमायेदं॥ अग्नयेन्नवतेस्वाहा॥ अग्नयेन्नवतइदं ॥ ॐअग्नयेन्नादायस्वाहा॥ अग्नयेन्नादायेदं ॥
ॐअग्नयेन्नपतयेस्वाहा॥ अग्नयेन्नपतयइदं॥ ॐअग्नयेपवमानायस्वाहा ॥ अग्नयेपवमानायेदं ॥ ॐअग्नयेपावकायस्वा
हा॥ अग्नयेपावकायेदं ।ॐअग्नयेशुचयेस्वाहा॥ अग्नयेशुचयइदं ॥ ॐअग्नयेज्योतिष्मतेस्वाहा॥अग्नयेज्योतिष्मतइदं॥
ॐअग्नयेव्रतपतयेस्वाहा॥ अग्नयेव्रतपतयइदं॥ ॐअग्नयेपथिकृतेस्वाहा॥ अग्नयेपथिकृतइदं ॥ॐअग्नयेतंतुमतेस्वाहा
॥ अग्नयेतंतुमतइदं ॥ ॐअग्नयेवैश्वानरायस्वाहा॥अग्नयेवैश्वानरायेदं॥ ॐसूर्यायस्वाहा॥सूर्यायेदं॥ॐप्रजापतयेस्वाहा॥
प्रजापतयइदं॥ॐभूः स्वाहा॥ अग्नयइदं॥ ॐभुवःस्वाहा॥ वायवइदं॥ ॐसुवःस्वाहा॥सूर्यायेदं॥ ॐभूर्भुवस्सुवस्स्वाहा॥
प्रजापतयइदं ॥अथस्विष्टकृतमवदायांतःपरिधौनिधायव्याहृतीर्हुत्वा॥स्विष्टकृत्प्रभृतिवरदानांतंकृत्वाशेषंसमाप्यपूर्ववत्सां
यंमौपासनंहुत्वा पालाशाश्वत्थखादिरौदुंबराणामन्यतमसमिधिसमारोपणंकुर्यात् ॥संग्रहे॥ यदासंधीयतेवन्हिःप्रातर्मध्यं
दिनेपिवा॥तदासायंविजानीयात्सायमाहुतिपूर्वकं॥अग्न्युत्पत्तिर्निशायांयत्सधानंसायमेवच ॥ प्रातर्यदितुसंधानंसायंपूर्वं
विधीयते ॥ अहस्तुपुनराधानेहूयतेप्रातराहुतिः ॥ सायमारभ्यजुहुयादाहुतिनांचतुष्टयं ॥ यद्यहस्संधानंकृत्वाप्रात

होमोहूयते तदासायमाहुतिपूर्वकमाहुतिचतुष्टयंजुहुयादित्यर्थः ॥ एतानिवचनानिसद्यस्संधानविषयाणि ॥ यत्रपु
नस्त्वादित्याइतिमंत्रेणसद्यस्संधानंक्रियते तत्रह्यस्तनसायमाहुतिंहुत्वा तद्दिनेप्रातराहुतिंचहुत्वात्दानीमेवकर्तव्यकर्म
कृत्वातमग्निंविसृजेत् ॥ अप्रवृत्तेकर्मणिलौकिकस्संपद्यतइतिन्यायात् ॥ अथपुनःसंधानेविशेषउक्तआश्वलायनेन ॥ अन्
श्नन्नग्निमाहृत्यसायंहुत्वाविवाहवत् ॥ अश्नीयान्नात्रदीक्षास्यात्स्वस्तिवाचनमेवचेति ॥ इतिप्रयोगमालायांपुनस्सं
धानषाण्मासप्रायश्चित्तप्रयोगः ॥ ७ ॥ ७ ॥ अथाग्निनाशनिमित्तानि ॥ कारिकायां ॥ सायंप्रातरुपास्त्योऽग्निर्दंप
तीभ्यांनसंशयः ॥ तयोरन्यतरेणापिसायमेवविशेषतः ॥ उभयोर्विप्रवासेतुग्रामसीमावधेर्बहिः ॥ सायंचेन्नाशए
वाग्नेः प्रायश्चित्तमिनोदये ॥ ममनामादिमंत्राभ्यामुपस्थायहुताशनं ॥ चतुश्चतुर्गृहीतंतुजुहुयात्सुसमाहितः ॥
सप्ततंतुमतीस्तद्वन्महाव्याहृतयस्तथा ॥ तत्राग्निर्यत्रभार्यास्यात्साप्रधानाहितंप्रति ॥ यद्यनाशौचिनोवन्हिरन्य
प्रेतगृहेवसेत् ॥ शवेतत्रस्थितेत्यागस्सर्वथाग्नेर्विधीयते ॥ ॥ असौस्थितेशवेतस्मान्निर्गमय्यानलंबुधः ॥ प्रायश्चि
त्तंतुजुहुयादापोहिष्ठादिभिस्त्रिभिः ॥ दधिक्राव्णादिनाचाग्नआयैःषड्भिर्विशुद्धये ॥ सूतकेसूतिकागारात्पारितोद्वि
युगादधः ॥ स्थितस्याग्नेर्विनाशस्स्याद्दाहिश्चेत्पूर्ववद्विधिः ॥ ७ ॥ ७ ॥ अथग्रहणप्रायश्चित्तं ॥ राहुरश्मिहतेसूर्ये
हुनेदिंदौचनिष्कृतिः ॥ उद्वयंचतथोदुत्यंचित्रादेव्योंद्दतीरपि ॥ बृहन्नारदीये ॥ संप्राप्तेहोमकालेतुग्रहणेचंद्रसूर्ययोः
॥ चंद्रोपरागेजुहुयादप्सुमेसोमइत्यृचा ॥ आप्यायस्वेतिचद्वाभ्यांनाप्यायस्वमदिंतम ॥ सूर्योपरागेजुहुयादासत्य।

द्येनचाहुतिं ॥ उद्वयाद्यैस्त्रिभिर्मंत्रैर्महाव्याहृतिभिस्तथा ॥ व्याहृतीभिश्चविप्रेंद्राःकुर्युःकर्मयथोदितं ॥ यदिनद्युत्तरणे ॥
नावाचतारितेवन्हौप्लवेनान्येन वानदीं ॥ समुद्रायादिनाजातवेदसेचमनस्वतीं ॥ मिंदाहुतीर्व्याहृतीश्चमहाद्याजुहुयाद्बु
धः ॥ अनादिष्टेषुसर्वेषुवन्हेर्दोषेषुबुद्धिमान् ॥ प्रायश्चित्तंमनस्त्वत्यापाद्यादीन्व्याहृतीर्हुनेत् ॥ प्रयोगतिलके ॥ हुतम
ध्येविनष्टेऽग्नावयमेवविधिःस्मृतः ॥ पुनराधानकर्मैवमुद्वातस्यचनान्यथा ॥ समारूढाग्निररणिस्समिद्वापतितायदि ॥
जलेवाजलासिक्तावातामायादीग्निनाविना ॥ संशोष्यलौकिकाग्नौतामभ्याधायविधानतः ॥ जातवेदादिकंचाग्न आद्यैः
षड्भिर्मनस्वती ॥ मिंदाहुतीर्व्याहृतीश्चजुहुयाच्चस्त्रुवेणतु ॥ प्रत्यक्षधारितोवन्हिस्संस्पृष्टोन्येनवन्हिना ॥ उभौविविच्य
जुहुयादुभयत्रस्त्रुवाहुतिः ॥ वितेत्यामादिमंत्राभ्यांमनोमिंदाचव्याहृतिः ॥ अरण्योस्समिधोश्चैवमिथःस्पर्शेत्वयं
विधिः ॥ एकदेशयुतस्याग्नेर्विभागोनोपपद्यते ॥ पूर्वोक्तैर्जुहुयात्तत्रमंत्रैरेतैस्स्त्रुवाहुतिः ॥ लौकिकाग्नियुतस्यापिवन्हेरेवं
विधिःस्मृतः ॥ संग्रहे॥औपासनपरित्यागदोषउक्तः ॥औपासनविहीनस्तुस्वभार्यागमनंद्विजः ॥ स्वमातृगमनंतस्य
तज्जातश्चैवशूद्रजः॥द्वादशाहमनाग्निःस्यात्संध्याहीनोदिनत्रयं ॥ चतुर्वेदधरोविप्रः शूद्रएवनसंशयः ॥ अनाग्निकस्याविप्रस्य
भार्ययापच्यतेहविः॥गोमांसेनसमंह्यन्नंद्विजश्चंडालएवसः॥अनग्निकस्सन्विप्रस्तुपुत्रमुत्पादयेतयदि ॥ सानारीगणिकाप्रो
क्तातत्सुतोगोलकोभवेत् ॥ अनग्निकस्यविप्रस्यकरेयःकर्मदोभवेत् ॥ आभिचारत्वमाप्नोतिशूद्रत्वमधिगच्छति ॥ अन
ग्निकंद्विजंदृष्ट्वाकुर्यात्सूर्यावलोकनं ॥ स्पृष्ट्वास्नायात्सचेलस्तभाषणेतद्धरिंस्मरेत ॥ पनश्चकारिकायां ॥ औपासनवि

हीनस्यनरजन्मनिरर्थकं ॥ तदन्नंकृमिवद्भुक्तंतत्संगंदास्यमेवच ॥ औपासनपरित्यागीमासमेकंनिरंतरं ॥ यदिपत्न्या
श्चसंसर्गंस्वमातृगमनंभवेदिति ॥७॥ अथप्रयोगः॥यदिदंपत्योरग्निसहप्रवासेपुनर्होमकालात्प्रागेवागत्याग्निमुपातिष्ठते॥
ममनामप्रथमंजातवेदः पितामाताचदधतुर्यदग्रे ॥ तत्त्वंबिभृहिपुनरागदैतोस्तवाहंनामबिभराण्यग्ने ॥ ममनामतवच
जातवेदोवाससीइवविवसानौयेचरावः ॥ आयुषेत्वंजीवसेवयंयथायथंविपरिदधावहैपुनस्ते ॥ इतिद्वाभ्यामुपस्थाय ॥स
प्ततेअग्नेतिस्रस्तंतुमतीर्मनोज्योतिर्व्याहृतिभिश्चचतुर्गृहीतंजुहुयात् ॥ अथयद्यग्निः शवरहितसूतकगृहेवसेत्तमादायापो
हिष्ठेतितिसृभिः॥दधिक्राव्णः ॥ ॐअग्नआयूँषिपवसआसुवोर्जमिषंचनः ॥ आरेबाधस्वदुच्छुनाँस्वाहा ॥ अग्नयइ
दं ॥ १ ॥ ॐअग्नेपवस्वस्वपाअस्मेवर्चस्सुवीर्यं ॥ दधत्पोषँरयिंमयिस्वाहा ॥ अग्नयइदं ॥ ॐअग्नेपावकरोचिषा
मंद्रयादेवजिव्हया ॥ आदेवान्वक्षियक्षिचस्वाहा ॥ अग्नयइदं ॥ ३ ॥ ॐसनः पावकदीदिवोग्नेदेवाँइहावह ॥ उप
यज्ञँहविश्चनः स्वाहा ॥ अग्नयइदं ॥ ४ ॥ ॐअग्निश्शुचिव्रततमः ॥ शुचिर्विप्रः शुचिः कविः ॥ शुचीरोचतआहु
तःस्वाहा ॥ अग्नयइदं ॥ ५ ॥ ॐउदग्नेशुचयस्तवशुक्राभ्राजंतईरते ॥ तवज्योतीँष्यर्चयः स्वाहा ॥ अग्नयइदं
॥ ६ ॥ इतिदशभिर्जुहुयात् ॥ आपोहिष्ठेतितिसृणां ॥ अद्भ्यइदं ॥ अन्यस्याः ॥ दधिक्राव्णइदं ॥ अथचेंद्रोपरा
गे॥अप्सुमेसोमः ॥ आप्यायस्व ॥ ॐअप्यायस्वमदिंतमसोमविश्वाभिरूतिभिः ॥ भवानस्सप्रथस्तमः स्वाहा ॥
सर्वत्रसोमायेदं ॥ अथसूर्योपरागे ॥ ॐआसत्येनरजसा ॥ सवित्रेदेवायेदं ॥ ॐउद्वयंतमसस्पारि ॥ सूर्यायज्यो

तिषइदं ॥ ॐउदुत्यंजातवेदसं ॥ सूर्यायेदं ॥ ॐचित्रंदेवानां ॥ सूर्यायेदं ॥ महाव्याहृतीर्व्याहृतीश्वजुहुयात् ॥अ
थनद्युत्तरणे ॥ समुद्रायवयुनायसिंधूनांपतयेनमः ॥ नदीनागुँसर्वासांपित्रेजुहुताविश्वकर्मणेविश्वाहामर्त्यगुँहविः स्वाहा
॥ समुद्रायसिंधूनांपतयइदं ॥ ॐजातवेदसे ॥ जातवेदसेऽग्नयइदं ॥ मनोज्योतिः ॥ ॐमनसेज्योतिषइदं॥मिंदाहु
तीर्महाव्याहृतीर्व्याहृतीश्वजुहुयात् ॥ अथयद्यारोपितसमिधोजलस्पर्शेतामादायसंशोष्य लौकिकाग्नावाजुह्वानउद्बुध्य
स्वेतिद्वाभ्यांनिधायाज्यंसंस्कृत्य॥ ॐजातवेदसे ॥ अग्नआयूँगुषीत्यादिपूर्वोक्ताः षट्॥ॐमनोज्योतिः ॥मिंदाहुतीर्व्या
हृतीश्वजुहुयात् ॥ अथान्याग्निसंसर्गे ॥ उभौविविच्यउभयत्रजुहोति ॥ॐवितोविष्वग्वातजूतासोअग्नेभामासःशुचेशुचय
श्वरंति॥तुविम्रक्षासोदिव्यानवग्वावनावनंतिधृषतारुजंतः स्वाहा ॥ अग्नयइदं ॥ ॐत्वमग्नेमानुषीरीडतेविशोहोत्राविदं
विविचिगुँरत्नधामतं ॥ गुहासंतगुँसुभगविश्वदर्शतंतुविष्मणसगुँसुयजंघृताश्रियगुँस्वाहा॥ अग्नयइदं॥ मनोज्योतिः॥
मिंदाहुतीर्व्याहृतीश्वजुहुयात् ॥ इत्यौपासनप्रायश्चित्तप्रयोगः ॥ ॥ ७ ॥ ७ ॥ अथस्थालीपाकः ॥ पर्वणिपर्वणिचा
ग्नेयस्थालीपाकः॥ तंचविवाहानंतरंपंचमेहनिपार्वणाख्येहोमेकृते तदनंतरंयापौर्णमास्यागामिष्यतितस्यामेवारभेत ॥सो
यमाहिताग्नेर्दर्शपूर्णमासस्थानयोभवतिनत्वमावास्यायामारंभः ॥ यद्यारंभकालेमलमासगुरुशुक्रास्तबाल्यवार्धिकग्रहण
पौषमासास्तत्राप्यारंभःकर्तव्यः॥तथाचगर्गः ॥नामकर्मचदर्शेष्टिंयथाकालंसमाचरेत्॥अतिपातेसतितयोःप्रशस्तेमासिपु
ण्यभइति ॥ दर्शेष्टिमितिपौर्णमास्याउपलक्षणं॥संग्रहकारस्तु॥उपरागोधिमासश्चयदिप्रथमपर्वणि ॥ तथामलिम्लुचेपौ

षेनान्वारंभणमिष्यते॥गुरुभार्गवयोर्मौढ्ये चंद्रसूर्यग्रहे तथा॥इत्यादिसंग्रहकारादिवचनान्यालस्यादिनास्वकालानुपक्रांत स्थालीपाकादिप्रारंभविषयाणीतिप्रयोगपारिजाते ॥ अतएवारंभकालेमलमासादावपिकार्यइत्यर्थः॥७॥अथपर्वनिर्णयः ॥ दर्शपूर्णमासाभ्यांयजेतेत्यत्रदर्शपूर्णमासशब्दाभ्यांपक्षसंधिरेवोच्यते॥एवंपर्वशब्देनापिपक्षसंधिरुच्यते॥ यदाचंद्रः पूर्णोभवतिसापूर्णिमा ॥अमाशब्दस्यसहार्थः यदातिशयेनयस्यांतिथौसूर्यचंद्रमसौसहवसतस्सामावास्या ॥एतद्द्वयंपक्षसंधिक्षणएवसंभवति॥अतोदर्शपूर्णमासशब्दाभ्यांसंधिरेवविवक्षितः ॥एवंसतितस्यसंधेःक्षणिकत्वेनसाध्यसकलयागप्रयोगसमापनायोग्यत्वात्तत्सन्निहितेप्रतिपत्पंचदश्यौप्रयोगयोग्येतिथीअवश्यंगृहीतव्ये ॥ अतः पक्षद्वयवृद्ध्यापक्षांतउपोष्यइति यागान्वाधानयोस्तिथिद्वयव्यवस्थावचनमुपपद्यते ॥ पूर्वेद्युरन्वाधायोपोष्यपरेद्युर्यागविधानात् ॥ तथाचश्रूयते ॥ पूर्वेद्युरग्नीनन्वादधात्युत्तरमहर्देवान्यजेतेतितेनान्होरेवभेदोयागान्वाधानेभवतः ॥ नरात्रौनाप्येकस्मिन्नेवाहनीति ॥ एवंस्थालीपाकस्यापितद्धर्मत्वात्तद्वदेवसमस्तंद्रष्टव्यं ॥ नतावत्संधौ ॥ संधिसन्निहितेयजेतेतिवचनात् ॥ नापिसंधिमभितोयजेतेति ॥ किंतुप्रतिपदियजेतेति ॥ आभ्यांनिषेधविधिभ्यांसंधेःपुरस्तादन्वाधायपश्चाद्यजेतेतिगम्यते ॥ अनेनप्रवासादिवशात्सद्योवान्वाधानयागौकर्तव्याविितिसूचितं ॥ नचावर्तनादुपरिसंधौश्वोभूतेप्रतिपदिपूर्वाण्हेभवतीष्टिः दृष्टचंद्रत्वात् ॥ यस्मिन्नहनिपुरस्तात्पश्चाच्चंद्रमानदृश्यतेतदहर्यजेतेत्युक्तत्वात् ॥ किंच ॥ उपास्तमयसंधौरात्रिसंधौवोत्तरेहनियजेतेतिवचनाद्यत्रपूर्वदिनेइष्टिपर्याप्तःप्रतिपत्कालोनास्ति तत्रैवविषयेदृष्टचंद्रोपियागस्यग्राह्यः ॥ अतए

वालस्यादिनापूर्वदिनेसंभवत्प्रतिपदतिक्रमविषयमिष्टिदिनेचंद्रदर्शननिमित्तंप्रायश्चित्तमुपपद्यते ॥प्रायश्चित्तंतुग्याहृतीर्हुत्वाद्विजातयेदंडंदद्यादिति॥नह्यन्यथाविहितप्रशस्तकरणेप्रायश्चित्तविधानमस्तीति॥एवंयजनीयमहः प्रधानमादौनिश्चित्य तदनुरोधेनपूर्वेद्युरपंचदश्यामप्यन्वाधानंयुक्तं ॥तदेवंपक्षसंधिसमयेसन्निहितेप्रतिपदहन्येवपर्याप्तेप्रविष्टेसत्यपराण्हेपियष्टव्यं॥संधिसन्निहितस्यप्रतिपदन्होद्वालप्रयोगपर्याप्तप्रतिपत्तिथिःप्रागस्तमयात्सप्ताष्टघटिकालक्षणास्तिथिनिर्णयः॥यथा॥इष्टेरलंसाप्रतिपत्स्वनाडयस्सप्ताष्टयस्यादिवसेभवंति ॥ क्षीणासुतत्कर्मतिथेरिहाद्यःकल्पोथवृद्धासुभवेद्द्वितीयः॥इति॥अस्यार्थः॥यांतिथिमुपादायकर्मोच्यतेसाकर्मतिथिरुच्यते॥तस्यास्तदुत्तरायाश्चतिथेर्घटिकाएकीकृत्यार्धयेत्॥ताःस्वनाड्यःकर्मनाड्यउच्यंते॥एवंकृतेइष्टेरलंसापर्याप्ताप्रयोगायेतिशेषः ॥यस्याःस्वनाड्योदिवसमध्येसप्तावराष्टावरावाभवंतीति॥अनयोर्व्यवस्थोच्यते॥क्षीणास्विति॥यदिस्वनाड्यः गणितागतनाडिभ्योन्यूनाभवंति तदाद्यः कल्पस्सप्तावरइत्यर्थः॥यद्यधिकास्तदाद्वितीयोष्टावरइत्यर्थः॥तत्रवचनांतरं ॥ चतुर्दश्यांचतुर्यामेअमायत्रनदृश्यते ॥ श्वोभूतेप्रतिपत्तत्रभूतेकव्यादिकीक्रिया॥इति॥ अमावास्याचतुर्यामभक्ष्येप्रतिपदृश्यतेचेदित्यर्थः॥भूतेचतुर्दश्यांपिंडापितृयज्ञइति ॥अस्यापिपूर्वोक्तवचनस्यसमानार्थएव ॥ कथंश्वोभूतेप्रतिपत्तिथि रिष्टिप्रयोगायालमितिशेषः ॥ सप्ताष्टावरनाडिकेतियावत् ॥ गणितागतचतुर्दशीपंचदशीघटिकायोगार्धवत्यांचतुर्दश्यांपंचदशीदृश्यते॥तत्रपिंडापितृयज्ञस्तस्यपूर्वेद्युरेवविहितत्त्वात् ॥ अत्रसंग्रहः॥प्रतिपत्पर्वयोगार्धेहीनेवापर्वणोधिके॥सप्ताष्टावरनाड्यन्हिप्रतिपच्चेदलंयजेत् ॥ इष्टिप्रयोगपर्याप्तेप्रविष्टेप्रति

पत्तिथौ ॥ यष्टव्यमपराण्हेपिनालंचेदुत्तरेह्नीति ॥ प्रायश्चित्तंचनिद्राचक्रीडालस्यादिनायतः ॥ इति ॥ संभवत्पूर्वाति
क्रमेनत्वसंभवइति ॥ यजनीयदिनात्पूर्वेद्युरेवान्वाधानमाचरेत् ॥ पूर्वेद्युरेवपिंडपितृयज्ञइति ॥ अनेनपर्वप्रतिपदोर्वृद्धि
क्षयघटिकाद्विधाकृता॥ पर्वणियोजितायांक्षयेस्तमयस्यसप्तावराष्टावष्टावरायदिदृश्यते तदापर्वण्येवापराण्हेपियष्टव्यं
॥ अन्यथापरेद्युः प्रतिपद्यपियष्टव्यंभवतीति ॥ इतिपर्वनिर्णयः ॥ ७ ॥ ७ ॥ अथान्वारंभणीयप्रयोगः ॥ पर्वणिप्रथ
मप्रयोगारंभेपूर्वेद्युरेवान्वारंभणीमिष्टिंकुर्यात् ॥ यथा ॥ कर्ताप्रातरौपासनांतंनित्यकर्मकृत्वा स्नानपवनादिगणपति
पूजापुण्याहवाचनानिचकृत्वा अग्नाविष्णूसरस्वतीसरस्वंतश्चप्रिंयंतामितिविशेषः ॥ पुनःप्राणानायम्यदेशकालौसंकी
र्त्याग्नेयस्थालीपाकदर्शपूर्णमासावारप्स्यमाणोन्वारंभणीयामिष्टिंकरिष्यइतिसंकल्प्य औपासनाग्निंप्रतिष्ठाप्यान्वारंभ
णीयहोमःकर्माधारवत्तंत्रमित्यादि पचनोनामाग्निः अग्नाविष्णूसरस्वतिसरस्वांश्चदेवताचरुर्हविरित्यादिसद्योयक्ष्य इत्यु
क्त्वान्वाधानादिकृत्वा प्रणीताप्रणयनात्पूर्वमेवाज्यंनिरूप्योत्पूयस्रुक्स्रुवौनिष्टप्य संमृज्यस्रुचिचतुर्गृहीतंगृहीत्वा चतुर्हो
तारंमनसानुद्रुत्यजुहोति ॥ ॐपृथिवीहोताद्यौरध्वर्यूरुद्रोग्नीद्बृहस्पतिरुपवक्तावाचस्पतेवाचोवीर्येणसंभृततमेनायक्ष्यसे
यजमानायवार्यमासुवस्करस्मैवाचस्पतिस्सोमंपिबतिजजनादिंद्रमिंद्रियायस्वाहा ॥ वाचस्पतयेब्रह्मणइदं ॥ अपरंचतु
र्गृहीतंगृहीत्वा ॥ ॐपूर्णापश्चादुतपूर्णापुरस्तादुन्मध्यतःपौर्णमासीजिगाय ॥ तस्यांदेवाअधिसंवसंतउत्तमेनाकइहमा
दयंतामग्नीषोमौप्रथमौवीर्येणवसून्रुद्रानादित्यानिहाजिन्वतं ॥ माध्यगुँहिपौर्णमासंजुषेथांब्रह्मणावृद्धौसुकृतेनसातावथा

स्मभ्यगुँसहवीरागुँरयिन्नियच्छतगुँस्वाहा ॥ अग्नीषोमाभ्यामिदं ॥ पुनश्चतुर्गृहीतंगृहीत्वा ॥ ॐनिवेशनीसंगमनीव सूनांविश्वारूपाणिवसून्यावेशयंती ॥ सहस्रपोषगुँसुभगाररराणासानआगन्वर्चसासंविदानोंयत्तेदेवाअदधुर्भागधेयम मावास्येसंवसंतोमहित्वा ॥ सानोयज्ञंपिपृहिविश्ववारेरयिन्नोधेहिसुभगेसुवीरगुँस्वाहा ॥अमावास्यायाइदं॥अथप्रणीता प्रणयनादिचरुश्रपणाज्यसंस्काराद्याग्निमुखांतंकृत्वापक्वाज्जुहोति॥ॐआग्नाविष्णूमहितद्वाम्महित्वंवीतंघृतस्यगुह्यानिना म॥दमेदमेसप्तरत्नादधानाप्रतिवांजिव्हाघृतमाचरण्यो मग्नाविष्णूमहिधामप्रियंवांवीथोघृतस्यगुह्याजुषाण ॥ दमेदमे सुष्टुतीर्वावृधानाप्रतिवांजिव्हाघृतमुच्चरण्येस्वाहा॥ॐअग्नाविष्णुभ्यामिदं ॥ पुनरवदाय ॥ ॐ प्रणोदेवीसरस्वतीवाजे भिर्वाजिनीवती॥ धीनामवित्र्यवतो मानोदिवोबृहतःपर्वतादासरस्वतीयजतागंतुयज्ञं ॥ हवंदेवीजुजुषाणाघृताचीशग्मा न्नोवाचमुशतीशृणोतुस्वाहा॥सरस्वत्याइदं॥पुनरवदाय॥ॐपीपिवांगुँसगुँसरस्वतस्तनंयोविश्वदर्शतः ॥ धुक्षीमहिप्रजा मिषोंयेतेसरस्वऊर्मयोमधुमंतोघृतश्चुतः॥तेषांतेसुम्नमीमहेस्वाहा ॥ सरस्वतइदं॥इतिपक्वान्नयंहुत्वास्विष्टकृतमवदायांतः परिधौनिधाय व्याहृतीर्हुत्वास्विष्टकृत्प्रभृतिहोमशेषंसमाप्य तदानीमेवप्राणानायम्यदेशकालौसंकीर्त्य श्रीपरमेश्वरप्री त्यर्थंपौर्णमासेनहविषायक्ष्यइतिसंकल्प्य पौर्णमास्याग्नेयस्थालीपाकहोमःकर्माधारवत्तंत्रमित्यादि पचनोनामाग्निरग्निर्दे वता चरुर्हविरग्निःस्विष्टकृदित्यादि तास्सर्वास्सन्निहितास्संतुएवंसांगेनकर्मणासद्योयक्ष्ये ॥ तदंगमन्वाधानंकरिष्यइ तिसंकल्प्य व्याहृतिभिस्तिस्त्रस्समिधआधायेध्माबर्हिषीसन्नह्यव्रतीभूत्वोपवसेत् ॥ अक्षारलवणाशित्वंनखट्वाशयनंना नृ

तभाषणंब्रह्मचर्यंचव्रतंरजस्वलासूतिकापतितांत्यजातिभिरसंभाषणंचेति ॥ अथश्वोभूतेप्रातरौपासनंहुत्वा॥जुष्टोदमूनाइ
त्युपस्थाय पात्रासादनादितंडुलनिर्वापश्रपणाद्यग्निमुखान्तंकृत्वापक्वाज्जुहोति ॥ ॐअग्निर्मूर्द्धादिवः ककुत्पतिः पृथिव्या
अयं ॥ अपागुँरेतागुँसिजिन्वतोंभुवोयज्ञस्यरजसश्चनेतायत्रानियुद्भिस्सचसेशिवाभिः ॥ दिविमूर्द्धानंदधिषेसुवर्षां
जिव्हामग्नेचकृषेहव्यवाहगुँस्वाहा ॥ अग्नयइदं ॥ स्विष्टकृतमवदायांतः परिधौनिधाय ॥ ॐऋषभंवाजिनंवयंपूर्णमासं
यजामहे ॥ सनोदोहतागुँसुवीर्यं ॥ रायस्पोषगुँसहस्त्रिणं ॥ प्राणायसुराधसे ॥ पूर्णमासायस्वाहा ॥ पूर्णमासायेदं ॥
स्विष्टकृदादिहोमशेषंसमापयेत् ॥ अथामावास्यायां ॥ अमावास्येनहविषायक्ष्यइति संकल्प्यान्वाधानादिसर्वंपक्वंचपू
र्ववत्कृत्वा स्विष्टकृतमवदायांतः परिधौनिधाय ॥ ॐअमावास्यासुभगासुशेवा॥धेनुरिवभूयआप्यायमाना ॥ सानोदोह
तागुँसुवीर्यं ॥ रायस्पोषगुँसहस्त्रिणं ॥ अपानायसुराधसे ॥ अमावास्यायैस्वाहा ॥ अमावास्यायाइदं॥ततःस्विष्टकृ
दादिसर्वंपूर्ववत्॥इतिस्थालीपाकप्रयोगः ॥७॥ अथदर्शपूर्णमासातिपन्नप्रायश्चित्तं ॥तत्रदर्शातिपन्नेपाथिकृत्तस्यप्रयोगः
॥ दर्शमुख्यकालातिपन्नप्रायश्चित्तपूर्वकममावास्येनहविषायक्ष्यइति संकल्प्याग्निमुखांतंकृत्वा स्त्रुचिचतुर्गृहीतंगृहीत्वा ॥
ॐअग्नेनय*विधेमोमादेवानामपिपंथामगन्मयच्छक्नवामतदनुप्रवोढुं॥ अग्निर्विद्वान्त्सयजात्सेदुहोतासोअध्वरान्त्सऋतू
न्कल्पयातिस्वाहा॥अग्नयेपाथिकृतइदं ॥ इतिजुहुयात् ॥ अथपौर्णमास्यांवैश्वानरी॥पूर्ववत्संकल्प्याग्निमुखांतंकृत्वा स्त्रु
चिचतुर्गृहीतंगृहीत्वा ॥ ॐवैश्वानरोनऊत्याप्रयातुपरावतः ॥ अग्निरुक्थेनवाहसोपृष्टोदिविपृष्टोअग्निः पृथिव्यांपृष्टोवि

श्वाओषधीराविवेश ॥ वैश्वानरः सहसापृष्टोअग्निस्सनोदिवासरिषः पातुनक्तगुँस्वाहा ॥ वैश्वानरायाग्नयइदं ॥ इतिजु
हुयात् ॥ उभेअतीतेपथिकृद्वैश्वानरयौकार्यै ॥ बहुष्वतीतेष्वन्वारंभणीकार्या ॥ अथव्रतलोपे ॥ पूर्ववत्संकल्प्याग्निमुखां
तंकृत्वा स्रुचिचतुर्गृहीतंगृहीत्वा ॥ ॐत्वमग्नेव्रतपाअसिदेवआमर्त्येष्वा ॥ त्वंयज्ञेष्वीड्योंयद्वोवयंप्रमिनामव्रतानिविदुषां
देवाअविदुष्टरासः ॥ अग्निष्टद्विश्वमापृणातिविद्वान्योभिर्देवागुँऋतुभिः कल्पयातिस्वाहा ॥ अग्नयेव्रतपतयइदं ॥ इतिजु
हुयात् ॥ अत्रकारिका॥दर्शेचपौर्णमास्यांचस्थालीपाकंव्यतिक्रमे ॥ अग्नेनयेत्यादेवाना।मित्याभ्यांस्रुचिसर्पिषा ॥ चतुर्गृ
हीतमाज्यंचजुहुयात्पक्ववद्बुधः ॥ दर्शव्यतिक्रमेपूर्णमास्यांवैश्वानरादिना ॥ पृष्टोदिवीतिजुहुयात्पार्वणातिक्रमेविधिः ॥
द्वयोरतिक्रमेस्थालीपाकयोः स्यादयंविधिः ॥ स्थालीपाकत्रयेतीतेप्रारंभः स्यात्पुनर्ध्रुवमिति ॥ गृह्यसूत्रे ॥ पर्वणिपर्व
णिचाग्नेयस्थालीपाकस्सएषआघारवान्वास्यादाग्निहोत्रिकोवास्यादापूर्विकोवा इत्युक्तत्त्वादेतेषामन्यतमेनवातंत्रेणस्था
लीपाकः कार्यएव ॥ इत्यन्वारंभणीयस्थालीपाकप्रयोगः ॥ ७ ॥ ७ ॥ अथग्रहशांतिः ॥ गर्भाधानादिष्ववश्यंकर्तव्य
त्वादादौग्रहाराधनमुच्यते ॥ तत्तुनित्यनैमित्तिककाम्यभेदेनत्रिविधं ॥ तथाचगृह्यसूत्रे ॥ मासिमास्यृतावृतावयनेचंद्र
सूर्यग्रहेविषुवे शुभाशुभेजन्मनक्षत्रेवातद्ग्रहाणामातिथ्यंसंवत्सरादपिप्रयुंजानस्सर्वान्कामानवाप्नोतीति पारिजाते ॥ शौ
नकः ॥ ग्रहशांतिंप्रवक्ष्यामिशौनकोहंद्विजन्मनां ॥ पुण्येहनिशुभेवारेकुर्याद्वाथत्रिजन्मसु ॥ अयनेविषुवेचैवसोमसूर्योप
रागयोः ॥ ग्रहाणामुग्रचेष्टानांनित्यंशांतिंसमाचरेत् ॥ आश्वलायनोपि ॥ ग्रहागावोनृपाविप्रानार्यश्चस्वपतिप्रियाः ॥

पूजिताः पूजयिष्यंतिनिर्दहंत्यवमानिताः ॥ सर्वापद्भ्योनिवृत्त्यर्थंनित्यंपूज्यानवग्रहाइति ॥ एषुनित्यत्वं ॥ अथनैमित्ति
कं ॥ उत्पलपरिमले ॥ कार्यारंभेषुसर्वेषुप्रतिष्ठास्वध्वरेषुच ॥ नववेश्मप्रवेशेच गर्भाधानादिकर्मसु ॥ आरोग्यस्नानस
मयेसंक्रांतौरोगसंभवे ॥ आभिचारेचयः कुर्याद्ग्रहपूजांविधानतः ॥ सोभीष्टफलमाप्नोतिनिर्विघ्नेननसंशयइति ॥ अत्रका
र्यारंभेष्वित्यादौसर्वत्रनिमित्तसप्तमी ॥ अतस्तेषुनैमित्तिकत्वं ॥ अथकाम्यं ॥ सकलविपदपगमसंपदागमवृष्ट्यायुः
पुष्ट्यादिफलकामनासुकाम्यः ॥ अत्राश्वलायनः ॥ क्षीयंतेविपदः क्षिप्रंवर्द्धंतेसंपदोखिलाः ॥ तापत्रयाश्चनश्यंतिसर्व
कार्याः प्रदक्षिणाः ॥ भवंत्यघानिनश्यंतिग्रहयज्ञकृतान्नृणां ॥ कामानांचायुराद्यानांलब्धयेचविधानतः ॥ ( कुर्यादिति
शेषः ॥ ) याज्ञवल्क्यः ॥ श्रीकामः शांतिकामोवाग्रहयज्ञंसमाचरेत् ॥ वृष्ट्यायुः पुष्टिकामोवातथैवाभिचरन्नपि ॥ ब्र
ह्मयामले ॥ दुष्टारिष्टेसमायातेकर्तव्यंग्रहशांतिकं ॥ वृष्टिपुष्ट्यायुरारोग्यसप्तराज्यांगवृद्धयइति ॥ काम्यत्वं ॥ नन्वत्र
सर्वत्रफलश्रवणात्काम्यत्वमेवकथंनित्यत्वमितिचेत् ॥ नित्यपदग्रहणान्नित्यत्वंनिमित्तसप्तमीश्रवणान्नैमित्तिकत्वंचस्या
तामित्युक्तत्त्वाददविरोधः ॥ अत्राकरणेप्रत्यवायश्रवणाभावात्कथंजन्मत्रयादिषुग्रहयज्ञस्यानित्यत्वमितिचेन्नित्यपदश्रवणे
नेतिब्रूमः ॥ नित्यत्वसाधनानांलिंगानांमध्येनित्यपदस्यपरिगणनात् ॥ तदुक्तंकालनिर्णये ॥ नित्यंसदायावदायुर्नकदा
चिदतिक्रमेत् ॥ इत्युक्तोतिक्रमेदोषःश्रुतेरत्यागचोदनात् ॥ फलश्रुतेर्वीप्सयाचतन्नित्यमितिकीर्तितमिति ॥ गुरुशु
क्रास्तमलमासादिषुकाम्यकर्मणांवर्जत्वंनित्यनैमित्तिकानांकर्तव्यत्वंचस्मृतौदर्शितं॥तथाचनिर्णयसिंधौजाबालिः॥ नित्य

नैमित्तिकेकुर्याच्छ्राद्धंकुर्यान्मलिम्लुचे ॥ तिथिनक्षत्रवारोक्तंकाम्यंनैवकदाचनेति ॥ अथवर्ज्यानि ॥ कालादर्शे ॥ अनि
त्यमनिमित्तंचदानंचमहदादिकं ॥ अग्न्याधानाध्वरापूर्वतीर्थयात्रामरेक्षणं ॥ देवारामतडागादिप्रतिष्ठामौंजिबंधनं ॥ आ
श्रमस्वीकृतिः काम्यवृषोत्सर्गश्चनिष्क्रमः ॥ राजाभिषेकप्रथमचूडाकर्मव्रतानिच ॥ अन्नप्राशनमारंभोग्रहाणांचप्रवेश
नं ॥ स्नानंविवाहोनामानिपर्णदेवमहोत्सवं ॥ व्रतारंभसमाप्तीचकाम्यंकर्मचपाप्मनां ॥ प्रायश्चित्तंतुसर्वस्यमलमासेवि
वर्जयेत् ॥ उपाकर्मोत्सर्जनंचपवित्रदमनार्पणमिति ॥ बृहस्पतिः ॥ बालेवायदिवावृद्धेशुक्रेवास्तंगतेगुरौ ॥ मल
मासइवैतानिवर्जयेद्देवदर्शनमिति ॥ अनेनास्तमलमासादिषुकाम्यस्यनिषेधात्काम्यनिमित्तग्रहशांतिर्नकर्तव्या ॥
नित्यनैमित्तिकेषुतुकर्तव्यैवेति॥इतिग्रहशांतिनिर्णयः॥ ७ ॥ अथपूजाविधिः ॥ प्रणवंत्वादितः कृत्वाभुर्भूवस्वस्ततःपरं॥
चतुर्थ्यानामसंयुक्तंनमस्कारांतयोजितं ॥ एषमंत्रस्समाख्यातोग्रहपूजाविधायकः ॥ अनेनावाहनंकार्यमनेनैवविस
र्जयेदिति ॥ गृह्यसूत्रेग्रहाणांक्रमउक्तः॥ रव्यारभृगुसोमज्ञागुरुमंदाहिकेतवः ॥ इतिसूत्रक्रमोज्ञेयोग्रहाणांचहुता
दिषु ॥ अनेनैवक्रमेणैवपूजाहोमादिकंचरेत् ॥ इतिगृह्यसूत्रोक्तप्रकारेणग्रहाराधनमुच्यते ॥ सूत्रे ॥ भास्क
रांगारकौरक्तौश्वेतौशुक्रनिशाकरौ ॥ सोमपुत्रगुरूचैवतावुभौपीतकौस्मृतौ ॥ कृष्णंशनैश्चरंविद्याद्राहुंकेतुंतथैवच॥
ग्रहवर्णानिपुष्पाणिप्राज्ञस्तत्रोपकल्पयेत् ॥ बलिंचैवोपहारांश्चगंधमाल्यंतथैवच ॥ यथाक्रमेणोपहरेत्सर्वेषामानुपू
र्वशः ॥ अथसमिधः ॥ अर्कश्चखादिरश्चैवउदुंबरपलाशकौ ॥ अपामार्गाश्वत्थशम्योदूर्वादर्भाः क्रमात्स्मृताः ॥

सर्वेषामलाभेपालाशीरितिसूत्रं ॥ पुनश्चसूत्रे ॥ तंडुलैस्थंडिलंकृत्वाग्रहानावाहयति ॥ मध्येतुभास्करंविंद्याल्लोहि
तंदक्षिणेनतु ॥ पूर्वेणभार्गवंविंद्यात्पूर्वदक्षिणतःशशी ॥ पूर्वोत्तरेबुधंविंद्यादुत्तरेतुगुरुंतथा ॥ पश्चिमेतुशनिंविंद्याद्राहुंदक्षि
णपश्चिमे ॥ पश्चिमोत्तरतःकेतुर्ग्रहस्थानंविधीयते ॥ दक्षिणोत्तरभागेतुसाधिप्रत्यधिदेवताः ॥ इतिसंग्रहे ॥ भानुभार्ग
वसोमाररराहुमंदाश्चकेतवः ॥ गुरुर्बुधश्चसंपूज्यामध्यपूर्वादिषुक्रमात् ॥ यवाढक्यस्तंडुलाश्चश्यामाकामुद्गएवच॥चणका
स्तिलमाषाश्चकुलित्थाश्चक्रमात्क्षिपेत् ॥ इतिधान्यानि ॥ अथमंडलं ॥ वर्तुलंचत्रिकोणंचपंचकोणंतथैवच ॥ चतु
ष्कोणंतथाबाणंसदीर्घचतुरस्रकं ॥ धनुः शूर्पंध्वजश्चेतिभान्वादीनांतुमंडलं ॥ अथग्रहदेवताः ॥ सूत्रे ॥ ईश्वरंभा
स्करंविंद्यात्स्कंदमंगारकंतथा ॥ शुक्रंशचीपतिंविंद्यादुमांचैवानिशापतिं ॥ बुधंनारायणंविंद्याद्ब्रह्माणंचगुरुंतथा ॥ यमंश
नैश्चरंविंद्याद्राहुंकालंतथैवच ॥ केतुमग्निमयंविंद्यादेवंदेवायथाग्रहाः ॥ देवताग्रहरूपेणदर्शयंतिशुभाशुभं ॥ अहिंसकं
स्यदांतस्यधर्मार्जितधनस्यच ॥ नित्यंचनियमस्थस्यसदासानुग्रहाग्रहाः॥ अश्रद्दधानमशुचिमजपंत्यक्तमंगलं ॥ ग्रहा
नयंतिसुव्यक्तंपुरुषंयमसादनमिति ॥ अधिदेवताः प्रत्यधिदेवताश्चतत्रैवसूत्रेदर्शिताः ॥ अग्नीश्वरौभास्करस्यभूक्षेत्रे
शौकुजस्यहि ॥ इंद्राणींद्रौसितस्याथआपोगौरीनिशापतेः ॥ विष्णुर्विष्णुर्बुधस्येंद्रमरुत्वन्ब्रह्मवैगुरोः ॥ शनेः प्रजापति
यमौराहोरुसर्पश्चनिर्ऋतिः ॥ केतोर्ब्रह्माचित्रगुप्तश्चाधिप्रत्यधिदेवताः ॥ लोकपालांदुर्गिविघ्नक्षेत्रवास्तुत्र्यंबकान् ॥ अ
भयंकरमृत्यूचअग्निंवैश्वानरंक्रमात् ॥ आवाहयेद्व्याहृतिभिर्यजेद्व्यष्टोपचारकैः ॥ अथमंत्राः ॥ सूत्रे आसत्येनाग्निंदूत

मेषामीशइत्यादित्याय ॥ अग्निर्मूर्द्धास्योनापृथिविक्षेत्रस्यपतइत्यंगारकाय ॥ प्रवः शुक्रायेंद्राणीमासुनारिष्विंद्रंवोवि
श्वतस्परीतिशुक्राय ॥ आप्यायस्वाप्सुमेसोमोगौरीर्मिमायेति सोमाय ॥ उद्बुध्यस्वविष्णोर्नुकंविष्णोरराटमितिबुधा
य ॥ बृहस्पतेअतींद्रमरुत्वइहपाहिब्रह्मजज्ञानमितिबृहस्पतये ॥ शन्नोदेवीःप्रजापतेनत्वेमंयमप्रस्तरमितिशनैश्चरा
य ॥ कयानश्चित्रआयंगौर्येत्तेदेवीनिर्ऋतिरितिराहवे ॥केतुंकृण्वन्ब्रह्मादेवानागुँसचित्रचित्रमितिकेतवे॥अथलोकपालानां
॥ त्रातारमिंद्रमग्निर्दाद्रविणंयमोदाधारपृथिवीमसुन्वंतगुँसधमादोद्युम्निनीशनोनियुद्भिरुसोमोधेनुगुँसहस्राणिसहस्रधेति
लोकपालानां ॥ जातवेदसेगणानांवाक्षेत्रस्यपतिनावयंवास्तोष्पतेत्र्यंबकंयतइंद्रस्वस्तिदाविशस्पतिर्येतेसहस्रमयुतंपा
शामूर्धानंदिवोअरतिंपृथिव्याइतिदुर्गादीनां ॥ अथर्त्विजः गृह्यपरिशिष्टे॥प्रागभ्युदयात्सप्ताहान्यंतरीत्यकुर्यात्तांदशावरा
हुतिंस्वयमेकःकुर्यादूर्ध्वमापंचाशतश्चत्वारऋत्विजःस्युः शतावराहुतावष्टौनवम आचर्यःस्वयमेववायदिस्वयमाचार्यःस्या
तद्भागंकल्पविदेदद्यात्तान्विधिवद्वरयित्वार्चयेदाचार्च आदित्यायजुहुयादितरेभ्यइतरेपूर्वोत्तरतंत्रमाचार्यःकुर्यात्तदेतरेतम
न्वारभेरन्निति ॥ अथकलशस्थापनं ॥ अथापरेणाग्निंप्राङ्मुखउपविश्याद्भिर्मार्जयंते ॥ इतिसूत्रेसूचितत्त्वात् ॥ कारि
कायांच ॥ पृथ्व्यादयस्तथासप्तप्रोक्ताः कलशदेवताः ॥ कलशंचाभिमंत्र्याद्भिस्तदीयाभिस्तदीक्षितं ॥ उच्चारयन्निमान्मं
त्रानभिषिंचेत्ततोगुरुरित्युक्तत्त्वात्कलशस्थापनंकार्यं॥पूजाविधिस्तुकारिकायां ॥नवानांभास्करादीनांशांत्यैयोर्चितुमिच्छ
ति॥सहैवभास्करेणायमर्चनीयोनकेवलः ॥ शन्याद्याः शनिवारेर्च्याः स्वेस्वेवारेतथेतरे ॥ इतिविष्णुभट्टौ ॥ सहैवसर्वत्र

हपूजाचेदादित्यवारेभवति एकैकग्रहोविषमस्थ:पूज्यतेचेदादित्यपूर्वक:स्वस्ववारेपूजनीयो राहुकेतूशनिवारेपूज्याविति
॥ ध्व॥अथप्रयोगः॥ आत्मनोनुकूलेचंद्रनक्षत्रेचसंक्रांतावयनयोर्ग्रहणेजन्मनक्षत्रेवोपनयनादिभूतिकर्मण्युपस्थितेवाविषु
वादिसंक्रमेषुवाविषमास्थितेवाग्रहेग्रहशांतिंकुर्यात्॥ कर्त्ताप्रातः स्नानादिनित्यकर्मकृत्वावैश्वदेवंहुत्वापुण्याहपूर्वकंनांदीश्रा
द्धंकृत्वागणपतिंसंपूज्यपुण्याहंवाचयित्वा ॥ आदित्यादिनवग्रहाः प्रीयंतामितिविशेषः ॥ प्रोक्षणांतंकृत्वाचार्यादीन्वरये
त्॥ यथा॥ आचार्यस्तुयथास्वर्गेशक्रादीनांबृहस्पतिः॥तथात्वंग्रहयागेस्मिन्नाचार्योभवसुव्रत॥अस्मिन्ग्रहशांतिकर्मण्या
चार्यंत्वांवृणे ॥ वृतोस्मीतिप्रतिवचनं ॥यथाचतुर्मुखोब्रह्मास्वर्गेलोकेपितामहः ॥ तथात्वंग्रहयागेस्मिन्ब्रह्माभवद्विजोत्तम
॥ अस्मिन्ग्रहशांतिकर्मणिब्रह्माणंत्वांवृणे॥ एवमेवर्त्विजश्चतुरोष्टौवाहूत्वागंधादिभिरभ्यर्च्य आचम्यप्राणानायम्यदेशका
लौसंकीर्त्य अश्विनीनक्षत्रेमेषराशौजातस्यममजन्मराश्यपेक्षयायेयेग्रहाअरिष्टस्थानेषुस्थितास्तेषांग्रहाणांशुभैकादश
स्थानफलावाप्त्यर्थंकरिष्यमाणामुकलग्नकाले आदित्यादीनांनवानांग्रहाणांशुभैकादशस्थानफलावाप्त्यर्थंआदित्यादिन
वग्रहप्रीत्यर्थंनवग्रहशांतिंकरिष्ये ॥ इतिसंकल्प्य ॥ स्थंडिलोल्लेखनाद्यग्निप्रतिष्ठापनांतंकृत्वान्वाधानसंकल्पंकुर्यात्॥नव
ग्रहशांतिहोम:कर्माघारवत्तंत्रंपंचदशदारुरिध्मोग्नीषोमावाज्यभागौकपिलोनामाग्निस्सूर्योदेवता धूमकेतुर्नामाग्निरंगार
कोदेवता हाटकोनामाग्निः शुक्रोदेवता पिंगलोनामाग्निश्चंद्रोदेवता जाठरोनामाग्निर्बुधोदेवता शिखीनामाग्निर्बृहस्पतिर्दे
वता महातेजोनामाग्निः शनैश्चरोदेवता हुताशनोनामाग्नीराहुर्देवता रौद्रोनामाग्निः केतुर्देवता एतेषामादित्यादीनांन

नानांग्रहाणामर्कखदिरोदुंबरपालाशापामार्गाश्वत्थशमीदूर्वाकुशाख्यसमिच्चर्वाज्यैरष्टोत्तरशतसंख्यया अधीशप्रत्यधीशा
नांपूर्वोक्तसमिच्चर्वाज्यैरष्टाष्टसंख्ययाइंद्राद्यष्टलोकपालानांदुर्गाद्यष्टदैवतानांच समिच्चर्वाज्यैरष्टाष्टसंख्ययास्विष्टकृतअग्नि
मादुर्योदेवता ॥ आज्यस्यमांत्रवर्णिक्योदेवता अंगदेवताः प्रधानदेवतास्तास्सर्वास्सन्निहितास्संतुएवंसांगेनकर्मणासद्यो
यक्ष्ये॥तदंगमन्वाधानंकरिष्ये ॥ यद्यष्टाविंशतिसंख्ययाप्रधानहोमस्तदेतरेषांत्रिस्त्रिस्संख्ययाहोमः ॥ इतिसंकल्प्यान्वा
धानादिकंकृत्वाचरुंनिर्वपति ॥ देवस्यत्वा * हस्ताभ्यां ॥ सवित्रेजुष्टंनिर्वपामीतित्रिस्तूष्णींचतुर्थं ॥ एवमेवाग्रे ॥देवस्य
त्वा*॥*अंगारकायजुष्टंनिर्वपामि॥देवस्यत्वा *॥* शुक्रायजुष्टंनिर्वपामि ॥ देवस्यत्वा *॥* सोमायजुष्टंनिर्वपामि*॥* देवस्य
त्वा *॥* बुधायजुष्टंनिर्वपामि ॥ देवस्यत्वा *॥* बृहस्पतयेजुष्टंनिर्वपामि ॥ देवस्यत्वा *॥* शनैश्चरायजुष्टंनिर्वपामि ॥
देवस्यत्वा *॥* राहवेजुष्टंनिर्वपामि॥देवस्यत्वा *॥* केतवेजुष्टंनिर्वपामीतित्रिस्तूष्णींचतुर्थं ॥ देवस्यत्वा * हस्ताभ्यां
॥ सवित्रेवोजुष्टंप्रोक्षामीतिसकृन्मंत्रेणद्विस्तुष्णींप्रोक्ष्याग्रेप्येवं ॥ अंगारकायवोजुष्टंप्रोक्षामि ॥ शुक्रायवोजुष्टंप्रोक्षामि ॥
सोमायवोजुष्टंप्रोक्षामि॥बुधायवोजुष्टंप्रोक्षामि॥बृहस्पतयेवोजुष्टंप्रोक्षामि॥शनैश्चरायवोजुष्टंप्रोक्षामि ॥राहवेवोजुष्टंप्रोक्षा
मि॥केतवेवोजुष्टंप्रोक्षामीतिप्रोक्ष्य॥अथोपोत्थायग्रहान्पूजयति॥अत्रकारिका॥विधिवत्कलशस्थानं तदैशान्यांप्रकल्पयेत्॥
प्राच्यांग्रहार्चनस्थानंकृत्वायागमथाचरेत् ॥ अथाष्टदलमालिख्यपद्ममत्रसतंडुलान् ॥ व्रीहीन्कूर्चंचविन्यस्यतत्रकुंभंस
कूर्चकं ॥ सहिरण्यंनिधायैनंपूरयेद्विधिवज्जलं ॥ इति ॥ स्थंडिलादीशान्यादिग्भागेष्टदलपद्मंविलिख्यतदुपरिव्रीहींस्तंडु

लांश्चनिक्षिप्यतस्मिन्तंतुवेष्टितंकलशन्निधायतस्मिन्पंचरत्नानिनिक्षिप्यकूर्चमंतर्धायतं न्मुखंपल्लवफलादिभिःपिधायवस्त्र
युग्मेनसंवेष्ट्य महीद्यौःपृथिवीचनइत्यादिभिःकलशस्थापनंकृत्वा गंगेचयमुनेचेतितीर्थान्यावाह्य ॥ क्ष्मादिभूतानि
विघ्नंचदुर्गामावाहयेत्क्रमादितिकारिकोक्तप्रकारेणपृथिव्यप्तेजोवाय्वाकाशादिगणपतिंदुर्गांचावाह्यषोडशोपचारान्कृत्वाथ
स्थंडिलपूर्वभागेतंडुलैस्स्थंडिलेष्टदलदद्मंसकर्णिकंविलिख्यतेषुवक्ष्यमाणप्रकारेणमध्येप्रधानदेवतायास्तद्दक्षिणेधिदेव
तायास्तदुत्तरेप्रत्यधिदेवतायाइतिक्रमेणप्रत्येकंमंडलत्रयंकुर्यात् ॥ यथा ॥ कर्णिकायांरक्तवर्णानिवृत्तान्यादित्याय त
द्दक्षिणदलेत्रिकोणानिरक्तवर्णान्यादित्यमुखान्यंगारकाय पूर्वदलेपंचकोणानिशुक्लवर्णान्यादित्यमुखानिशुक्रायाग्नेयदले
समचतुरस्राणिशुक्लवर्णान्यादित्यमुखानिसोमाय ईशानदलेबाणाकाराणिपीतवर्णान्यादित्यमुखानिबुधायोत्तरदलेदीर्घच
तुरस्राणिपीतवर्णान्यादित्यमुखानिबृहस्पतये पश्चिमदलेधनुराकाराणिकृष्णवर्णान्यादित्यमुखानिशनैश्चराय नैर्ऋत्यद
लेशूर्पाकाराणिकृष्णवर्णान्यादित्यमुखानिराहवे वायव्यदलेध्वजाकाराणिधूम्रवर्णान्यादित्यमुखानिकेतवे अष्टदिक्षुलो
कपालानांपश्चिमेदुर्गादीनामष्टमंडलानिसर्वाण्यादित्यमुखानिकुर्यात् ॥ रवींदूपश्चिममुखौदक्षिणास्यौकुजध्वजौ॥प्रा
ङ्मुखौप्रातविच्छुक्रौगुरुमंदावुदङ्मुखौ ॥ रवेरभिमुखाःपूज्याःपूजायामितिवैग्रहाः ॥ इत्युक्तत्वात् ॥ एवंमंडलानिविर
च्य॥ध्॥अथनवग्रहपूजालिख्यते ॥ आसनप्राणामायसंकल्पंकृत्वादेशकालौसंकीर्त्य आदित्यादिनवग्रहप्रीत्यर्थंनवग्रह
पूजांकरिष्ये इतिसंकल्प्य ॥ ग्रहमंडलंविलिख्यतन्मध्येध्यायेत् ॥ पद्मासनंपद्महस्तंपद्मगर्भसमद्युतिं ॥ सप्ताश्वंसारु

णरथंद्विभुजंकाश्यपिंरविं ॥ इतिध्यात्वा ॥ दीप्तायैनमः ॥ जयायैनमः ॥ भद्रायैनमः ॥ विभूत्यैनमः ॥ विमलायैनमः
॥ अमोघायैनमः ॥ विद्युतायैनमः ॥ सर्वतोमुख्यैनमः ॥ नवशक्तिपूजांसमर्पयामि ॥ त्रैलोक्यदीपकंदेवंगुणरूपंत्रयी
मयं ॥ स्थापयामिमहाभक्त्याभास्करंग्रहनायकं ॥ मध्येवर्तुलाकारमंडलेप्रत्यङ्मुखंकलिंगदेशजंकाश्यपगोत्रजांविश्वामि
त्रार्षंविशाखानक्षत्रजंत्रिष्टुपच्छंदसंकपिलाग्निकंपद्मासनंपद्मवर्णंद्विभुजंरक्तवस्त्रंरक्तगंधंमाणिक्यरत्नाभरणभूषितंकिरी
टिनंरक्तच्छत्रध्वजपताकिनंछंदोमयहरितसप्ताश्वंसप्तरज्जुकमेकचक्रंरक्तंरथमारुह्यदिव्यंमेरुंप्रदक्षिणीकुर्वाणंग्रहमंडलेप्र
विष्टमधिदेवताग्निप्रत्यधिदेवतारुद्रं ॐभूर्भुवस्सुवः ॥ आदित्यायनमः ॥ आदित्यमावाहयामि ॥ तस्यदक्षिणभागे॥
ॐभूर्भुवस्सुवः अग्नयेनमः ॥अधिदेवतामाग्निमावाहयामि॥ तस्यवामभागे॥ॐभूर्भुवस्सुवः॥रुद्रायनमः॥प्रत्यधिदेवतारुद्र
मावाहयामि ॥ भास्करायविद्महेमहद्युतिकरायधीमहि ॥ तन्नोआदित्यःप्रचोदयात् ॥ इदमर्घ्यं ॥ हिरण्यस्तूपऋषिः
त्रिष्टुप्छंदः॥सवितादेवता ॥ आसत्येनरजसा हृदयायनमः ॥ वर्तमानोनिवेशयन् शिरसेस्वाहा ॥ अमृतंमर्त्यंच
शिखायैवषट् ॥ हिरण्ययेनसविता कवचायहुं रथेनादेवोयाति ॥ नेत्रत्रयायवौषट् ॥ भुवनानिपश्यन् ॥ अस्त्राय
फट् ॥ वंदेरविंद्युमणिमंबुरुहेनिषण्णंदोर्भ्यांदधानमरुणांबुरुहेग्रहेंद्रं ॥ माणिक्यभूषमरुणांशुकगंधमाल्यैर्भ्राजंतमर्कम
मितद्युतिमब्जमित्रं ॥ आसत्येनेतिजपः ॥ मेधातिथिऋषिः ॥गायत्रीछंदः ॥अग्निर्देवता ॥ अग्निंदूतं॥ वामदेवऋ
षिः ॥त्रिष्टुप्छंदः ॥ रुद्रोदेवता ॥ एषामीशेपशुपतिः ॥ इत्यावाह्यध्यानावाहनादिगंधाक्षतपुष्पांतंकृत्वा ॥ अथद्वादश

नामपूजांकरिष्ये ॥ सहस्रकिरणायनमः ॥ सूर्यायनमः ॥ तपनायनमः ॥ सवित्रेनमः ॥ रवयेनमः ॥ विकर्तनायनमः ॥ जगच्चक्षुषेनमः ॥ द्युमणयेनमः ॥ तिग्मदीधितयेनमः ॥ द्वादशात्मनेनमः ॥ त्रयीमूर्तयेनमः ॥ ब्रह्मविष्णुशिवात्मकायनमः ॥ इतिद्वादशनामपूजांसमर्पयामि ॥ धूपदीपनैवेद्यादिप्रदक्षिणानमस्कारसर्वोपचारपूजांकृत्वा ॥ कपिलेसर्वदेवानांपूजनीयासुरोहिणी ॥ सर्वदेवमयीयस्मादतश्शांतिंप्रयच्छमे ॥ जपाकुसुमसंकाशंकाश्यपेयंमहाद्युतिं ॥ तमोहरंकलमषघ्नंभास्करंप्रणमाम्यहं ॥ दिवाकरंदीप्तिसहस्ररश्मिंतेजोमयंजगतःकर्मसाक्षिं ॥ मित्रंभानुंसूर्यमादिग्रहाणांरविंसदाशरणमहंप्रपद्ये ॥ प्रार्थनांसमर्पयामि ॥ सर्वोपचारपूजांसमर्पयामि ॥ इतिसूर्यपूजा ॥ अथकुजपूजांकरिष्ये ॥ रक्तस्रगंबरालेपंगदाशक्त्यासिशूलिनं ॥ चतुर्भुजंमेषगमंभारद्वाजंधरासुतं ॥ इतिध्यात्वा ॥ नवशक्तिपूजांकरिष्ये ॥ लोहितायैनमः ॥ ज्वालिन्यैनमः ॥ रौद्रियैनमः ॥ तीक्ष्णायैनमः ॥ सूक्ष्मायैनमः ॥ जयायैनमः ॥ क्षुधायैनमः ॥ सारायैनमः ॥ निर्मलायैनमः ॥ नवशक्तिपूजांसमर्पयामि ॥ रक्तकांचनसंकाशंरक्तकिंजल्कसन्निभं ॥ स्थापयामिमहारौद्रंरुद्रमूर्तिंमहाबलं ॥ सूर्यस्यदक्षिणदिग्भागेत्रिकोणाकारमंडलेदक्षिणाभिमुखमवंतीदेशजंभारद्वाजगोत्रजंजामदग्न्यार्षंगायत्रीछंदसं धूमकेत्वाग्निकंखड्गशक्तिशूलगदाधरंचतुर्भुजंरक्तांबरधररंक्तविद्रुमरत्नाभरणभूषितंकिरीटिनंरक्तच्छत्रध्वजपताकिनं रक्तमेषवाहनमग्निजरक्ताष्टाश्वंकांचनरंथमारुह्यादिव्यंमेरुंप्रदक्षिणीकुर्वाणंग्रहमंडलेप्रविष्टमधिदेवताभूमिंप्रत्याधिदेवताक्षेत्रपालं ॥ॐभूर्भुवस्सुवः अंगारकायनमः अंगारकमावाहया

मि॥तद्दक्षिणे ॐभूर्भुवस्सुवः भूम्यैनमः अधिदेवताभूमिमावाहयामि॥तस्यवामे ॐभूर्भुवस्सुवः स्कंदायनमः प्रत्यधिदेवतास्कंदमावाहयामि ॥ इत्यावाह्य ॥ भूमिपुत्रायविद्महेलोहितांगायधीमहि ॥ तन्नोभौमःप्रचोदयात् ॥ इदमर्घ्यं ॥ विश्वरूपऋषिः ॥ गायत्रीछंदः॥अंगारकोदेवता॥ अग्निर्मूर्धा ॥हृदयायनमः॥ दिवःककुत् ॥ शिरसेस्वाहा ॥ पतिःपृथिव्याः॥ शिखायैवषट् ॥ अयं ॥ कवचायहुं ॥ अपाँरेतांसि ॥ नेत्रत्रयायवौषट् ॥ जिन्वति ॥ अस्त्रायफट् ॥ रक्तस्रग्गंधवासाःकरविधृतगदाशक्तिखड्गत्रिशूलोभारद्वाजास्त्रिनेत्रोवसुमतितनयोलोहितांगःशुभांगः ॥ मेघछागाग्रध्वजोर्कद्युतिसदृशमहाकुंडलाश्लिष्टकर्णःपायाद्भास्वत्किरीटांगदवलयलसद्विद्रुमालंकृतोनः ॥ अग्निर्मूर्धेतिजपः ॥ मेधातिथिऋषिः॥गायत्रीछंदः॥भूमिर्देवता ॥ स्योनापृथिवी ॥ वामदेवऋषिः त्रिष्टुप्छंदः ॥ स्कंदोदेवता क्षेत्रस्यपतेमधुमंतमूर्मिं ॥ साधिप्रत्याधिदेवतासहितांगारकायनमः ॥ ध्यायामीत्यादि ॥ द्वादशनामपूजांकरिष्ये॥अंगारकायनमः॥ कुजायनमः ॥ वक्रायनमः ॥ लोहितांगायनमः॥महीसुतायनमः॥ कुमारायनमः ॥ क्रूरदृशेनमः ॥ क्रूरायनमः ॥ रक्तमाल्यानुलेपनायनमः ॥ आरायनमः॥ रौद्राननस्वेदबिंदवेनमः ॥ मेषवाहनायनमः ॥ द्वादशनामपूजांसमर्पयामि ॥ धूपदीपादिसर्वोपचारान्कृत्वा ॥ धर्मस्त्वंवृषरूपेणजगदानंदकारक ॥ अष्टमूर्तेरधिष्ठान अतःशांतिंप्रयच्छमे॥धरणीगर्भसंभूतंविद्युत्कांचनसन्निभं ॥ कुमारंशक्तिहस्तंचलोहितांगंनमाम्यहं ॥ महेश्वरस्याननस्वेदबिंदोर्भूमौजातंरक्तमाल्यांबराढ्यं ॥ सुदीधितिंलोहितांगंकुमारमंगारकंसदाशरणमहंप्रपद्ये ॥ प्रार्थनांसमर्पयामि ॥ सर्वोप

चारपूजांसमर्पयामि ॥ इत्यंगारकपूजा॥अथशुक्रपूजांकरिष्ये ॥ शुक्रंशुक्लतनुंश्वेतवस्त्राढ्यंदैत्यमंत्रिणं ॥ भार्गवंदंडवर
दकमंडल्वक्षसूत्रिणं ॥ इतिध्यात्वा ॥ नवशक्तिपूजांकरिष्ये ॥ शांतायैनमः॥नंदायैनमः ॥ स्मृत्यैनमः ॥ कांत्यैनमः ॥
लक्ष्म्यैनमः ॥ प्रीत्यैनमः ॥ कलायैनमः ॥ अमलायैनमः॥सर्वसत्त्वकायैनमः ॥ नवशक्तिपूजांसमर्पयामि ॥ कुंदपु
ष्पसमानाभंमुक्ताफलसमप्रभं ॥ स्थापयामिमहाशांतंभृगुंदैत्यगुरुंप्रभुं ॥ सूर्यस्यपूर्वदिग्भागेपंचकोणाकारमंडलेप्राङ्
मुखंभोजकटकदेशजंभार्गवगोत्रजं शौनकार्षांतिष्यनक्षत्रजंत्रिष्टुप्छंदसं हाटकाग्निकंश्वेतमक्षसूत्रदंडकमंडलुवरदचतुर्भु
जंश्वेतांबरगंधमाल्यवज्ररत्नाभरणभूषितंकिरीटिनं श्वेतच्छत्रध्वजपताकिनंश्वेताश्ववाहनंभूसंभवश्वेतदशाश्वंश्वेतंरथमारु
ह्यादिव्यंमेरुंप्रदक्षिणीकुर्वाणंग्रहमंडलेप्रविष्टमाधिदेवतेंद्राणींप्रत्याधिदेवतेंद्रं ॥ॐभूर्भुवस्सुवः शुक्रायनमः शुक्रमावाहया
मि ॥ तद्दक्षिणे ॥ ॐभूर्भुवस्सुवः इंद्राण्यैनमः इंद्राणीमावाहयामि ॥ तदुत्तरे ॥ ॐभूर्भुवस्सुवः इंद्रायनमः
इंद्रमावाहयामि ॥ भृगुपुत्रायविद्महेदैत्यपूज्यायधीमहि ॥ तन्नःशुक्रःप्रचोदयात् ॥ इदमर्घ्यं ॥ वसिष्ठऋषिः ॥
त्रिष्टुप्छंदः ॥ शुक्रोदेवता ॥ प्रवश्शुक्राय॥हृदयायनमः ॥ भानवेभरध्वं ॥ शिरसेस्वाहा ॥ हव्यंमतिंचाग्नयेसुपू
तं ॥ शिखायैवषट्॥योदैव्यानि॥कवचायहुं॥मानुषाजनूंषि॥नेत्रत्रयायवौषट्॥ अंतर्विश्वानिविद्मनाजिगाति ॥ अस्त्राय
फट् ॥ वंदेविराजितासितांशुकगंधमाल्यमच्छाश्वगंतनुविराजितवज्ररत्नं ॥ दोर्भिस्सदंडगुणकुंडितमक्षसूत्रंबिभ्राणमा
सुरगुरुंभृगुपुत्रमीड्यं ॥ प्रवश्शुक्रायेतिजपः ॥ वृषाकपिऋषिः ॥ अनुष्टुप्छंदः ॥ इंद्राणीदेवता ॥ इंद्राणीमासुना

रिषु॥ ॥ मेधातिथिऋषिः ॥गायत्रीछंदः॥इंद्रोदेवता ॥ इंद्रंवोविश्वतस्परि ॥ द्वादशनामपूजांकरिष्ये ॥शुक्रायनमः॥
सितायनमः ॥ विशुद्धात्मनेनमः ॥ योगमूर्तयेनमः ॥भृगूद्वहायनमः॥ कवयेनमः ॥शांतायनमः ॥ तितेजस्विनेनमः॥
सर्वशास्त्रविशारदायनमः ॥ श्वेतवस्त्रधरायनमः ॥ दैत्यमंत्रिणेनमः ॥ विनयकोविदायनमः ॥ द्वादशनामपूजांसमर्प
यामि॥ध्यानावाहनादिषोडशोपचारान्कृत्वा॥ विष्णुस्त्वमश्वरूपेणयस्मादमृतसंभवः ॥ विष्णोरर्कस्यवाहः स्यादतश्शां
तिंप्रयच्छमे ॥ हिमकुंदतुषाराभंदैत्यानांपरमंगुरुं ॥ सर्वशास्त्रप्रदातारंभार्गवंप्रणमाम्यहं ॥ वर्षघ्नंचिंतितार्थानुकूलंन
यप्रधानंविनयोपपन्नं ॥ तंभार्गवंयोगविशुद्धसत्त्वंशुक्रंसदाशरणमहंप्रपद्ये ॥ पार्थनांसमर्पयामि ॥ सर्वोपचारपूजांसम
र्पयामि ॥ इतिशुक्रपूजा ॥ अथचंद्रपूजांकरिष्ये ॥ नवशक्तिपूजांकरिष्ये ॥ राकायैनमः ॥ कुमुद्वत्यैनमः ॥ नंदायै
नमः ॥ सुधायैनमः ॥ संजीविन्यैनमः ॥ क्षमायैनमः ॥ज्योत्स्नायैनमः ॥ नित्यायैनमः॥ प्रभायैनमः॥नवशक्तिपूजां
समर्पयामि ॥ श्वेतवस्त्रधरंश्वेतदशाश्वंरथवाहनं ॥ द्विभुजंसाभयगदमात्रेयंसामृतंविधुं ॥ इतिध्यात्वा ॥ शांतंनक्षत्र
नाथंचरोहिणीवल्लभंप्रभुं ॥ कुंदपुष्पज्वलाकारंस्थापयामिनिशाकरं ॥ सूर्यस्याग्नेयदिग्भागेचतुरस्राकारमंडलेप्रत्यङ्मुखं
यमुनादेशजमात्रेयगोत्रजमात्रेयार्षंकृत्तिकानक्षत्रजंगायत्रीछंदसं पिंगलाग्निकमभयगदाधरंद्विभुजंश्वेतांबरगंधमाल्यमु
क्ताभरणभूषितंकिरीटिनंश्वेतच्छत्रध्वजपताकिनंवारिसंभूतदशाश्वं त्रिचक्रंश्वेतंरथमारुह्यदिव्यंमेरुंप्रदक्षिणीकुर्वाणंग्रहमं
डलेप्रविष्टमधिदेवतापंप्रत्यधिदेवतागौरीं ॥ ॐभुर्भुवस्सुवश्चंद्रायनमः चंद्रमावाहयामि ॥ तद्दक्षिणे ॥ ॐभूर्भुवस्सु

वः अधिदेवता अपआवाहयामि ॥ तदुत्तरे ॥ॐभूर्भुवस्सुवः प्रत्यधिदेवतागौरीमावाहयामि॥अत्रिपुत्रायविद्महेरात्रि नाथायधीमहि ॥ तन्नश्चंद्रः प्रचोदयात् ॥ इदमर्घ्यं ॥ गौतमऋषिः ॥ गायत्रीछंदः ॥ सोमोदेवता ॥ आ प्यायस्व ॥ हृदयायनमः ॥ समेतुते ॥ शिरसेस्वाहा ॥ विश्वतः ॥ शिखायैवषट् ॥ सोमवृष्णियं ॥ कवचायहुं ॥ भवावाजस्य ॥ नेत्रत्रयायवौषट् ॥ संगथे ॥ अस्त्रायफट् ॥ श्वेतांबरस्त्रगनुलेपनमत्रिनेत्रजातंदशाश्वरथवाहनमो षधीशं ॥ दोर्भ्यांधृताभयगदंभवतिंसुधांशंश्रीमत्सुमौक्तिकधरंप्रणमामिचंद्रं ॥ आप्यायस्वसमेतुत इतिजपः ॥ मेधाति थिऋषिः ॥ अनुष्टुप्च्छंदः आपोदेवता ॥ अप्सुमेसोमोअब्रवीत्॰॥॰ ॥ दीर्घतमऋषिः ॥ जगतीछंदः ॥ गौरीदेव ता ॥ गौरीर्मिमाय॰॥॰ ॥ अथद्वादशनामपूजांकरिष्ये ॥ विधवेनमः ॥ सुधाकरायनमः ॥ चंद्रायनमः ॥ इंदवेनमः ॥ कुमुदबांधवायनमः ॥ ओषधीशायनमः ॥ निशानाथायनमः ॥ शशिनेनमः ॥ शंकरभूषणायनमः ॥ अत्रिनेत्रस मुद्भवायनमः ॥ रोहिणीशायनमः ॥ कलानिधयेनमः ॥ द्वादशनामपूजांसमर्पयामि ॥ ध्यानावाहनादिसर्वोपचारपू जांसमर्पयामि॥पुण्यस्त्वंशंखपुण्यानांमंगलानांचमंगलं॥विष्णुनाविधृतोनित्यमतश्शांतिंप्रयच्छमे ॥ दधिशंखतुषाराभं क्षीरोदार्णवसंभवं॥नमामिशशिनंभक्त्याशंभोर्मुकुटभूषणं ॥यःकालहेतोः क्षयवृद्धिमेतियंदेवताः पितरोवापिबंति॥तंवैवरे ण्यंब्रह्मेंद्रवंद्यंसोमंसदाशरणमहंप्रपद्ये॥प्रार्थनांसमर्पयामि॥सर्वोपचारपुजांसमर्पयामि ॥इतिचंद्रपूजा ॥अथबुधपूजांकरि ष्ये॥नवशक्तिपूजांकरिष्ये॥चंद्रिकायैनमः ॥कौमुदैनमः॥ज्योत्स्नायैनमः॥संध्यायैनमः॥विद्यायैनमः॥सरस्वत्यैनमः॥मेधा

यैनमः ॥ प्रज्ञायैनमः॥ प्रभायैनमः ॥ नवशक्तिपूजांसमर्पयामि ॥ पीतस्रग्गंधवस्त्राढ्यंस्वर्णाभंचचतुर्भुजं ॥ शक्तिचर्मा
सिगदिनमात्रेयंसिंव्हगंबुधः ॥ चांपेयपुष्पसंकाशंविशुद्धकनकप्रभं ॥ स्थापयामिमहासौम्यंबुधंसोमात्मजंप्रभुं ॥ सूर्य
स्येशानदिग्भागेबाणाकारमंडलेप्राङ्मुखंमगधदेशजमात्रेयगोत्रजंभारद्वाजार्षंश्रविष्ठानक्षत्रजंत्रिष्टुप्छंदसंजाठराग्निकं
शक्तिखड्गचर्मगदाधरंचतुर्भुजंपीतांबरगंधमाल्यमरकतरत्नाभरणभूषितंकिरीटिनंपीतच्छत्र ध्वजपताकिनंपीतासिंव्हवाह
नंवाय्वग्निजपीताष्टाश्वंपीतंरथमारुह्यादिव्यंमेरुंप्रदक्षिणीकुर्वाणंग्रहमंडलेप्रविष्टमधिदेवताविष्णुंप्रत्यधिदेवताविष्णुं ॥ ॐ
भूर्भुवस्सुवः बुधायनमः बुधमावाहयामि ॥ तद्दक्षिणे ॥ ॐभूर्भुवस्सुवः विष्णवेनमः अधिदेवताविष्णुमावाहयामि ॥
तद्वामे ॥ ॐभूर्भुवस्सुवः विष्णवेनमः प्रत्यधिदेवताविष्णुमावाहयामि ॥ सोमपुत्रायविद्महेमहाराजायधीमहि ॥ तन्नो
बुधःप्रचोदयात् ॥ इदमर्घ्यं ॥ प्रबुधऋषिः ॥ त्रिष्टुप्छंदः॥बुधोदेवता॥ उद्बुध्यस्वाग्ने ॥ हृदयायनमः ॥ प्रतिजागृह्ये
नं॥शिरसेस्वाहा॥इष्टापूर्तेसगुँसृजेथामयंच॥शिखायैवषट् ॥पुनःकृण्वगुँस्त्वा॥कवचायहुं॥पितरंयुवानं॥नेत्रत्रयायवौषट् ॥
अन्वातागुँसित्वयितंतुमेतं ॥ अस्त्रायफट् ॥ वंदेबुधंमरतकोज्ज्वलदेहकांतिंपीतांबरस्रगनुलेपनभूषितांगं ॥ शक्तिंचदो
र्भिरसिचर्मगदांदधानंसिंव्हध्वजंशशिसुतंबुधमत्रिवंशं ॥ उद्बुध्यस्वाग्ने इतिजपः ॥ दीर्घतमऋषिः ॥ त्रिष्टुप्छंदः ॥ वि
ष्णुर्देवता ॥ विष्णोर्नुकंवीर्याणि *॥* वामदेवऋषिः ॥ पंक्तिच्छंदः ॥ विष्णुर्देवता ॥ विष्णोरराटमसि*॥*
॥ द्वादशनामपूजांकरिष्ये ॥ सोमपुत्रायनमः ॥ बुधायनमः ॥ सौम्यायनमः ॥ ज्ञानमूर्तयेनमः ॥ त्रिकालविदेनमः

॥ सत्यवाचेनमः ॥ निर्मलायनमः ॥ प्राज्ञायनमः ॥ पीतस्त्रग्गंधभूषणायनमः ॥ उर्वशीश्वशुरायनमः ॥ सिद्धबोधनायनमः ॥ सिंव्हवाहनायनमः ॥ द्वादशनामपूजांसमर्पयामि ॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥ अनंतपुण्यफलदमतश्शांतिंप्रयच्छमे ॥ प्रियंगुगुलिकाभासंरूपेणाप्रतिमंबुधं ॥ सौम्यंसौम्यगुणोपेतंनमामिशशिनस्सुतं ॥ विशुद्धबुद्धिंश्रुतिकालबोधंसद्व्याहरंसोमवंशप्रदीपं ॥ सुदीधितिंछांदसंविश्वरूपंबुधंसदाशरणमहंप्रपद्ये ॥ प्रार्थनां समर्पयामि ॥ सर्वोपचारपूजांसमर्पयामि ॥ इतिबुधपूजा ॥ अथगुरुपूजांकरिष्ये ॥ धृत्यैनमः ॥ कांत्यैनमः ॥ दयायैनमः ॥ मेधायैनमः ॥ प्रज्ञायैनमः ॥ विद्यायैनमः ॥ यशस्विन्यैनमः ॥ स्थिरायैनमः ॥ सुप्रभायैनमः ॥ नवशक्तिपूजांसमर्पयामि ॥ आंगीरसंदेवगुरुंपीतस्त्रग्गंधवाससं ॥ दंडिनंवरदंपीतंसाक्षसूत्रकमंडलुं ॥ कुंदपुष्पसमानाभंतप्तकांचनसंन्निभं ॥ स्थापयामिमहाभक्त्याप्रसन्नवदनंगुरुं ॥ सूर्यस्योत्तरदिग्भागेदीर्घचतुरस्त्रमंडलेउदङ्मुखंसिंधुदेशजमांगिरिसगोत्रजंवसिष्ठार्षमुत्तराफल्गुनीनक्षत्रजं त्रिष्टुप्छंदसांशिख्याग्निकंपीतमक्षसूत्रदंडकमंडलुवरदचतुर्भुजंपीतांबरगंधमाल्यपुष्परागरत्नाभरणभूषितंकिरीटिनंपीतच्छत्रध्वजपताकिनंविश्वरूपाख्यपांडुराष्टाश्वंकांचनंरथमारुह्यदिव्यंमेरुंप्रदक्षिणीकुर्वाणंग्रहमंडलेप्रविष्ठमधिदेवतेंद्रंप्रत्यधिदेवताब्रह्माणं ॥ ॐभूर्भुवस्सुवः बृहस्पतयेनमः बृहस्पतिमावाहयामि ॥ तद्दक्षिणे ॥ ॐभूर्भुवस्सुवः इंद्रायनमः अधिदेवतेंद्रमावाहयामि ॥तद्वामे ॥ॐभूर्भुवस्सुवः॥ब्रह्मणेनमः ॥ब्रह्माणमावाहयामि॥ब्रह्मपुत्रायविद्महेदेवपूज्यायधीमहि ॥तन्नोगुरुःप्रचोदयात्॥इदमर्घ्यं॥गृत्समदऋषिः त्रिष्टुप्छं

दः॥बृहस्पतिर्देवता॥बृहस्पतेअतियदर्यः॥ हृदयायनमः॥अर्हाद्युमाद्विभाति॥शिरसेस्वाहा॥क्रतुमज्जनेषु ॥ शिखायैवषट् ॥ यद्दीदयच्छवसः ॥कवचायहुं ॥ ऋतप्रजाततदस्मासु ॥ नेत्रत्रयायवौषट् ॥ द्रविणंधेहिचित्रं ॥अस्त्रायफट् ॥ पीतांबरंतनुलसद्धृतपुष्परागंकेयूरहारमणिकुंडलमंडितांगं ॥दंडंवराक्षगुणकुंडिवतांदधानमांगीरसंसुरगुरुंहृदयगन्नमामि ॥ बृहस्पतेअतियदर्य इतिजपः॥वामदेवऋषिः॥त्रिष्टुप्छंदः॥इंद्रोदेवता ॥इंद्रमरुत्वइहपा॥हिसोमं*॥* ॥नकुलऋषिः॥त्रिष्टुप्छंदः॥ब्रह्मादेवता॥ब्रह्मजज्ञानं*॥*॥द्वादशनामपूजांकरिष्ये॥ॐबृहस्पतयेनमः ॥ सुराचार्यायनमः॥जीवायनमः॥आंगिरसायनमः॥गुरवेनमः॥गीष्पतयेनमः ॥ धिषणायनमः॥चित्राशिखंडिनेनमः ॥ पीतवस्त्रधृषेनमः॥तेजोमूर्तयेनमः ॥ महामूर्तयेनमः॥कमलासननंदनायनमः॥ द्वादशनामपूजांसमर्पयामि ॥ध्यानावाहनादिषोडशोपचारान्कृत्वा॥पीतवस्त्रयुगंयस्माद्वासुदेवस्यवल्लभं ॥ प्रदानादस्यमेविष्णुः प्रीतोभवतुसर्वदा ॥ देवतानामृषीणांचगुरुंकांचनसन्निभं ॥ सुवंद्यंत्रिषुलोकेषुप्रणमामिबृहस्पतिं॥बुद्ध्यात्मनोयस्यनकश्चिदन्योमतिंदेवाउपजीवंतियस्य ॥ प्रजापतेरात्मजंधर्मनित्यंबृहस्पतिंसदाशरणमहंप्रपद्ये ॥ प्रार्थनांसमर्पयामि ॥ सर्वोपचारपूजांसमर्पयामि ॥ इतिगुरुपुजा ॥ अथशनिपूजांकरिष्ये ॥ नवशक्तिपूजांकरिष्ये ॥ भयायैनमः ॥ तंद्रियैनमः ॥ क्षुधायैनमः ॥ मृत्यवेनमः ॥ जरायैनमः ॥ मायायैनमः॥मनोमध्यैनमः॥कामिकायैनमः॥वरदायैनमः॥नवशक्तिपूजांसमर्पयामि ॥इंद्रनीलनिभंमंदंकाश्यपिंचित्रभूषणंचापबाणधरंचर्मशूलिनंगृध्रवाहनं ॥ इंद्रनीलसमानाभंनीलोत्पलसमप्रभं ॥ स्थापयामिमहारौद्रंसूर्यपुत्रंशनैश्चरं ॥ सू

यस्यपश्चिमदिग्भागेधनुराकारमंडलेउदङ्मुखंकाश्यपगोत्रजंभृग्वार्षेयंरेवतीनक्षत्रजंसौराष्ट्रदेशजं गायत्रीछंदसंमहाते
जोग्निकंनीलंचर्मबाणधुनःशूलचतुर्भुजंनीलांबरगंधमाल्यनीलरत्नाभरणभूषितंकिरीटिनंनीलच्छत्रध्वजपताकिनंनीलगृ
ध्रवाहनमाकाशजजंबालाष्टाश्वंनीलंरथमारुह्य दिव्यंमेरुंप्रदक्षिणीकुर्वाणंग्रहमंडलेप्रविष्टमाधिदेवताप्रजापतिंप्रत्याधिदेव
तायमं ॥ ॐभूर्भुवस्सुवः शनैश्चरायनमः शनैश्चरमावाहयामि ॥ तद्दक्षिणे ॥ ॐभूर्भुवस्सुवः प्रजापतयेनमः ॥ अ
धिदेवताप्रजापतिमावाहयामि ॥ तद्वामे ॥ ॐभूर्भुवस्सुवः यमायनमः प्रत्यधिदेवतायममावाहयामि ॥ सूर्यपुत्राय
विद्महेशनैश्चरायधीमहि ॥ तन्नोमंदःप्रचोदयात् ॥ इदमर्घ्यं ॥ सिंधुद्वीपऋषिः ॥ गायत्रीछंदः ॥ शनैश्चरोदेवता
॥ शन्नोदेवीः ॥ हृदयायनमः ॥ अभिष्टये ॥ शिरसेस्वाहा ॥ आपोभवंतु ॥ शिखायैवषट् ॥ पीतये ॥ कवचायहुं ॥
शंयोरभि ॥ नेत्रत्रयायवौषट् ॥ स्रवंतुनः ॥ अस्त्रायफट्॥दोर्भिर्धनुर्विशिखचर्मधरंत्रिशूलंभास्वत्किरीटमुकुटोज्ज्व
लितेंद्रनीलं ॥ नीलातपत्रकुसुमांशुकगंधभूषंगृध्रास्थितंरविसुतंप्रणतोस्मिमंदं ॥शन्नोदेवीरभिष्टय इतिजपः ॥ हिरण्य
गर्भऋषिः॥त्रिष्टुप्छंदः॥प्रजापतिर्देवता॥प्रजापतेनत्वदेतान्यन्यः॥*॥वामदेवऋषिः॥त्रिष्टुप्छंदः॥यमोदेवता॥ इमंयम
प्रस्तर॥*॥द्वादशनामपूजांकरिष्ये॥ मंदायनमः॥शनैश्चरायनमः॥कोणायनमः॥ पंगवेनमः ॥ छायासुतायनमः ॥ असि
तायनमः॥सूर्यपुत्रायनमः ॥ कालायनमः ॥ श्राद्धदेवसहोदरायनमः ॥ चतुर्भुजायनमः ॥ चित्रभूषणायनमः ॥ गृध्रवा
हनायनमः ॥ इतिद्वादशनामपूजांसमर्पयामि ॥ ध्यानावाहनादिषोडशोपचारपूजांकृत्वा ॥ गवामंगेषुतिष्ठंतिभुवनानि

चतुर्दश ॥ यस्मात्तस्माच्छिवंमेस्यादतश्शांतिंप्रयच्छमे ॥ नीलांजनचयाकारंरविसूनुंनपुंसकं ॥ छायागर्भसमुद्भूतंवंदेभ
क्त्याशनैश्चरं ॥ शनैश्चरंप्रजापतिंयोहियस्यशनैर्भोगोगमनंचेष्टितंच ॥ सूर्यात्मजंक्रोधनसुप्रसन्नंशनैश्चरंसदाशरणमहं
प्रपद्ये ॥ प्रार्थनांसमर्पयामि ॥ सर्वोपचारपूजांसमर्पयामि ॥ इतिशनिपूजा ॥ अथराहुपूजांकरिष्ये॥ नवशक्तिपू
जांकरिष्ये॥ उग्रायैनमः॥यमदूत्यैनमः॥ करालयैनमः ॥ विकरालिकायैनमः ॥ धूम्रायैनमः॥ तीव्रायैनमः ॥ अजितायै
नमः ॥ रक्तायैनमः ॥ क्रूरायैनमः ॥ नवशक्तिपूजांसमर्पयामि ॥ सैंहिकेयंकरालास्यंकौंडिनेयंतमोमयं ॥ खड्ग
चर्मधरंभीमंनीलसिंव्हासनेस्थितं ॥ नीलांजनसमानाभंनीलमेघसमद्युतिं ॥ स्थापयामिमहावक्रंराहुंचंद्रार्कवैरिणं ॥सू
र्यस्यनैर्ऋत्यादिग्भागेशूर्पाकारमंडले दक्षिणाभिमुखंबर्बरदेशजंपैठिनासिगोत्रजमांगिरसार्षमाश्विनीनक्षत्रजंगायत्रीछंद
संहुताशनाग्निकंकृष्णंखड्गचर्मधरंद्विभुजंकृष्णांबरगंधमाल्यगोमेदरत्नाभरणभूषितं किरीटिनंकृष्णच्छत्रध्वजपताकिनंक
रालवदनमुरगालंकारंकृष्णसिंव्हासनेस्थितमष्टाश्वंरथमारुह्यादिव्यंमेरुंप्रदक्षिणीकुर्वाणंग्रहमंडले प्रविष्टमाधिदेवतासर्पं
प्रत्यधिदेवतानिर्ऋतिं ॥ ॐभूर्भुवस्सुवः राहवेनमः राहुमावाहयामि ॥ तद्दक्षिणे ॥ ॐभूर्भुवस्सुवः सर्पायनमः अ
धिदेवतासर्पमावाहयामि॥ तद्वामे ॥ ॐभूर्भुवस्सुवः निर्ऋतयेनमः प्रत्यधिदेवतानिर्ऋतिमावाहयामि॥ सैंहिकेयायवि
द्महेतमोमयायधीमहि ॥ तन्नोराहुःप्रचोदयात् ॥ इदमर्घ्यं॥वामदेवऋषिः ॥गायत्रीछंदः॥ राहुर्देवता ॥ कयानः ॥ हृद
यायनमः॥चित्रआभुवत् ॥ शिरसेस्वाहा॥ऊतीसदावृधः ॥ शिखायैवषट् ॥सखा॥कवचायहुं॥कायाशचिष्ठया ॥ नेत्रत्र

यायवौषट् ॥ वृत्तौ ॥ अस्त्रायफट् ॥ राहुंकराग्रपरिमंडितचर्मखड्गंभीमंतमोमयतनुस्तममिंद्विनारिं ॥कौंडिण्यसुनूमासि
नांशुकगंधभूषंगोमेदभुषिततनुंहरिगन्नमामि ॥ कयानाश्चित्रआभुवत् इतिजपः ॥ सार्पराज्ञिऋषिः ॥ गायत्रीछंदः ॥
॥ सर्पोदेवता॥आयगौःपृश्निरक्रमीत् *॥* वामदेवऋषिः ॥ त्रिष्टुप्छंदः ॥निर्ऋतिर्देवता ॥ यत्तेदेवीनिरऋतिराबबंध
*॥*द्वादशनामपूजांकरिष्ये ॥सैंहिकेयायनमः ॥ तमोमयायनमः ॥ राहवेनमः ॥ करालास्यायनमः ॥ विधुंतुदायनमः
॥ स्वर्भानवेनमः ॥ असुरायनमः ॥ सर्पायनमः ॥ प्रतिलोमजायनमः ॥ नीलसिंव्हासनायनमः ॥ चंद्रसूर्यवैरिणेन
मः ॥ भयंकरायनमः ॥ द्वादशनामपूजांसमर्पयामि ॥ यस्मात्त्वंछागयज्ञानामंगत्वेनव्यवस्थितः ॥ यानंविभावसोर्नि
त्यमतःशांतिंप्रयच्छमे ॥ अर्द्धकायंमहावीर्यं चंद्रादित्यविमर्दनं ॥ सिंव्हिकागर्भसंभूतंतंराहुंप्रणमाम्यहं ॥ योविष्णुने
वामृतं पीयमानंछित्वाशिरोग्रहभावेनियुक्तः ॥ योभ्यर्कचंद्रौग्रसतिपर्वकालेराहुंसदाशरणमहंप्रपद्ये ॥ प्रार्थनांसमर्पया
मि ॥ सर्वोपचारपूजांसमर्पयामि ॥ इतिराहुपूजा ॥अथकेतुपूजांकरिष्ये ॥ नवशक्तिपूजांकरिष्ये ॥ निम्नायैनमः॥अभ
यायैनमः ॥ प्रकीर्णायैतमः ॥ क्लिन्नायैनमः ॥ भेदायैनमः ॥ उत्कटायैनमः ॥ यज्ञायनमः॥प्रतिज्ञायैनमः ॥घोरायैनमः
नवशक्तिपूजांसमर्पयामि ॥ धूम्राद्विबाहुगदिनोविकृतास्यांच्छतात्मकान् ॥ गृध्रासनगतान्केतून्वरदान्ब्रह्मणस्सुता
न् ॥ नीलमेघसमानाभंचित्रवर्णमहाबलं ॥ स्थापयामिमहारौद्रंकेतुंसर्वफलप्रदं ॥ सूर्यस्यवायव्यांदिग्भागेध्वजाकार
मंडलेदक्षिणाभिमुखमंतर्वेदिदेशजंजैमिनिसूत्रजंरौद्राग्निकं धूम्रवरदगदाधरंद्विभुजंचित्रांबरगंधमाल्यवैडूर्यरत्नाभरणभू

षितंकिरीटिनंधूम्रच्छत्रध्वजपताकिनं चित्रगृध्रवाहनंधूमारुणाष्टाश्वंधूम्रंरथमारुह्यादिव्यंमेरुंप्रदाक्षिणीकुर्वाणंग्रहमंडलेप्र
विष्टमधिदेवताब्रह्माणंप्रत्याधिदेवताचित्रगुप्तं ॥ ॐभूर्भुवस्सुवः केतवेनमः ॥ केतुमावाहयामि ॥ तद्दक्षिणे ॐभुर्भुव
स्सुवः ब्रह्मणेनमः अधिदेवताब्रह्माणमावाहयामि ॥ तद्वामे ॐभूर्भुवस्सुवः प्रत्यधिदेवताचित्रगुप्तायनमः चित्रगुप्तमा
वाहयामि ॥ ब्रह्मपुत्रायविद्महेधूम्रवर्णायधीमहि ॥ तन्नःकेतुःप्रचोदयात् ॥ इदमर्घ्यं ॥ मधुच्छंदऋषिः ॥ गाय
त्रीछंदः केतुर्देवता॥केतुंकृण्वंन् ॥ हृदयायनमः ॥ अकेतवे ॥ शिरसेस्वाहा ॥ पेशोमर्याः॥शिखायैवषट्॥अपेशसे ॥ क
वचायहुं ॥ समुषद्भिः ॥ नेत्रत्रयायवौषट्॥अजायथाः॥अस्त्रायफट्॥गृध्रस्थितान्जलजयोनिसमानवक्त्रान्धूम्रान्वराभ
यकरान्सुभुजान्कुमारान् ॥ वैडूर्यभूषिततनून्वरजैमिनेयान्केतून्भयानकमुखान्द्विभुजान्नमामि ॥ केतुंकृण्वन्नकेतवे
॥ इतिजपः ॥ वामदेवऋषिः ॥ त्रिष्टुप्छंदः॥ब्रह्मादेवता ॥ ब्रह्मादेवानां॥॥भारद्वाजऋषिः त्रिष्टुप्छंदः ॥ चित्रगुप्तो
देवता ॥ सचित्रचित्रं॥॥द्वादशनामपूजांकरिष्ये॥ब्रह्मात्मजेभ्योनमः॥चतुर्वक्त्रेभ्योनमः॥शिखिभ्योनमः॥ केतुभ्योनमः
॥ध्वजेभ्योनमः॥धूम्रेभ्योनमः॥द्विबाहुभ्योनमः॥गृध्रवाहनेभ्योनमः॥चित्रभूषणेभ्योनमः॥विकृतास्येभ्योनमः ॥ शतात्म
जेभ्योनमः॥जगन्नाशैकहेतुभ्योनमः॥द्वादशनामपूजांसमर्पयामि॥ध्यानावाहनादिषोडशोपचारान्कृत्वा॥महासत्वमहाका
यक्षीरोदार्णवसंभव॥सर्वसंग्रामेविजयजयंगजकुरुष्वमे॥इतिगजदानमंत्रः ॥ पलालधूम्रसंकाशान्तारकाग्रहमस्तकान्॥
रुद्रान्रौद्रात्मकान्घोरान्तान्केतून्प्रणमाम्यहं ॥ येब्रह्मपुत्राब्रह्मसमानवक्त्राब्रह्मोद्भवाब्रह्मसमाः कुमाराः ॥ ब्रह्मो

त्तम वरदाजामदङ्ग्याः केतूनूसदाशरणमहंप्रपद्ये ॥ इतिप्रार्थनांसमर्पयामि ॥ सर्वोपचारपूजांसमर्पयामि ॥ इतिकेतु
पूजा॥इतिश्रीनवग्रहपूजाविधिः ॥छ॥ ॥छ॥ ॥छ॥ अथग्रहशांतिसूत्रं॥अथातोग्रहातिथ्यबलिकर्मोपहारान्व्याख्यास्या
मः ॥ अश्रद्दधानमशूचिमजपंत्यक्तमंगलं ॥ ग्रहानयंतिसुव्यक्तंपुरुषंयमसादनं ॥ ग्रहाणामुग्रचेष्टानांनक्षत्रपथचारिणां
॥ उपचारान्प्रवक्ष्यामिशांत्यर्थंतुयथाविधि ॥ मासिमास्यृतावृतावयनेचंद्रसूर्यग्रहेविषुवेशुभाशुभेजन्मनक्षत्रेवातद्ग्रहा
णामातिथ्यंसंवत्सरादपिप्रयुंजानस्सर्वान्कामानवाप्नोतीत्युक्तमेकाग्निविधानं ॥ भास्करांगारकौरक्तौश्वेतौशुक्रनिशाक
रौ ॥ सोमपुत्रोगुरुश्चैवतावुभौपीतकौस्मृतौ ॥ कृष्णंशनैश्चरंविंद्याद्राहुंकेतुंतथैवच ॥ ग्रहवर्णानिपुष्पाणिप्राज्ञस्तत्रो
पकल्पयेत् ॥ बलिंचैवोपहारांश्चगंधमाल्येतथैवच ॥ यथाक्रमेणोपहरेत्सर्वेषामानुपूर्वशइति ॥ अर्कसमिधआदित्या
य ॥ खादिरमंगारकायौदुंबरीगुँशुक्राय पालाशीगुँसोमायापामार्गंबुधायाश्वत्थंबृहस्पतये शमीगुँशनैश्चरायराहवेदूर्वाः
केतवेकुशा इति ॥ सर्वेषामलाभेपालाशीर्वाब्राह्मणामन्नेनपरिविष्यपुण्याहगुँस्वास्तिऋद्धिमितिवाचयित्वा ॥ अथदे
वयजनोल्लेखनप्रभृत्यप्रणीताभ्यःकृत्वा हवींषिनिर्वपत्यथोपोत्थायाग्रेणाग्निंतंडुलैस्थंडिलंकृत्वाग्रहानावाहयति ॥ मध्ये
तुभास्करंविंद्याल्लोहितंदक्षिणेनतु ॥ पूर्वेणभार्गवंविंद्यात्पूर्वदक्षिणतश्शशी ॥ पूर्वोत्तरेबुधंविंद्यादुत्तरेतुगुरुंतथा ॥ पश्चिमे
तुशनिंविंद्याद्राहुंदक्षिणपश्चिमे ॥ पश्चिमोत्तरतः केतुर्ग्रहस्थानंविधीयते ॥ दक्षिणोत्तरभागेतुसाधिप्रत्यधिदेवताः ॥
वृत्तमादित्याय त्रिकोणमंगारकाय पंचकोणंशुक्राय चतुरस्त्रंसोमाय बाणंबुधाय दीर्घचतुरस्त्रंबृहस्पतये धनुश्शनैश्चर

यराहवेशूर्पकेतवेध्वजामिति ॥ यवाढक्यस्तंडुलाश्यामाकामुद्गमेवच॥चणकास्तिलमाषाश्चकुलित्थाश्चक्रमात्क्षिपेत्॥अग्नी
श्वरौभास्करस्यभूक्षेत्रेशौकुजस्यहि ॥ इंद्राणींद्रौसितस्याथह्यापोगौरीनिशापतेः ॥ विष्णुर्विष्णुर्बुधस्येंद्रमरुत्वन्ब्रह्मवै
गुरोः ॥ शनेः प्रजापतियमौराहोस्सर्पस्तुनिर्ऋतिः ॥ केतोर्ब्रह्माचचित्रश्चस्वस्वमंत्रैः स्वनामभिः ॥ लोकपालान्दुर्गे
विघ्नक्षेत्रवास्तुत्र्यंबकान् ॥ अभयंकरमृत्यूचाह्यग्निंवैश्वानरंक्रमात् ॥ आवाहयेद्व्याहृतिभिर्यजेद्व्यष्टोपचारकैः ॥ परिधा
नप्रभृत्यग्निमुखान्कृत्वापक्वाज्जुहोति ॥ आसत्येनेत्यादित्यायाग्निर्मूर्धेत्यंगारकायप्रवश्शुक्रायेतिशुक्रायाप्यायस्वेति
सोमाय उद्बुध्यस्वइतिबुधायबृहस्पतयेअतीतिबृहस्पतये शन्नोदेवीरभिष्टयइतिशनैश्चराय ॥ कयानश्चित्रआभु
वदितिराहवे केतुंकृण्वन्निति केतवे ॥ पुरोनुवाक्यामनूच्ययाज्ययाजुहोति ॥ सदेवत्वायेतिब्राह्मणंयत्रैकाम्नाता
स्यातांद्विरभ्यावर्त्तये ॥ तत्सवितुर्वरेण्यमित्यनुवृत्याम्नातयाजुहोतिवा नवानांग्रहाणांपक्वंहुत्वाघृतान्वक्तानांसमिधम
ष्टसहस्रमष्टाविंशतिंवाजुहुयात्प्रत्यृचगुँहविषोजुहुयात्प्रत्यृचमाज्यस्यजुहुयाद्गुडोदनमादित्याय हविष्यमन्नमंगारकाय
घृतोदनंशुक्रायघृतपायसंसोमाय क्षीरोदनंबुधायदध्योदनंबृहस्पतयेतिलपिष्टमिश्रमाषोदनंशनैश्चराय ॥ राहोर्मांसो
दनंकेतोश्चित्रोदनमिति सर्वेषामलाभेहविष्यंवायदाष्टसहस्रंसाधिप्रत्यधिदेवतानामष्टाविंशतिंयदाष्टशतंतदाष्टावष्टौय
दाष्टाविंशतिं तदास्तिस्रस्तिस्रआहुतीर्जुहुयादेवमेवलोकपालादीनामग्निंदूतमेषामसिइत्यादित्यायस्योनापृथिविक्षेत्रस्य
पतइत्यंगारकाय ॥ इंद्राणीमासुनारिष्विंद्रंवोविश्वतस्परीतिशुक्रायाप्सुमसोमोअब्रवीद्गौरीर्मिमायेतिसोमाय विष्णोर्नु

कंविष्णोरराटमसीतिबुधाय इंद्रमरुत्वइहपाहिसोमंब्रह्मजज्ञानमितिबृहस्पतये प्रजापतेनत्वदेतानीमंयमप्रस्तरमिति
शनैश्चरायायंगौर्यंत्तेदेवीनिर्ऋतिरितिराहवे ब्रह्मादेवानागुँसाचित्रचित्रामितिकेतवे ॥ त्रातारमिंद्रमाग्निर्दाद्द्रविणंयमोदाधा
रपृथिवीमसुन्वंतगुँसधमादोद्युम्निनीरानोनियुद्भिस्सोमोधेनुगुँसहस्राणिसहस्रधेतिलोकपालानां ॥ जातवेदसेगणानां
त्वाक्षेत्रस्यपतिनावयंवास्तोष्पतेप्रतिजानीह्यस्मान्त्र्यंबकंयजामहेयतइंद्रभयामहेस्वस्तिदाविशस्पतिर्येते सहस्रमयुतंपा
शामूर्धानंदिवोअरतिंपृथिव्याइति दुर्गादीनामेवमेवहुत्वाज्यमिश्रतिलव्रीहिभिर्व्याहृतिभिर्हुत्वासर्वस्मात्सकृत्सकृदवदा
यद्भिरभिघार्य स्विष्टकृतमर्यमणंबृहस्पतिमितिपुरोनुवाक्यामनूच्यसोमगुँराजानमितियाज्ययाजुहोति मेक्षणमभ्याधाय
जयप्रभृतिसिद्धंमूर्धानंदिवोअरतिंपृथिव्याइति पूर्णाहुतिंहुत्वाग्रेणाग्निंग्रहानभ्यर्चयत्यापोहिष्ठामयोभुवइतितिसृभिर्हिर
ण्यवर्णाःशुचयःपावकाइतिचतसृभिः पवमानस्सुवर्जनइत्येतेनानुवाकेनमार्जयित्वाथाद्भिस्तर्पयत्यादित्यंतर्पयाम्यंगार
कंतर्पयामीत्यादिभिःस्वनामभिस्तर्पयित्वागंधपुष्पधूपदीपैरमुष्मैनमोमुष्मैनमइति तत्तदन्नेनामुष्मैस्वाहामुष्मैस्वाहेति
स्वस्वनामभिर्बलिंदत्वाव्याहृतीभिरुद्वासयेदथापरेणाग्निंप्राङ्मुखमुपवेश्याद्भिर्मार्जयतेदेवस्यत्वेतितिसृभिस्तत्तद्ग्रहमंत्रैः
शंयुवाकेनचदक्षिणांददाति॥कपिलंधेनुमादित्यायरक्तमनड्वाहमंगारकायरजतंशुक्रायशंखंसोमायकांचनंबुधायवासोबृह
स्पतयेकृष्णांगांशनैश्चरायराहवेछागंकेतवकुंजरमितिसर्वेषामलाभेहिरण्यंवायद्वातत्तत्प्रतिकृतिंदद्यात्तत्तद्धान्यानिवातत्त
द्ग्रहमंत्रजपाद्वाग्रहान्त्संप्रार्थ्य यथाशक्तिदक्षिणांददातियेनवातुष्येदाचार्यः॥यथासमुत्थितंघोरंयंत्रेणप्रतिबाध्यते ॥एवंस

मुत्थितंघोरंशीघ्रंशांतिंनयेत्सदा ॥ यथाशस्त्रप्रहरणात्कवचंस्यान्निवारणं ॥ एवंदैवोपघातानांशांतिर्भवतिवारणं ॥ अहिंस
कस्यदांतस्यधर्मार्जितधनस्यच॥नित्यंचनियमस्थस्यसदासानुग्रहाग्रहाः ॥ग्रहागावोनरेंद्राश्चब्राह्मणाश्चविशेषतः॥पूजि
ताःपूजयंत्येतेनिर्दहंत्यवमानिताः॥ ईश्वरंभास्करंविंद्यादित्यादिपूर्वग्रहपूजापत्रेलिखितं॥तदिदानींनलिखितं ॥अथलोक
पालाः॥पूर्वाद्यष्टदिक्षु॥अथमंडलपश्चिमभागेदक्षिणतउदगपवर्गादुर्गादयः॥जातवेदसइतिदुर्गां ॥गणानांत्वेतिगणपतिं॥
क्षेत्रस्यपतिनेतिक्षेत्रपालं॥वास्तोष्पतइतिवास्तोष्पतिं॥त्र्यंबकमितित्र्यंबकं॥यतइंद्रस्वास्तिदाविशस्पतिरित्यभयंकरं ॥ये
तेसहस्त्रमितिमृत्युं॥मूर्धानंदिवइत्यग्निंवैश्वानरं ॥ सर्वत्रप्रणवव्याहृतिमुक्त्वात्रागच्छादित्यभगवन्नित्यावाह्यावाहितोभवे
तिसर्वत्रयोजनीयं ॥ आगच्छसोमभगवन्नित्यादि ॥ आदित्यायनमः ॥ इदमासनं ॥ पाद्यमर्घ्यमाचमनीयंदत्वाथपरि
धानप्रभृत्यग्निमुखान्तंकृत्वापक्वाज्जुहोति ॥ त्र्यार्षेयंपंचार्षेयंवागोत्रानुसारेणत्रिरवदानंपंचावदानमिति क्रमेणावदायपु
रस्तात्स्त्रुवाहुतिंहुत्वा ॥ ॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयोमासत्येनरजसावर्तमानोनिवेशय
न्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन्स्वाहा ॥ सवित्रइदं ॥ उपरिष्टात्स्त्रुवाहुतिंहुत्वा ॥
आसत्येनरजसेत्यर्कसमिच्चर्वाज्यानियथासंख्यंहुत्वा ॥ ॐअग्निंदूतंवृणीमहेहोतारंविश्ववेदसं ॥ अस्ययज्ञस्यसुक्रतुँ
स्वाहा ॥ अग्नयइदं ॥ ॐएषामीशेपशुपतिःपशूनांचतुष्पदामुतजाद्विपदां ॥ निष्क्रीतोयंयज्ञियंभागमेतुरायस्पोषायज
मानस्यसंतुस्वाहा ॥ रुद्रायेदं ॥ इत्यर्कसमिच्चर्वाज्यानिहुत्वा ॥ व्याहृतिर्हुत्वायन्मआत्मनःपुनरग्निरितिहुत्वा ॥ स्त्रुवेण

दर्व्यामुपस्तीर्यापरार्द्धाच्चरोरवदायपूर्वार्द्धादवद्यत्यभिघारयतिप्रत्यनक्तिपुरस्तात्स्रुवाहुतिंहुत्वा ॥ ॐतत्सवितुः ॥ दयो
मग्निमूर्द्धादिवःककुत्पतिःपृथिव्याअयं ॥ अपाँरेतांसिजिन्वतिस्वाहा ॥ अंगारकायेदं ॥ उपरिष्टात्स्रुवाहुतिंहुत्वा ॥
ॐस्योनापृथिविभवान्रृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाःस्वाहा ॥ पृथिव्याइदं ॥ ॐक्षेत्रस्यपतेमधुमंतमूर्मिंधेनुरि
वपयोअस्मासुधुक्ष्व ॥ मधुश्चुतंघृतमिवसुपूतमृतस्यनःपतयोमृडयंतुस्वाहा ॥ क्षेत्रपतयइदं ॥ इतिखदिरसमिच्चर्वाज्या
निजुहुयात् ॥ व्याहृतिमिंदाहुतीर्हुत्वा ॥ पूर्ववदवदायपुरस्तात्स्रुवाहुतिंहुत्वा ॥ ॐतत्सवितुः ॥ दयोंप्रवःशुक्रायभान
वेभरध्वं ॥ हव्यंमतिंचाग्नयसुपूतं ॥ योदैव्यानिमानुषाजनूँषि ॥ अंतर्विश्वानिविद्मनाजगातिस्वाहा ॥ शुक्रायेदं ॥ उ
परिष्टात्स्रुवाहुतिंहुत्वा ॥ ॐइंद्राणीमासुनारिषुसुपत्नीमहमश्रवं ॥नह्यस्याअपरंचनजरसामरतेपतिस्स्वाहा ॥ इंद्राण्या
इदं ॥ ॐइंद्रंवोविश्वतस्परिहवामहेजनेभ्यः ॥ अस्माकमस्तुकेवलःस्वाहा ॥ इंद्रायेदं ॥ इत्यौदुंबरसमिच्चर्वाज्यानिहु
त्वाव्याहृतिमिंदाहुतीर्हुत्वापुनःपूर्ववदवदायपुरस्तात्स्रुवाहुतिंहुत्वा ॥ ॐतत्सवितुः ॥ दयोमाप्यायस्वसमेतुते ॥ विश्वत
स्सोमवृष्णियं ॥भवावाजस्यसंगथेस्वाहा ॥ सोमायेदं ॥ उपरिष्टात्स्रुवाहुतिंहुत्वा ॥ ॐअप्सुमेसोमोअब्रवीत् ॥ अंत
र्विश्वानिभेषजा ॥ अग्निंचविश्वशंभुवं ॥ आपश्चविश्वभेषजीःस्वाहा ॥ अद्भ्यइदं ॥ ॐगौरीर्मिमायसलिलानितक्षत्ये
कपदीद्विपदीसाचतुष्पदी ॥ अष्टापदीनवपदीबभूवुषीसहस्राक्षरापरमेव्योमन्त्स्वाहा ॥ गौर्याइदं ॥ इतिपालाशसमि
च्चर्वाज्यानिहुत्वा ॥ व्याहृतिमिंदाहुतीर्हुत्वा ॥ स्रुवेणदर्व्यामुपस्तीर्यापरार्धाच्चरोरवदायपूर्वार्धादवद्यत्याभिघारयतिप्र

त्यनक्तिपुरस्तात्स्रुवाहुतिंहुत्वा ॥ ॐउद्बुध्यस्वाग्नेप्रतिजागृह्येनमिष्टापूर्तेसगुँसृजेथामयंच ॥ पुनः कृण्वगुँस्त्वापितरं युवानमन्वातागुँसीत्त्वयितंतुमेतगुँस्वाहा ॥ बुधायेदं ॥ उपरिष्टात्स्रुवाहुतिंहुत्वा ॥ ॐविष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजागुँसि ॥ योअस्कभायदुत्तरगुँसधस्थंविचक्रमाणस्त्रेधोरुगायःस्वाहा ॥ विष्णवइदं ॥ ॐविष्णोरराटमसिविष्णोः पृष्ठमसिविष्णोश्नप्त्रेस्थोविष्णोः स्यूरसिविष्णोर्ध्रुवमसिवैष्णवमसिविष्णवेत्वास्वाहा ॥ विष्णवइदं ॥ इत्यपामार्गसमिच्चर्वाज्यानिहुत्वाऽव्याहृतिमिंदाहुतीर्हुत्वापुनःपूर्ववदवदायपुरस्तात्स्रुवाहुतिंहुत्वा ॥ ॐतत्सवितुः •॥• दयोंबृहस्पतेअतियदर्योअर्हाद्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसर्तप्रजाततदस्मासुद्रविणंधेहिचित्रगुँस्वाहा ॥ बृहस्पतयइदं ॥ उपरिष्टात्स्रुवाहुतिंहुत्वा ॥ ॐइंद्रमरुत्वइहपाहिसोमंयथाशार्यातेअपिबस्सुतस्य ॥ तवप्रणीतीतवशूरशर्मन्नाविवासंतिकवयस्सुयज्ञास्स्वाहा ॥ इंद्रायेदं ॥ ॐब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतस्सुरुचोवेनआवः ॥ सबुध्नियाउपमाअस्यविष्ठास्सतश्चयोनिमसतश्चविवःस्वाहा ॥ ब्रह्मणइदं ॥ इत्यश्वत्थसमिच्चर्वाज्यानिहुत्वाऽव्याहृतिमिंदाहुतीर्हुत्वा पूर्ववदवदायपुरस्तात्स्रुवाहुतिंहुत्वा ॥ ॐतत्सवितुः•॥•दयोंशन्नोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्त्रवंतु नःस्वाहा ॥ शनैश्चरायेदं ॥ उपरिष्टात्स्रुवाहुतिंहुत्वा ॥ ॐप्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवयगुँस्यामपतयोरयीणागुँस्वाहा ॥ प्रजापतयइदं ॥ ॐइमंयमप्रस्तरमाहिसीदांगिरोभिः पितृभिस्संविदानः ॥ आत्वामंत्राःकविशस्तावहंत्वेनाराजन्हविषामादयस्वस्वाहा ॥ यमायेदं ॥ इतिसमिच्चर्वाज्यानि

हुत्वापुनःपूर्ववदवदायपुरस्तात्स्रुवाहुतिंहुत्वा ॥ ॐतत्सवितुः ॥ दयोंकयानश्चित्रआभुवदूतीसदावृधस्सखा ॥ कयाशचिष्ठयावृतास्वाहा॥ राहवइदं ॥ उपरिष्टात्स्रुवाहुतिंहुत्वा ॥ ॐआयंगौः पृश्निरक्रमीदसदन्मातरंपुनः ॥ पितरंचप्रयन्त्सुवः स्वाहा ॥सर्पायेदं ॥ ॐयत्तेदेवीनिर्ऋतिराबबंधदामग्रीवास्वविचर्त्यं ॥ इदंतेतद्विष्यम्यायुषोनमध्यादथाजीवःपितुमद्धिप्रमुक्तः स्वाहा ॥ निर्ऋतयइदं ॥ इतिदूर्वासमिच्चर्वाज्यानिहुत्वाव्याहृतिमिंदाहुतीर्हुत्वापुनः पूर्ववदवदायपुरस्तात्स्रुवाहुतिंहुत्वा ॥ ॐतत्सवितुः ॥ दयोंकेतुंकृण्वन्नकेतवेपेशोमर्याअपेशसे ॥ समुषाद्भिरजायथाःस्वाहा ॥ केतवइदं ॥ उपरिष्टात्स्रुवाहुतिंहुत्वा ॥ ॐब्रह्मादेवानांपदवीः कवीनामृषिर्विप्राणांमहिषोमृगाणां ॥ श्येनोगृध्राणाॅंस्वधितिर्वनानाॅंसोमःपवित्रमत्येतिरेभन्त्स्वाहा ॥ ब्रह्मणइदं ॥ ॐॅंसचित्रचित्रंचितयंतमस्मैचित्रक्षत्रंचित्रतमंवयोधां ॥ चंद्रॅंरयिंपुरुवीरंबृहंतंचंद्रचंद्राभिर्गृणतेयुवस्वस्वाहा ॥ चित्रगुप्तायेदं ॥ इतिकुशसमिच्चर्वाज्यानिहुत्वाव्याहृतीर्जुहुयात् ॥ इत्येकाध्वरपक्षे ॥ यदिचतुर्भिर्ऋत्विग्भिस्सहहोमस्तदारव्यादीनांपंचपक्कानिहुत्वातेभ्यःसमिच्चर्वाज्यानियथासंकल्पंहुत्वाततोवशिष्टपक्कचतुष्टयंहुत्वातेभ्यस्तथैवसमिच्चर्वाज्यानिजुहुयात् ॥ नवर्त्विजस्तदाआदावेवनवपक्कानिहुत्वापश्चात्तत्तद्ग्रहोक्तमंत्रैस्तत्तत्समिच्चर्वाज्यैरष्टशतमष्टाविंशतिंवाहुत्वाथाधिदेवताभ्यः प्रत्यधिदेवताभ्यश्चतत्तद्ग्रहसमिच्चर्वाज्यैरष्टवारंत्रिवारंवायथाक्रमंहुत्वा ॥ अत्राष्टोत्तरशतप्रधानहोमेधिदेवताप्रत्यधिदेवतानामष्टाष्टसंख्या ॥ यद्यष्टाविंशतिसंख्ययाप्रधानहोमस्तदेतरेषां त्रिस्त्रिस्संख्ययाहोमः ॥ एवमेवलोकपालानांदुर्गादिनांचहोमःकार्यः ॥ अथलोकपालानां॥ॐत्रातार

मिंद्रमवितारमिंद्रगुँहवेहवेसुहवगुँशूरमिंद्रं ॥ हुवेनुशक्रंपुरुहूतमिंद्रगुँस्वस्तिनोमघवाधात्विंद्रःस्वाहा ॥ इंद्रायेदं ॥ ॐ अग्निर्दाद्द्रविणंवीरपेशाअग्निर्ऋषिंयस्सहस्रासनोति ॥ अग्निर्दिविहव्यमाततानाग्नेर्धामानिविभृतापुरुत्रास्वाहा ॥ अग्नयइदं ॥ ॐयमोदाधारपृथिवींयमोविश्वमिदंजगत् ॥ यमायसर्वमित्तस्थेयत्प्राणद्वायुरक्षितगुँस्वाहा ॥ यमायेदं ॥ ॐअसुन्वंतमयजमानमिच्छस्तेनस्येत्यांतस्करस्यान्वेषि ॥अन्यमस्मदिच्छसातयित्यानमोदेविनिर्ऋतेतुभ्यमस्तुस्वाहा ॥ निर्ऋतयइदं ॥ ॐगुँसधमादोद्युम्निनीरूर्जएकाअनिभृष्टाअपस्युवोवसानाः ॥ पस्त्यासुचक्रेवरुणस्सधस्थमपागुँशिशुर्मातृतमास्वंतःस्वाहा ॥ वरुणायेदं ॥ ॐआनोनियुद्भिश्शतिनीभिरध्वरगुँसहस्रिणीभिरुपयाहियज्ञं ॥ वायोअस्मिन्हविषिमादयस्वयूयंपातःस्वस्तिभिस्सदानःस्वाहा ॥ वायवइदं ॥ ॐसोमोधेनुगुँसोमोअर्वंतमाशुं ॥ सोमोवीरंकर्मण्यंददातु ॥ सादन्यंविदथ्यगुँसभेयं ॥ पितृश्रवणंयोददाशदस्मैस्वाहा ॥ सोमायेदं ॥ ॐगुँसहस्राणिसहस्रधाबाहुवोस्तवहेतयः ॥ तासामीशानोभगवःपराचीनामुखाकृधिःस्वाहा ॥ ईशानायेदं ॥ इत्यष्टौलोकपालाः ॥ ॐजातवेदसे ॥ दुर्गायाइदं ॥ ॐगणानांत्वा ॥ गणपतयइदं ॥ ॐक्षेत्रस्यपतिनावयं ॥ क्षेत्रपतयइदं ॥ ॐवास्तोष्पतेप्रतिजानीह्यस्मान् ॥ वास्तोष्पतयइदं ॥ ॐत्र्यंबकंयजामहे ॥ त्र्यंबकायेदं ॥ ॐयतइंद्र ॥ स्वस्तिदाविशस्पतिः ॥ अभयंकरेंद्रायेदं ॥ ॐयेतेसहस्रमयुतंपाशामृत्योमर्त्यायहंतवे ॥ तान्यज्ञस्यमाययासर्वानवयजामहेस्वाहा ॥ मृत्यवइदं ॥ ॐमूर्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतायजातमग्निं ॥ कविगुँसंम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाः

स्वाहा ॥ वैश्वानराग्नयइदं ॥ इतिदुर्गाद्यष्टदेवताभ्योहुत्वाथाज्याक्ततिलव्रीहिभिर्व्याहृतिभिरष्टशतमष्टाविंशतिमष्टवारंवाहु
त्वाथस्विष्टकृतमवदायांतःपरिधौनिधायव्याहृतिभिरुपहुत्यपुरस्तात्स्रुवाहुतिंहुत्वा ॥ ॐअर्यमणंबृहस्पतिमिंद्रंददानचोद
य ॥ वाचंविष्णुँसरस्वतीँसवितारंचवाजिनोँसोमँराजानंवरुणमग्निमन्वारभामहे ॥ आदित्यांन्विष्णुँसूर्यंब्रह्माणं
चबृहस्पतिँस्वाहा ॥ अर्यम्णेबृहस्पतयइंद्रायवाचेविष्णवेसरस्वत्यैसवित्रेसोमायराज्ञेवरुणायाग्नयआदित्येभ्यस्सूर्याय
ब्रह्मणइदं ॥ उपरिष्टात्स्रुवाहुतिंहुत्वा मेक्षणमग्नौप्रहृत्यजयप्रभृतिप्रायश्चित्तांतंकृत्वा॥मूर्धानंदिवइतिपूर्णाहुतिंहुत्वोत्तरप
रिषेकादिकंकृत्वाग्रेणाग्निंग्रहानभ्यर्चयति ॥ आपोहिष्ठेतितिसृभिः ॥ हिरण्यवर्णाइतिचतसृभिः ॥ पवमानस्सुवर्जनइत्यनु
वाकेनचग्रहानभिषिच्य ॥ आदित्यंतर्पयामि ॥ अंगारकंतर्पयामि ॥ शुक्रंतर्पयामि ॥ सोमंतर्पयामि ॥ बुधंतर्पयामि ॥ बृह
स्पतिंतर्पयामि ॥ शनिंतर्पयामि ॥ राहुंतर्पयामि ॥ केतुंतर्पयामीतितर्पयित्वा ॥ आदित्यायनमः ॥ शुक्रायनमः ॥ इत्यादि
नाममंत्रैर्गंधपुष्पधूपदीपनैवेद्यतांबूलनीराजनप्रदक्षिणानमस्कारांतंकृत्वा ॥ आदित्यायस्वाहाशुक्रायस्वाहा इत्यादि
स्वाहांतैर्नाममंत्रैर्हुतशेषेणबलिंदत्वासर्वोपचारान्कृत्वा॥ॐभूर्भुवस्सुवः आदित्यमुद्वासयामि ॥ ॐभूर्भुवस्सुवः अंगारक
मुद्वासयामीतिग्रहानुद्वास्याथाग्नेःपश्चात्प्राङ्मुखोयजमानउपवेश्यकलशोदकेनमार्जयति ॥देवस्यत्वेतितिसृभिस्तत्तद्ग्रह
मंत्रैःआपोहिष्ठेत्येतैर्मार्जयित्वा॥सुरास्त्वामभिषिंचंतुब्रह्मविष्णुमहेश्वराः॥इंद्राद्यामातरस्सर्वालक्ष्मीश्चोमासरस्वती॥का
श्यपाद्यामुनयोगंगाद्यास्सरितस्तथा ॥ अनंतादिमहानागागिरयस्सप्तसागराः॥सर्वेत्वामभिषिंचंतुसर्वकाम्यार्थसिद्ध

ये ॥ सूर्यादयोग्रहास्सर्वेसाधिप्रत्यधिदेवताः ॥ पृथिव्यादीनिभूतानिविघ्नोदुर्गादयस्तथा ॥ एतेत्वामभिषिंचंतुसर्वका
मार्थसिद्धये ॥ इत्येतैरभिषिच्यदक्षिणांदद्यात् ॥ कपिलागौरक्तवृषोरौप्यंशंखश्चकांचनं ॥ वस्त्रंचधेनुः कृष्णाचछागोह
स्तीतिदक्षिणाः ॥ अलाभेतत्तत्प्रतिकृतिः तत्तन्मूल्यंहिरण्यंवादद्यात् ॥ तत्तद्धान्यानिवाशांतिकर्मण्यशक्तश्चेत्तत्तद्ग्रहमंत्रा
न्वाजपेत् ॥ एवंकृतेसर्वशांतिर्भवति ॥ इतिप्रयोगमालायांग्रहशांतिप्रयोगः ॥ ७ ॥ ॥ ७ ॥ अथसंस्का
रकांडआरभ्यते ॥ तत्रादौगर्भाधानादिसंस्काराणामृतुसंवेशनपूर्वकत्वात्स्त्रीणांप्रथमरजोदर्शनकारणकालनिर्णयादिपूर्व
कमृतुसंवेशनप्रयोगोलिख्यते ॥ स्मृतिमंजर्यांपुराणवचनं ॥ नाभिमूलेस्थितंपुष्पंचतुर्दलसमन्वितं ॥ तस्मिन्सर्वाश्चद
धतेगर्भसंभवकारणं ॥ अधोमुखंस्थितंस्त्रीणांतद्बाल्येमुकुलीकृतं ॥ बाल्यात्परंवयःप्राप्तेमुकुलंविकसंभवेत् ॥ उत्फुल्ला
त्कुसुमात्स्त्रीणांस्वभावेनस्रवेद्रजः ॥ तदाप्रभृतिसर्वासांमासिमासिऋतुर्भवेदिति ॥ अथमासफलं ॥ वराहसंहितायां ॥
प्रथमर्तौद्वितीयेवाशुभाशुभनिरीक्षणं ॥ कर्त्तव्यंज्ञातिभिस्सम्यग्धर्मशास्त्रविधानतः ॥ चैत्रेमासिविशेषेणवैधव्यंलभतेध्रुवं
॥ वैशाखेबहुपुत्राढ्याज्येष्ठेरोगयुताभवेत् ॥ शुचौमृतप्रजाप्रोक्ताश्रावणेधनिनीभवेत् ॥ भाद्रेतुदुर्भगाज्ञेयाह्याश्विनेतुप
यस्विनीकार्त्तिकेनिधनाबालामार्गशीर्षेबहुप्रजा ॥ पौषेस्यात्पुंश्चलीनारीमाघेपुत्रसुखान्विता ॥ फाल्गुनेसर्वसंपन्नाप्रथम
र्तौफलंस्मृतं ॥ अथतिथिफलंश्रीधरीये ॥ प्रथमायांपतिंहंतीद्वितीयायांसुखंभवेत् ॥ तृतीयायांश्रियंभुंक्तेचतुर्थ्यांवृषली
भवेत् ॥ पंचम्यांपुत्रलाभश्चषष्ठ्यांचारित्रविक्रया ॥ सप्तम्यांपुत्रवृद्धिःस्यादष्टम्यांपुत्रनाशनं ॥ नवम्यांरुदतीनित्यंदश

म्यांधर्मशालिनी ॥ एकादश्यांपतिस्निग्धाद्वादश्यांक्रंदिनीभवेत् ॥ त्रयोदश्यांमानधनात्वपराबहुदोषकृत् ॥ पर्वण्यन्य गृहीतास्याद्विद्यादेवंतिथेर्वशात् ॥ स्मृतिरत्ने ॥ शुभंचैवतुपूर्वाण्हेमध्यान्हेमध्यमंफलं ॥ अपराण्हेतुवैधव्यंपूर्वरात्रेशुभं भवेत् ॥ मध्यरात्रेतुमध्यंस्यात्परात्रेशुभान्विता ॥ तिथीनांफलमेवंहिवाराणांफलमुच्यते ॥ भानुवारेभवेद्वंध्याधीरेंदु वारेपतिव्रता ॥ बहुरोगाबहुक्लेशापतिहीनाकुजेदिने ॥ बहुपुत्रवतीसौम्येसर्वसंपद्गुरोर्दिने ॥ सौभाग्यंसुखसंपत्तिः शुक्र वारेपतिव्रता ॥ कष्टबुद्धिर्महाव्याधिः स्वयमर्थस्यचोरिणी ॥ मंदवारेविनष्टास्यात्प्रथमर्त्तौरजस्वला ॥ नारदीयेतु ॥ रु ग्णापतिव्रतादुःखापुत्रिणीभोगभागिनी ॥ पतिप्रियाक्लेशभागासूर्यवारादिषुक्रमात् ॥ इतिवारफलं ॥ अथनक्षत्रफलं ॥ नारदीये ॥ श्रीयुतासुभगापुत्रवतीसौख्यान्वितास्थिता ॥ मानीकुलाधिकानारीअश्विन्यांप्रथमार्त्तवा ॥ १ ॥ दुःशी लास्वैरिणीवंध्यागर्भपातनतत्परा ॥ परप्रेष्याकाकवंध्याभरण्यांप्रथमार्त्तवा ॥ २ ॥ अनाथापूंश्चलीवंध्यागर्भपातनत त्परा॥ प्रेष्यामृतप्रजाचापिवन्हिभेप्रथमार्त्तवा ॥ ३ ॥ सुशीलासुप्रजामान्यापतिभक्तादृढव्रता ॥ गृहार्चनरतानित्यं धातृभेप्रथमार्त्तवा ॥ ४ ॥ गुणान्विताधर्मरतानारीसर्वसहासती ॥ पतिप्रियासुपुत्राढ्याचंद्रभेप्रथमार्त्तवा ॥ ५ ॥ कुलटादुर्भगाकष्टामृतपुत्रावलाजडा ॥ दुष्टाव्रतपरिभ्रष्टारौद्रभेप्रथमार्तवा ॥ ६ ॥ पतिभक्तापुत्रवतीपरसंतानमोदि नी ॥ कुलाचारानुरक्ताढ्याअदित्येप्रथमार्तवा ॥ ७ ॥ पतिप्रियापुत्रवतीमानभोगवतीशुभा ॥ स्वकर्मनिरतादक्षा तिष्यार्क्षेप्रथमार्तवा ॥ ८ ॥ परभर्तृरताप्रेष्याकोपिनीनिर्घृणालसा॥मृषावादीनिदुष्पुत्राभुजंगेप्रथमार्त्तवा ॥ ९ ॥ निर्द्धे

ष्यारोगसंयुक्तासर्वदागेयलोलुपा ॥ पितृवेश्मरतामान्यापैतृभेप्रथमार्तवा ॥ १० ॥ प्रजावतीधर्मरतानिर्वैरामित्रपूजिता
॥ सतीमातृगृहासक्तालक्ष्यर्यमर्क्षैरजस्वला ॥११॥ परकार्यरतादीनादुष्पुत्राक्लेशभागिनी ॥ मलिनीकर्कशाक्रुद्धाभाग्यभेप्र
थमार्तवा॥१२॥निर्द्वेष्याभूरिविभवापुत्राढ्याभोगभागिनी ॥ प्रधानादानकुशलाहस्तर्क्षेप्रथमार्तवा ॥ १३ ॥ चित्रकर्माभो
गिनीचकुशलाक्रयविक्रये ॥ विकीर्णकामाश्लक्ष्णाढ्यात्वाष्ट्रभेप्रथमार्तवा ॥१४॥ बहुवित्तवतीनीरुक्कुशलाशिल्पकर्मणि ॥
पुत्रपौत्रवतीसाध्वीवायुभेप्रथमार्तवा ॥१५॥ नीचकर्मरतादुष्टापानासक्तापराप्रिया ॥ विपुत्रामलिनीक्रुद्धाद्विदैवेप्रथमार्तवा
॥ १६ ॥ स्वामिपक्षान्वितास्वस्यगुणैःसम्यग्विभूषिता ॥ सुपुत्रासुभगाकांतामित्रर्क्षेप्रथमार्तवा ॥ १७ ॥ दुश्चरित्ररता
क्लेशिन्यनर्थापूंश्चलीव्यसुः ॥ दुस्संतानवतीज्येष्ठानक्षत्रेप्रथमार्तवा ॥ १८ ॥ संतानार्थगुणैरल्पैर्युतान्यक्लेशमोचिनी ॥स्व
कर्मनिरतानित्यंमूलभेप्रथमार्तवा॥१९॥ प्रच्छन्नपापादुष्पुत्राप्राणिहिंसनतत्परा॥अजस्त्रंव्यसनासक्तातोयभेप्रथमार्तवा
॥२०॥ कार्याकार्येषुकुशलासदाधर्मानुवर्तिनी ॥ गुणाश्रयाभाग्यवतीविश्वभेप्रथमार्तवा॥२१॥ धनधान्यवतीभोगापुत्रपौ
त्रसमन्विता ॥ कुलानुमोदिनीमान्याविष्णुभेप्रथमार्तवा॥२२॥पुत्रपौत्रान्विताभोगीधनधान्यवतीसती॥स्वकर्मनिरतामा
न्यावसुभेप्रथमार्तवा ॥२३॥ बहुपुत्राधनवतीस्वकर्मनिरतासती ॥ कुलानुमोदिनीमान्यावारुणेप्रथमार्तवा ॥२४॥ बंधकी
बंधनीद्वेष्यानित्यंदूररताबला ॥ शिल्पकार्येषुकुशलाजांघ्रिभेप्रथमार्तवा ॥ २५ ॥ आढ्यापुत्रवतीमान्यासुप्रसन्नापातिप्रि
या ॥ बंधुपूज्याधर्मवत्याहिर्बुध्न्येप्रथमार्तवा ॥ २६ ॥ दृढव्रताधर्मवतीपुत्रसौख्यार्थसंयुता ॥ विख्यातागुणसंपन्नापौष्ण

भप्रथमातवा ॥२७॥ इतिनक्षत्रफलं ॥ अथयोगफलं ॥ परिघस्यतुपूर्वार्धषड्घटिगंडातिगंडयोः ॥ व्याघातुनवशूलेतुनाड्यः
पंचर्तुदर्शने॥ वैधव्यमर्थनाशंचसुतनाशंमहद्भयं ॥ वैधव्यंशत्रुवृद्धिंचदारिद्र्यंक्षीणजीवनं ॥ तेजोहानिमवाप्नोतिसदापुष्पव
तीक्रमात् ॥ इतियोगफलं॥अथराशिफलं॥मेषेसाव्यभिचार.स्याद्वृषभेपरभोगिनी ॥ मिथुनेधनभोगाढ्याकर्कटेव्यभिचा
रिणी॥ पुत्राढ्यासिंव्हराशौतुकन्यायांश्रीमतीतथा ॥ विलक्षणातुलायांतुवृश्चिकेतुपतिव्रता ॥ दुश्चारिणीधनुःपूर्वेत्वपरेतु
पतिव्रता ॥ मकरेमानहीनाचकुंभेनिर्धनवंध्यता ॥ मीनेविक्षलणालग्नेग्रहसंस्थाविवाहवत् ॥ इतिराशिफलं ॥ अथग्र
हफलं ॥ वैधव्यमष्टमेस्थेकेंचंद्रेक्षीणरुचाभवेत् ॥ अंगारकेभर्तृहीनाबुधेचेद्धनपत्यता ॥ दौर्भाग्यमिंद्रसचिवेसापत्न्यं
भार्गवेभवेत् ॥ प्रव्रज्यासूर्यपुत्रेतुराहौतुकलहस्सदा ॥ अशुभंकेतुरन्येतुजामित्रेशुभदाश्शुभाः ॥ नृसिंव्होपि ॥ लग्न
स्यसप्तमस्थानेसूर्योवैधव्यकारकः ॥ पुत्रहानिकरस्त्वारोबुधस्सत्पुत्रदोभवेत् ॥ बृहस्पतिर्धनायुष्यंशुक्रस्सापत्न्यमे
वच ॥ शनैश्चरेतुवंध्यास्याद्राहौतुमरणंध्रुवं ॥ आदित्यभौममंदानांवारवर्गोदयेक्षणैः ॥ मरणंगर्भनाशश्चकुलटत्वंयथा
क्रमं ॥ सौम्यभार्गवजीवानांवारवर्गोदयेक्षणैः ॥ सत्पुत्रसुखमारोग्यंदीर्घमायुः क्रमाद्भवेत् ॥ मनुः ॥ भास्करस्योद
येमृत्युश्चंद्रेस्त्रीमातृकाभवेत् ॥ गर्भस्त्रावःकुजेचैवबुधेपुत्रवतीभवेत्॥ आयुःश्रीःप्रीतिरारोग्यमुदयेगुरुशुक्रयोः॥ मंदोदये
विरोधःस्यात्क्लेशःस्यात्तामसोदये ॥ इतिग्रहफलं ॥ अथहस्तस्थितपात्रलक्षणं ॥ देवरातः ॥ संमार्जनीकाष्ठतृणानिशू
र्पान्हस्तेदधानाकुलटातदास्यात् ॥ तल्पोपभोगेतपनीस्थिताचेद्रष्टुंरजोभाग्यवतीतदास्यात् ॥ नृसिंव्हः ॥ भुक्तौतल्पे

चयानेचतपनीयेचधार्मिके ॥ शुभोपकरणैर्युक्तेशुभेदेशेशुभैर्युते ॥ शुभंस्यादनुकूलर्क्षेराशौसल्संगसंयुते ॥ कश्यपसंहि
तायां ॥ निंदितेदिनवारर्क्षेनाचरेत्तत्रमंगलं ॥ तस्मात्सम्यग्विचार्यैतत्ततोमंगलमाचरेदिति ॥ स्मृतिचंद्रिकायां ॥ प्र
थमर्तौतुपुष्पिण्याःपतिपुत्रवतीस्त्रियः ॥ अक्षतैरासनंकृत्वातस्मिंस्तामुपवेशयेत् ॥ हरिद्रागंधपुष्पादिदद्यात्तांबूलकं
स्त्रजं ॥ आशिषोवाचयेयुस्ताःपतिपुत्रवतीभव ॥ दीपैर्नीराजनंकुर्यात्सदीपोवासयेद्गृहे ॥ ताःसर्वाःपूजयेत्पश्चाद्गंधपुष्पा
क्षतादिभिः ॥ लवणापूपमुद्गादिदद्यात्ताभ्यःस्वशक्तितः ॥ इति ॥ अथरजस्वलानियमः ॥ अंजनाभ्यंजनेस्नानंप्रवासंदं
तधावनं ॥ नकुर्यात्सार्तवानारीग्रहाणामीक्षणंतथा ॥ नखानांकृंतनंरज्जुतालपत्रादिबंधनं ॥ दग्धेशरावेभुंजीतपेयंचांज
लिनापिबेत् ॥ अत्रिः ॥ गंधंमाल्यंदिवास्वापंतांबूलंचास्यशोधनं ॥ पाणिपात्रजनस्पर्शपादशौचादिवर्जयेत्॥ अथान्यो
न्यसंभाषणस्पर्शनप्रायश्चित्तं ॥ स्मृतौ ॥ संभाषेतांस्पृशेतांवाब्राह्मण्यौचरजस्वले ॥ अस्नानकालंनाश्नीतामुभेमत्या
मिथःक्वचित् ॥ स्नात्वोपवासंकुर्यातांपंचगव्येनशुद्ध्यतः ॥ उपवासेत्वशक्ताचेत्तत्समंदानमाचरेत् ॥ अथनैमित्तिकस्नानं
॥ स्मृत्यर्थसारे ॥ स्नानेनैमित्तिकेप्राप्तेरजोदृष्टौपात्रांतरिततोयेनस्नात्वाद्भिस्सिक्तमात्रासांगोपांगवस्त्रपीडनमन्यद्वस्त्रधा
रणंचकृत्वाव्रतंचरेदिति ॥ पुनारजोदर्शनेकाश्यपः ॥ त्रयोदशदिनादूर्ध्वंरजोदृष्टवतीयदा ॥ अष्टादशाहात्प्राग्वापित्रि
रात्रमितिनिश्चयः ॥ एकादशाहेत्वेकाहंद्विरात्रंद्वादशेहनि ॥ ऊर्ध्वंत्रिरात्रंविज्ञेयमितिकुंडालिचोदितमिति ॥ कृष्णोपि ॥
रजस्वलाम्रुतिर्वापिप्रसूतिर्वाभवेद्यदि ॥ रात्रिंत्रिभागंकुर्वीतद्वौभागौपूर्वमन्यथेति ॥ अथस्नानं ॥ स्मृतिसंग्रहे॥ रजस्व

लाचतुर्थेन्हिप्रक्षाल्यांगोद्भवान्मलान् ॥ दंतानांधावनंकृत्वासंगवेस्नानमाचरेत् ॥ आतुराचेदृतुमतीतस्याःस्नानंकथंभवेत्॥
स्पृष्ट्वातुतांपरास्नायाद्दशकृत्वाह्यनातुरा ॥ वासोभिर्दशभिश्चैवपरिधाप्ययथाक्रमं ॥ ब्राह्मणान्भोजयित्वाथपुण्याहेनवि
शुद्ध्यति ॥ अतुराणांतुसर्वेषामेवंशुद्धिर्विधीयतइति ॥ अथस्नानानंतरंकृत्यमाह विवस्वान् ॥ ऋतुस्नाताभवेन्नारीधृत्वा
शुक्लांबरंशुभं ॥ आचम्यालंकृताभूत्वापुष्पाद्यैस्सूर्यमर्चयेत् ॥ ऋतुस्नातासतीनारीयंस्नेहान्नरमीक्षते ॥ तादृशंजनयेत्पु
त्रंतस्मात्पश्येन्निजंपतिं ॥ नारदीये ॥ओजराश्यंशगेचंद्रेलग्नेपुंग्रहवीक्षिते ॥ अयुग्मदिवसेभार्यांकन्यार्थीकामयेत्पतिः ॥
स्कांदे ॥ द्वादशाष्टचतुर्थस्थेचंद्रेवैनाशिकर्क्षगे ॥ उपवीतियुग्मतिथौननग्नःकामयेत्स्त्रियं ॥ पुत्रार्थीपुरुषस्त्यक्त्वापौ
ष्णमूलाहिपैत्रभं ॥ युग्मर्क्षेभेशशांकेचलग्नेस्त्रीग्रहवीक्षिते ॥ वैधृतौचव्यतीपातेमघायांमूलभेतथा ॥ गंडातिगंडपरिघशू
लयोगेषुवर्जयेत् ॥ एवंनियममाश्रित्यनिषेकीपुरुषोभुवि ॥ लभतेसंततिंयोग्यामिहामुत्रचशर्मणे ॥शास्त्रोक्तदिवसेशुद्धा
क्षामारात्रौपतिव्रता ॥ पतिमेवहरिम्मत्वास्वयमेवरमेतच ॥ बृहस्पतिः ॥ निशाषोडशगन्नारीसंज्ञितर्तुमतीतिसा ॥ ता
वद्योग्याप्रजास्थानेविनाद्याहचतुष्टयमिति ॥यद्यपिऋतावेवगमनंविहितंतथापिकामयमानामनृतावपिगच्छेदित्याहाचा
र्यः ॥ पत्नीमप्यनृतौनेयादियाद्वाभ्यर्थितस्तयेति ॥ अथतिथ्यादिनिर्णयः ॥ श्रीधरीये ॥ षष्ठ्यष्टमींपंचदशींचतुर्थींच
तुर्दशीमप्युभयत्रहित्वा ॥ शेषाःशुभाःस्युस्तिथयोनिषेकेवारास्सिताचार्यशशींदुजानां ॥ कालनिर्णये ॥ रिक्तापर्वा
ष्टमीषष्ठीदिवाजन्मत्रयंतथा ॥ पापग्रहाणांवाराश्चत्याज्याश्चैवानृतौगतिः ॥ अथनक्षत्राणि ॥ विष्णुप्रजेशरविमित्रस

मीरपौष्णमूलोत्तरावरुणभानिनिषेककार्ये ॥ पूज्यानिपुष्यवसुशीतकराश्विचित्रादित्याश्चमध्यमफलाविफलाःस्युरन्याः
॥ अत्रजन्मत्रयमपिवर्ज्यमाहबृहस्पतिः ॥ श्राद्धंपित्र्यंचिकित्सांचमैथुनाभ्यंजनेतथा ॥ चौलोपनयनादीनिवर्जयेत्त्रिषुज
न्मसु ॥ अथराशयः ॥ वृषभमिथुनकर्किसिंहकन्यातुलाधरचापझषाःशुभाभवंति ॥ यदिशुभबलशालिनोनुकूला
निधनशुद्धियुतानिषेककार्ये ॥ तत्रेतिकर्तव्यतामाहश्रीमतिः ॥ वेदागमोक्तसमयेरुचिरेप्रदेशेवाजीकृतेनजितरोषभये
नपुंसा ॥ मंत्रौषधप्रवरतीर्थजलोज्ज्वलेषुकांताजनेष्वथनिषेकविधिर्विधेयः ॥ (वाजीकृतेनभुक्तवतेत्यर्थः) ॥ इतिका
लनिर्णयः ॥ अथपतिनियमः ॥ अथयदिस्त्रीरजस्वलाभवतितयासहनसंभाषेत्सहनोपविशेत् ॥ नास्याउपभोगंकुर्या
त्तत्रजातःपतितोभवति ॥ यांस्नातामप्यरण्येगच्छतिततउत्पन्नस्तेनोभवतियास्नातितस्यांजातउदकेम्रियतेयाभ्यंक्तेतत्र
जातोदुश्चर्मा ॥ यालिखतितत्रदुष्टः ॥ याआंक्तेतत्रांधकः ॥ यादंतधावनंकरोतितस्यांक्रिमिदन्तः ॥ यानखनिकृंतनंक
रोतितस्यांकुनखी ॥ याप्राणिनोहंतितस्यांनपुंसकः ॥ यारज्जुंसृजतितस्यांजातउद्बंधनेनम्रियते ॥ यापर्णेभुंक्तेतस्या
मुन्मत्तोजायते ॥ याऱ्हस्वपात्रेणभुंक्तेपिबतिवातस्यांऱ्हस्वोजायते ॥ अतइत्येतत्सर्वंवर्जयित्वाव्रतंचरेत् ॥ दिवास्वापम
लंकारंक्रीडांशिल्पक्रियांतथा ॥ ग्रहकर्माणितांबूलमध्वानंरात्रिभोजनं ॥ ज्योतिषांदर्शनंस्पर्शमन्नेमांसाशनंतथा ॥ हस
नंशयनंतल्पेप्रजानिश्रेयसार्थिनी ॥ एतत्सर्वंवर्जयेदितिशेषः ॥ चतुर्थेदिनेस्नानानंतरंपतिंपश्येत्सूर्यंवा॥ इतिरजस्व
लानियमः ॥ तत्रादौग्रहशांतिमृतुशांतिंसमानतंत्रेणभिन्नतंत्रेणवाकुर्यात् ॥ तथाचप्रयोगमंजर्यां ॥ कर्माणितुल्यपाका

निविधीयंतेस्वभावतः ॥ यान्येकबर्हिरिध्माज्यस्विष्टकृंतहितानितु ॥ ग्रंथांतरे ॥ यत्रैकस्मिन्कालेतत्तन्निमित्तानुरोधेनयु
गपत्प्रवृत्तानामनेकपाकयज्ञानांतंत्रावृत्तिरास्तिनवेत्याशंकायामाह ॥ अनेकेपाकयज्ञाःस्युरेकस्मिन्कालएवचेत् ॥ स
मानतंत्रकाःकार्यानतंत्रावृत्तिरिष्यते ॥ पाकयज्ञोनामचरुपूर्वोयज्ञःपाकयज्ञः ॥ अतएवशांतिकपौष्टिकादीनामपियज्ञ
त्वमितिविष्णुभट्टोक्तेश्च ॥ प्रयोगरत्नेपि ॥ एवंविघ्नंतुसंपूज्यग्रहांश्चैवविधानतः ॥ कर्मणांफलमाप्नोतियाज्ञवल्क्येनक
र्मचेति ॥ फलसिद्धावविघ्नार्थत्वेनग्रहयज्ञस्यावश्यकत्वोक्तेः ॥ शौनकः ॥ आर्तवानांतुनारीणांशांतिंवक्ष्यामिशौनकः॥
इत्युपक्रम्य ग्रहातिथ्यपुरस्सरमितिप्रकरणोक्तेरावश्यकत्वादेककालकर्तृकाणांचविशेषवचनाभावेतंत्रेणकर्तव्यत्वाद्ग्रह म
खपूर्वकंतंत्रेगशांतिप्रयोगउच्यत इति ॥ अथर्तुशांतिप्रयोगः ॥ स्त्रीणांप्रथमरजोदर्शनकालेतिथिवारनक्षत्रयोगकर
णलग्नानांमध्येन्यतमस्यदुष्टत्वात्तद्दोषपरिहारार्थमृतुशांतिंकुर्यात् ॥ यथा ॥ चतुर्थेपंचमेन्यस्मिन्वाशुभेदिनेप्रातस्स्नाना
दिनित्यकर्मकृत्वावैश्वदेवंहुत्वास्नानपवनादिमंत्रप्रोक्षणांतंकृत्वापुनराचमनप्राणायामौकृत्वादेशकालौसंकीर्त्य नांदीसमा
राधनंकर्तुंगणपतिपूजनंस्वस्तिपुण्याहवाचनंकरिष्य इतिसंकल्प्य तत्कृत्वापुनःप्राणानायम्यग्रहशांतिमृतुशांतिगर्भा
धानाख्यकर्मकर्तुंस्वस्तिपुण्याहवाचनाख्यंकर्मकरिष्य इतिसंकल्प्य ॥ तत्कृत्वाआदित्यादिनवग्रहाः प्रीयंतांसविताप्री
यतांवेधाःप्रीयतामितिविशेषः ॥ अथप्रोक्षणांतंकृत्वाचार्यादीन्वृत्वापुनःप्राणानायम्यदेशकालौसंकीर्त्य ममभार्यायाः
प्रथमरजोदर्शनकालेतिथिवारनक्षत्रयोगकरणदोषशांत्यर्थमृतुशांतिंकरिष्यइतिसंकल्प्य ॥ श्वेतमृद्भिरष्टदलपद्मंविलि

ख्यतदुपरिप्रस्थाष्टभिर्धान्यैस्तदर्धैस्तंडुलैस्तदर्धैस्तिलैश्चारत्निमात्रंसमचतुरस्रंस्थंडिलंकृत्वातदुपर्यष्टदलपद्मंविलिख्यत
स्मिन्तंतुवेष्टितंसुधूपितंकलशन्निधायप्रोक्ष्यतस्मिन्नुदगग्रंकूर्चमंतर्धाय ॥ ॐआपोवाइदगुँसर्वंविश्वाभूतान्यापः प्राणावा
आपः ॥ पशवआपोन्नमापोमृतमापस्संम्राडापोविराडापःस्वराडापश्छंदागुँस्यापोज्योतीगुँष्यापोयजूगुँष्यापस्सत्यमा
पस्सर्वादेवताआपोभूर्भुवस्सुवरापॐ ॥ आपोहिष्ठेतितिसृभिश्चकलशमुदकैः पूरयित्वापंचत्वक्पंचपल्लवांश्चनिक्षिप्ययु
ग्मेननववस्त्रेणाच्छाद्यबिल्वपल्लवैश्चूतपल्लवैश्चावकीर्यकूर्चमंतर्धायनारिकेलफलेनापिधायपुरुषंपुंडरीकाक्षंध्यात्वाऋतुशां
तिसूक्तपठनार्थंपूर्वस्यांदिश्यृत्विजंत्वामहंवृणे ॥ एवंदक्षिणस्यांदिश्यृत्विजं ॥ पश्चिमायांदिशि ॥ उत्तरस्यांदिशिऋत्वि
जंत्वामहंवृणे ॥ इतिचतुर्दिक्षुचतुरोष्टौषड्वाऋत्विजोवरयित्वागंधादिभिरभ्यर्च्य परिस्तीर्यमहीद्यौःपृथिवीचनइत्यादि
भिः कलशस्थापनादिपूजांतंकृत्वा ॥ ॐभूः पुरुषमावाहयामि ॥ ॐभुवः पुरुषं ॥ ओगुँसुवः पुरुषं ॥ ॐभूर्भुवस्सुवः
पुरुषं ॥ आवाहयामीत्यावाह्यषोडशोपचारान्कृत्वा ॥ कलशस्यमुखेविष्णुरित्यादिभिः कलशंध्यात्वाततस्सर्वेकुंभमन्वा
रभ्यजपंति ॥ ॐनारायणायविद्महेवासुदेवायधीमहि ॥ तन्नोविष्णुः प्रचोदयात् ॥ इतिवैष्णवींगायत्रींसहस्राष्टकंशता
ष्टकंवाजपित्वावेदादीन्जपति ॥ ॐअग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं॥होतारंरत्नधातमं ॥ इषेत्वा*॥*यज्ञस्य*॥*शुंधध्व
मितित्रिरनुवाकान्॥अग्नआयाहि*॥*शन्नोदेवीरितिद्वौप्रतीकौ॥आपोहिष्ठेतितिस्रः॥हिरण्यवर्णाइतिचतस्रः॥पवमानस्सु
वर्जनइत्येकमनुवाकं॥सहस्रशीर्षापुरुषइत्येकमनुवाकं ॥ अथपंचशांतिः ॥ भद्रंकर्णेभिःशृणुयामदेवाः॥भद्रंपश्येमाक्षभिर्य

जत्रा॥स्थिरैरंगैस्तुष्टुवाग्ँसस्तनूभिः॥व्यशेमदेवहितंयदायुः॥स्वस्तिनइंद्रोवृद्धश्रवाः॥स्वस्तिनःपूषाविश्ववेदाः ॥स्वस्ति
नस्तार्क्ष्योअरिष्टनेमिः॥स्वस्तिनोबृहस्पतिर्दधातु॥ॐशांतिःशांतिःशांतिः॥१॥ॐनमोब्रह्मणेनमोअस्त्वग्नयेनमःपृथिव्यैन
मओषधीभ्यः॥नमोवाचेनमोवाचस्पतयेनमोविष्णवेबृहतेकरोमि॥ॐशांतिःशांतिःशांतिः॥ २ ॥ॐतच्छंयोरावृणीमहे॥गा
तुंयज्ञाय॥गातुंयज्ञपतये॥दैवीस्वस्तिरस्तुनः॥स्वस्तिर्मानुषेभ्यः॥ऊर्ध्वंजिगातुभेषजं॥शन्नोअस्तुद्विपदेशंचतुष्पदे ॥ॐशां
तिःशांतिःशांतिः ॥ ३ ॥ ॐनमोवाचेयाचोदितायाचानुदितातस्यैवाचेनमोनमोवाचेनमोवाचस्पतयेनमऋषिभ्योमंत्रकृ
द्भ्योमंत्रपतिभ्योमामामृषयोमंत्रकृतोमंत्रपतयः परादुर्माहमृषीन्मंत्रकृतोमंत्रपतीन्परादांवैश्वदेवींवाचमुद्यासग्ँशिवामद
स्तांजुष्टांदेवेभ्यः शर्ममेद्यौः शर्मपृथिवीशर्मविश्वमिदं जगत् ॥शर्मचंद्रश्चसूर्यश्चशर्मब्रह्मप्रजापती ॥ भूतंवदिष्येभुवनंवदि
ष्येतेजोवदिष्येयशोवदिष्येतपोवदिष्येब्रह्मवदिष्येसत्यंवदिष्येतस्माअहमिदमुपस्तरणमुपसृणउपस्तरणंमेप्रजायैपशू
नांभूयादुपस्तरणमहंप्रजायैपशूनांभूयासंप्राणापानौमृत्योर्मापातंप्राणापानौमामाहासिष्टंमधुमनिष्येमधुजनिष्येमधुव
क्ष्यामिमधुवदिष्यामिमधुमतींदेवेभ्योवाचमुद्यासग्ँशुश्रूषेण्यांमनुष्येभ्यस्तंमादेवाअवंतुशोभायैपितरोनुमदंतु ॥ ॐशां
तिःशांतिःशांतिः ॥ ४ ॥ शन्नोवातःपवतांमातरिश्वाशन्नस्तपतुसूर्यः ॥ अहानिशंभवंतुनश्शग्ँरात्रिःप्रतिधीयतां ॥ श
मुषानोव्युच्छतुशमादित्यउदेतुनः ॥ शिवानश्शंतमाभवसुमृडीकासरस्वतिमातेव्योमसंदृशि ॥ इडायैवास्त्वासिवास्तु
मद्वास्तुमंतोभूयास्ममावास्तोच्छित्स्मह्यवास्तुस्सभूयाद्योस्मान्द्वेष्टियंचवयंद्विष्मः ॥ प्रतिष्ठासिप्रतिष्ठावंतोभूयास्ममा

प्रतिष्ठायाञ्छिथ्रस्मेह्यप्रतिष्ठस्सभूयाद्योस्मान्द्वेष्टियंचवयंद्विष्मः ॥ आवातवाहिभेषजंविवातवाहियद्रपः॥ त्वगुँहिविश्वभे
षजोदेवानांदूतईयसे ॥ द्वाविमौवातोवातआसिंधोरापरावतः ॥ दक्षंमेअन्यआवातुपरान्योवातुयद्रपः ॥ यददोवा
ततेग्रहेमृतस्यनिधिर्हितः ॥ ततोनोदेहिजीवसेततोनोधेहिभेषजं ॥ ततोनोमहआवहवातआवातुभेषजगुँशंभूर्मयोभूर्नो
हृदे ॥ प्रणआयुगुँसितारिषत् ॥ इंद्रस्यग्रहोसितंत्वाप्रपद्येसगुँसाश्वः ॥ सहयन्मेअस्तितेन ॥ भूःप्रपद्येभूवः प्रपद्येसु
वःप्रपद्येभूर्भुवस्सुवःप्रपद्येवायुंप्रपद्येनार्तांदेवतांप्रपद्येश्मानमाखणंप्रपद्येप्रजापतेर्ब्रह्मकोशंब्रह्मप्रपद्यऊँप्रपद्ये ॥ अंतरि
क्षंमउर्वंतरंबृहदग्नयः पर्वताश्चययावातस्वस्त्यास्वस्तिमांतयास्वस्त्यास्वामिमानसानि ॥ प्राणापानौमृत्योर्मापातंप्राणा
पानौमामाहासिष्टंमयिमेधांमयिप्रजांमय्यग्निस्तेजोदधातुमयिमेधांमयिप्रजांमयींद्रइंद्रियंदधातुमयिमेधांमयिप्रजांमयि
सूर्योभ्राजोदधातु ॥ २ ॥ द्युभिरक्तुभिःपरिपातमस्मानरिष्टेभिरश्विनासौभगेभिः ॥ तन्नोमित्रोवरुणोमामहंतामदितिस्सिं
धुःपृथिवीउतद्यौः ॥ कयानश्चित्रआभुवदूतीसदावृधस्सखा ॥ कयाशचिष्ठयावृता ॥ कस्त्वासत्योमदानांमगुँहिष्ठोमत्स
दंधसः ॥ दृढाचिदारुजेवसु ॥ अभीषुणस्सखीनामविताजरितृणां ॥ शतंभवास्यूतिभिः ॥ वयस्सुपर्णाउपसेदुरिंद्रंप्रिय
मेधाऋषयोनाधमानाः ॥ अपध्वांतमूर्णुहिपूर्धिचक्षुर्मुमुग्ध्यस्मान्निधयेवबद्धान् ॥ ३ ॥ शन्नोदेवीरभिष्टयआपोभवंतुपी
तये ॥ शंयोरभिस्रवंतुनः ॥ ईशानावार्याणांक्षयंतीश्चर्षणीनां ॥ अपोयाचामिभेषजं ॥ सुमित्रानआपओषधयस्संतुदु
र्मित्रास्तस्मैभूयासुर्योस्मान्द्वेष्टियंचवयंद्विष्मः ॥ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिव

तमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥४॥
पृथिवीशांतासाग्निनाशांतासामेशांताशुचगुँशमयतु ॥ अंतरिक्षगुँशांतंतद्वायुनाशांतंतन्मेशांतगुँशुचगुँशमयतु ॥ द्यौःशां
तासादित्येनशांतासामेशांताशुचगुँशमयतु ॥ पृथिवीशांतिरंतरिक्षगुँशांतिर्द्यौश्शांतिर्दिशश्शांतिरवांतरदिशाश्शांतिरग्निः
शांतिर्वायुश्शांतिरादित्यःशांतिश्चंद्रमाश्शांतिर्नक्षत्राणिशांतिरापःशांतिरोषधयःशांतिर्वनस्पतयःशांतिर्गौःशांतिरजाशांति
रश्वःशांतिःपुरुषश्शांतिर्ब्रह्मशांतिर्ब्राह्मणःशांतिःशांतिरेवशांतिश्शांतिर्मेअस्तुशांतिः ॥ तयाहगुँशांत्यासर्वशांत्यामह्यंद्वि
पदेचतुष्पदेचशांतिंकरोमिशांतिर्मेअस्तुशांतिः ॥ एहश्रीश्चह्रीश्चधृतिश्चतपोमेधाप्रतिष्ठाश्रद्धासत्यंधर्मश्चैतानिमोत्तिष्ठं
तमनूत्तिष्ठतुमामागुँश्रीश्चह्रीश्चधृतिश्चतपोमेधाप्रतिष्ठाश्रद्धासत्यंधर्मश्चैतानिमामाहासिषुः ॥ उदायुषास्वायुषोदोषधी
नागुँरसेनोत्पर्जन्यस्यशुष्मेणोदस्थाममृतागुँअनु ॥ तच्चक्षुर्देवहितंपुरस्ताच्छुक्रमुच्चरत् ॥ पश्येमशरदःशतंजीवेमशरदः
शतंनंदामशरदःशतंमोदामशरदःशतंभवामशरदःशतगुँशृणुवामशरदःशतंप्रब्रवामशरदःशतमजीतास्यामशरदःशतंज्यो
क्सूर्यंदृशे॥यउदगान्महतोर्णवाद्विभ्राजमानस्सरिरस्यमध्यात्समावृषभोलोहिताक्षस्सूर्योविपश्चिन्मनसापुनातु॥ब्रह्मणा
श्चोतन्यसिब्रह्मणआणीस्थोब्रह्मणआवपनमसिधारितेयंपृथिवीब्रह्मणामहीधारितमेनेनमहदंतरिक्षंदिवंदाधारपृथिवीगुँ
सदेवांयदहंवेदतदहंधारयाणिमामद्वेदोधिविस्रसत् ॥ मेधामनीषेमाविशतागुँसमीचीभूतस्यभव्यस्यावरुध्यैसर्वमायुरया
णिसर्वमायुरयाणि ॥ आभिर्गीर्भिर्यदतोनऊनमाप्याययहरिवोवर्द्धमानः॥ यदास्तोतृभ्योमहिगात्रारुजासिभूयिष्ठभाजो

अधतेस्याम ॥ ब्रह्मप्रावादिष्मतन्नोमाहासीत् ॥ ॐशांतिःशांतिःशांतिः ॥ ॐशन्नस्तन्नोमाहासीत् ॥ ॐशांतिःशांति
शांतिः ॥ नमस्तेरुद्रमन्यवइतिप्रश्नं ॥ अग्नाविष्णूसजोषसेत्येकादशानुवाकान् ॥ ऋचांप्राचीमहतीदिगुच्यते ॥ दक्षि
णामाहुर्यजुषामपारां ॥ अथर्वणामंगिरसांप्रतीची ॥ साम्नामुदीचीमहतीदिगुच्यते ॥ ऋग्भिःपूर्वाण्हेदिविदेवईयते ।
यजुर्वेदेतिष्ठतिमध्येअन्हः ॥ सामवेदेनास्तमयेमहीयते ॥ वेदैरशून्यस्त्रिभिरेतिसूर्यः ॥ ऋग्भ्योजातागुँसर्वशोमूर्तिमाहुः ॥
सर्वागतिर्याजुषीहैवशश्वत् ॥ सर्वंतेजस्सामरूप्यगुँहशश्वत् ॥ सर्वगुँहेदंब्रह्मणाहैवसृष्टं ॥ ऋग्भ्योजातंवैश्यंवर्णमाहु
॥ यजुर्वेदंक्षत्रियस्याहुर्योनिं ॥ सामवेदोब्राह्मणानांप्रसूतिः ॥पूर्वेपूर्वेभ्योवचएतदूचुः ॥ आदर्शमग्निंचिन्वानाः ॥ पूर्वेवि
श्वसृजोमृताः ॥ शतंवर्षसहस्राणि ॥ दीक्षितास्सत्रमासत ॥ २ ॥ तपआसीद्गृहपतिः ॥ ब्रह्मब्रह्माभवत्स्वयं ॥ सत्यगुँ
हहोतैषामासीत् ॥ यद्विश्वसृजआसत ॥ अमृतमेभ्यउदगायत् ॥ सहस्रंपरिवत्सरान् ॥ भूतगुँहप्रस्तोतैषामासीत् ।
भविष्यत्प्रतिचाहरत् ॥ प्राणोअध्वर्युरभवत् ॥ इदगुँसर्वगुँसिषासतां ॥ ३ ॥ अपानोविद्वानावृतः ॥ प्रतिप्रातिष्ठदध्वरे
॥ आर्तवाउपगातारः ॥ सदस्याऋतवोभवन् ॥ अर्धमासाश्चमासाश्च ॥ चमसाध्वर्यवोभवन् ॥ अशगुँसद्ब्रह्मणस्तेज
॥ अच्छावाकोभवद्यशः ॥ ऋतमेषांप्रशास्तासीत् ॥ यद्विश्वसृजआसन् ॥ ४ ॥ ऊर्ग्राजानमुदवहत् ॥ ध्रुवगोपः सह
भवत् ॥ ओजोभ्यष्टौग्रावणः ॥ यद्विश्वसृजआसत ॥ अपचितिः पोत्रियामयजत् ॥ नेष्ट्रियामयजत्त्विषिः ॥ आग्नीध्रा
द्विदुषीसत्यं ॥ श्रद्धाहैवायजत्स्वयं ॥ इरापत्नीविश्वसृजां ॥ आकूतिरपिनद्धहिः ॥ ५ ॥ इध्मगुँहक्षुच्चैभ्यउग्रे ॥ तृष्णा

चावहतामुभे ॥ वागेषागुँसुब्रह्मण्यासीत् ॥ छंदोयोगान्विजानती ॥ कल्पतंत्राणितन्वानः ॥ सगुँस्थाश्वसर्वशः ॥ अ
होरात्रेपशुपाल्यौ ॥ मुहूर्ताः प्रेष्याअभवन् ॥ मृत्युस्तदभवद्धाता ॥ शमितोग्रोविशांपतिः ॥६॥विश्वसृजः प्रथमास्स
त्रमासत ॥ सहस्त्रसमंप्रसृतेनयंतः ॥ तपोहजज्ञेभुवनस्यगोपाः ॥ हिरण्मयः शकुनिर्ब्रह्मनाम ॥ येनसूर्यस्तपतितेज
सेद्धः ॥ पितापुत्रेणपितृमान्योनियोनौ ॥ नावेदविन्मनुतेतंबृहंतं॥सर्वानभूमात्मानगुँसंपराये॥एषनित्योमहिमाब्राह्मण
स्य ॥नकर्मणावर्द्धतेनोकनीयान्॥ ७ ॥ तस्यैवात्मापदवित्तंविदित्वा॥ नकर्मणालिप्यतेपापकेन॥पंचपंचाशतस्त्रिवृतस्सं
वत्सराः ॥ पंचपंचाशतःपंचदशाः॥पंचपंचाशतस्सप्तदशाः॥पंचपंचाशतएकविगुँशाः॥ विश्वसृजागुँसहस्त्रसंवत्सरं ॥एते
नवैविश्वसृजइदंविश्वमसृजंत॥यद्विश्वमसृजंत॥तस्माद्विश्वसृजः ॥ विश्वमेनाननुप्रजायते ॥ ब्रह्मणस्सायुज्यगुँसलोकतां
याति ॥ एतासामेवदेवतानागुँसायुज्यं ॥ सार्ष्टितागुँसमानलोकतांयंति ॥ यएतदुपयंति ॥ येचैनत्प्राहुः ॥ एभ्यःश्वै
नत्प्राहुः ॥ ॐ इतिजपित्वाओमितिकुंभमुत्थाप्यभद्रासनेकन्यामुपवेश्य ॥ आपोहिष्ठेतितिसृभिर्हिरण्यवर्णाइतिचत
सृभिः पवमानस्सुवर्जनइत्यादिभिर्मार्जयित्वाथर्त्विजस्तिथिवारनक्षत्रयोगकरणादिजनितसमस्तदोषपरिहारोस्त्वित्या
शीर्वादपुरस्सरंतांश्नापयित्वामंगलवस्त्रादिभिरलंकृत्यपंचगव्यंसगुँस्कृत्य ॥ यत्वगस्थिगतंपापंदेहेतिष्ठतिमामके ॥ प्रा
शनंपंचगव्यस्यदहत्वग्निरिवेंधनमितिमंत्रेणपंचगव्यंप्राशयित्वाहोमंकुर्यात् ग्रहशांतिऋतुशांतिहोमंकर्तुंस्थलशुद्ध्यर्थंस्थं
डिलोल्लेखनाख्यंकर्मकरिष्य इतिसंकल्प्य ॥ अग्निप्रतिष्ठापनांतंकृत्वाकर्ताप्राणानायम्यदेशकालौसंकीर्त्यममभार्यायाः॥

प्रथमरजोदर्शनकालेगर्भाधानकालेचा।दित्यादीनांनवानांग्रहाणांशुभैकादशस्थानफलावाप्त्यर्थंमासतिथिवारनक्षत्रयोग
करणजनितसमस्तदोषशांत्यर्थंनवग्रहमखपूर्वकमृतुशांतिहोमंसमानतंत्रेणकरिष्ये ॥ नवग्रहर्तुशांतिहोमःकर्म आधार
वत्तंत्रंपंचदशदारुरिध्मः अग्नीषोमावाज्यभागौकपिलोनामाग्निरित्यादिसर्वंपूर्ववदुक्त्वाशांतिहोमेवरदोनामाग्निःसविता
देवताचरुर्हविः ॥ प्रधानहोमेब्रह्माविष्णुरुद्रत्र्यंबकादयोदेवताः पलाशसमिच्चर्वाज्यतिलद्रव्याणिहवींषिसोमराजचरु
णाग्न्यादित्यविष्णुसूर्यब्रह्मबृहस्पतयइत्येतेस्विष्टकृद्देवताः आज्यस्यमांत्रवर्णिक्योदेवताः एताअंगदेवताः प्रधानदे
वताइत्यादिसंकल्प्यान्वाधानादिकंकुर्यात् ॥ यदिपृथक्क्रियतेतदावरदोनामाग्निरित्यादिकमुक्त्वान्वाधानाद्यग्निमुखांतंकृ
त्वापक्कहोमादिकंकुर्यात् ॥ अथप्रणीताभ्यःकृत्वानवग्रहान्पूर्ववत्संपूज्यकलशस्थापनंचकृत्वानवग्रहेभ्यः पूर्ववत्पक्कंहुत्वा
समिच्चर्वाज्यतिलव्रीहिहोमांश्चपूर्ववत्कृत्वाथर्तुशांतिप्रधानपक्कहोमंकरिष्यइतिसंकल्प्य ॥ ॐ भूर्भुवस्सुवरों तत्सवि
तुः *॥* दयात्स्वाहा ॥ इतिपक्कंहुत्वाथविष्णुसूक्तेनशताष्टकसंख्ययापालाशसमिधोहुत्वा ब्रह्मसूक्तेनान्नंरुद्रसूक्तेना
ज्यंप्रतिमंत्रंजुहुयात्तेषामष्टादशकृत्वइतिसूत्रं ॥ यथा ॥ विष्णोर्नुकं *॥* तदस्यप्रियं *॥* प्रतद्विष्णुः *॥* परोमात्र
या *॥* विचक्रमे *॥* त्रिर्देवइतिषड्विष्णुसूक्तं ॥ सर्वत्रविष्णवइदं ॥ ब्रह्मजज्ञानं *॥* पितावैराजा *॥*ब्रह्मदेवानजन
यत् *॥* अंतरस्मिन्निमेलोकाः *॥* ब्रह्मन्देवास्त्रयः *॥* चतस्रआशाइतिषड्ब्रह्मसूक्तं ॥ सर्वत्रब्रह्मणइदं ॥ परिणो
रुद्रः *॥* स्तुहिश्रुतं *॥* मीढुष्टमा *॥* अर्हन्बिभर्षि *॥* त्वमग्नेरुद्रो *॥*आवोराजानमितिषड्रुद्रसूक्तं॥ॐ अर्हन्बिभर्षिसा

यकानिधन्व ॥ अर्हन्निष्कंयजतंविश्वरूपं ॥ अर्हन्निदंदयसेविश्वमभ्वं ॥ नवाओजीयोरुद्रत्वदस्तिस्वाहा ॥ ॐत्वमग्ने रुद्रोअसुरोमहोदिवः ॥त्वगुँशर्धोमारुतंपृक्षईशिषे ॥ त्वंवातैररुणैर्यासिशंगयः ॥ त्वंपूषाविधतः पासिनुत्मनास्वाहा ॥ ॐ आवोराजानमध्वरस्यरुद्रगुँहोतारगुँसत्ययजगुँरोदस्योः ॥ अग्निंपुरातनयित्नूरचित्ताद्धिरण्यरूपमवसेकृणुध्वगुँस्वा हा॥सर्वत्ररुद्रायेदं॥एवमेवप्रतिसूक्तमष्टादशकृत्वाहुतेप्र त्येकमष्टोतरशतंभवति॥अथायुष्यहोमः॥ॐयोब्रह्माब्रह्मणउज्ज भार॥* ईशानायदेवायेदं ॥१॥ॐ विभ्राजमानः *॥* घर्मरुचयेदेवायेदं॥२॥ब्रह्मज्योतिः*॥* ॐब्रह्मज्योतिषेयमायेदं ॥ ॥ ३ ॥ श्रियंलक्ष्मीं *॥*श्रियैलक्ष्म्याऔपलायाअंबिकायैगवइंद्रसेनायाइदं ॥ ४ ॥ दाक्षायण्यः *॥*दाक्षायणीभ्यइ दं ॥ ५ ॥ दिव्यागणा *॥* दिव्येभ्योगणेभ्यइदं ॥ ६ ॥ एकः पुरस्तात् *॥* देवायेदं ॥ ७ ॥ वसून्रुद्रानादित्यान् *॥* वसुभ्योरुद्रेभ्योआदित्येभ्योमरुद्भ्यस्साध्येभ्योऋभुभ्योयज्ञेभ्योगंधर्वेभ्यःपितृभ्योभृगुभ्यस्सर्पेभ्योंगिरोभ्यइदं ॥८ ॥इ त्यष्टभिस्समिच्चवाज्यानिहुत्वात्र्यंबकमंत्रेणाष्टसहस्रमष्टशतंवातिलहोमंहुत्वाथस्विष्टकृतमवदायांतः परिधौनिधाय व्याहृ तिभिरुपहुत्यग्रहशांतिः कृताचेदर्यमणंबृहस्पतिमितिस्विष्टकृत्॥ विशेषविहितत्वात् ॥ अन्यथाहव्यवाहमितिस्विष्टकृतं हुत्वाजयप्रभृतिसर्वंयथावत्कृत्वापूर्ववद्ग्रहानभ्यर्च्य दक्षिणादिकंसर्वंपूर्ववदेवकुर्यात् ॥ इतिग्रहशांतिऋतुशांतिसमानतंत्र प्रयोगः ॥अथपंचगव्यं॥स्वस्तिकमध्येतंडुलोपरिमृन्मयादिपात्रन्निधायतदुत्तरभागेपूर्वेगोमूत्रंदक्षिणेगोमयंपश्चिमेक्षीर मुत्तरेदधिमध्येघृतंवायव्येकुशोदकमितिसादयित्वासनप्राणायामौकृत्वाअस्याःकुमार्याः प्रथमरजोदर्शनदोषपरिहारद्वा

राशरीरशुद्ध्यर्थंपंचगव्यप्राशनंकर्तुंपंचगव्यस्थापनंकरिष्यइतिसंकल्प्य ॥ गोमूत्रमादित्यदैवत्यंगोमयंवायुदैवत्यंक्षीरं
सोमदैवत्यंदधिशुक्रदैवत्यमाज्यंवन्हिदैवत्यंकुशोदकंगंधर्वदैवत्यमितिभावयित्वासंपूज्यपूर्वस्थापितपात्रेयोजयति ॥ गा
यत्र्यागोमूत्रंगंधद्वारामितिगोमयमाप्यायस्वेतिक्षीरंदधिक्राव्णइति दधिशुक्रमसीत्याज्यंदेवस्यत्वेतिकुशोदकमितिसंयो
ज्यापोहिष्ठेत्यालोडयमानस्तोकइत्यभिमंत्र्य गायत्र्यासवितारमावाह्यसंपूज्यगायत्र्याप्रणवेनचाभिमंत्र्य यत्वगस्थिगत
मितिप्राशयेत् ॥ इतिपंचगव्यविधिः ॥ ७ ॥ ॥ ७ ॥ ॥ अथग्रहस्थस्यस्त्रियाभ्यनुज्ञातस्यर्तुसंवेशनप्रथम
विच्छेदप्रायश्चित्तमुच्यते॥तदुक्तंविष्णुभट्टो॥ब्राह्मणेभ्योनिवेद्यतदुपदिष्टव्रतंचारित्वाकृच्छ्रामितिकेचित्॥त्रिशतप्रणायामंवा
॥तदुक्तंस्मृतिसंग्रहे ॥ ऋतुस्नातांनचेद्गच्छेन्नियतांब्रह्मचारिणीं ॥नियमातिक्रमात्तस्यप्राणायामशतत्रयमिति॥सार्धैककृच्छ्
मित्यर्थः ॥ ततोग्निमुपसमाधायप्राणानायम्यप्रथमर्तुसंवेशनविच्छेदप्रायश्चित्तहोमंकरिष्ये ॥ प्रायश्चित्तहोमःकर्मांघा
रवत्तंत्रामित्यादिचित्तिर्नामाग्निःजातवेदोग्निर्दैवता ॥ चरुर्हविरित्यादिसंकल्प्याग्निमुखांतंकृत्वा ॥ पक्कमवदाय ॥ ॐयस्त्वा
हृदा*॥*अमृतत्वमश्यां॥यस्मैत्वं * स्वस्तिस्वाहा ॥ जातवेदसेग्नयइदं॥अथस्विष्टकृतमवदायांतःपरिधौनिधाय॥ॐमधुश्च
स्वाहा॥मधवइदं॥ॐमाधवश्चस्वाहा॥माधवायेदं॥ॐगुँशुक्रश्चस्वाहा॥शुक्रायेदं॥ॐगुँशुचिश्चस्वाहा॥शुचयइदं ॥ॐनभ
श्चस्वाहा॥नभसइदं॥ॐनभस्यश्चस्वाहा ॥ नभस्यायेदं ॥ ॐइषश्चस्वाहा ॥इषायेदं ॥ ॐऊर्जश्चस्वाहा ॥ ऊर्जायेदं
॥ॐसहश्चस्वाहा॥सहायेदं ॥ ॐसहस्यश्चस्वाहा ॥ सहस्यायेदं ॥ ॐतपश्चस्वाहा ॥ तपायेदं॥ ॐतपस्यश्चस्वाहा

तपस्यायेदं॥ इतिद्वादशस्रुवाहुतीर्हुत्वाथस्विष्टकृत्प्रभृतिवरदानांतंपक्वशेषमाज्यशेषंचोभौजायापतीप्राश्नीयातां॥गायत्र्या
प्राश्यापआचम्य ॥ यतइंद्रभयामहे ॥ स्वस्तिदाविशस्पतिरितिजठरमभिमृश्यशेषंसमापयेत् ॥ इतिऋतुसंवेशनप्रथ
मविच्छेदप्रायश्चित्तप्रयोगः ॥ ७ ॥अथर्तुसंवेशनगर्भाधानयोस्समानतंत्रप्रयोगः॥ पारिजाते ॥ प्रथमेवाद्वितीयेवातृतीये
त्वशुभंभवेत् ॥ गर्भाधानंनकुर्वीतचतुर्थाद्याःशुभावहाः ॥ गुरौशुक्रेविरुद्धेचलाधिमासेमलिम्लुचे॥ अतीतस्यनिषेकस्य
गर्भाधानंप्रजाक्षयं ॥ उत्सवेषूत्सवेषुसीमंतऋतुजन्मसु ॥ सुरासुरेज्ययोश्चैवमौढ्यदोषोनविद्यते ॥ इत्यनेनकालप्राप्त
मृतुसंवेशनादिकंकर्तव्यं॥ अतीतंचेत्कालांतरेसुमुहूर्तेकर्तव्यमित्युक्तंभवति ॥ अथकालनिर्णयः॥ चतुर्थीषष्ठ्यष्टमीचतुर्द
शीपर्वसंक्रांतिव्यतीपातवैधृतिभरणीकृत्तिकार्द्राश्लेषामघाफल्गुनीविशाखाज्येष्ठापूर्वाषाढापूर्वाभाद्रपदाइतिदशनक्षत्राणि
जन्मत्रयरव्यंगारकशनिवारान्मेषवृश्चिकमकरकुंभराशींश्चवर्जयित्वायुग्मतिथिषुविषमतिथिषुवाएकादशंत्रयोदशदिनंच
वर्जयित्वाऋतुसंवेशनंकुर्यात् ॥प्रयोगरत्ने ॥ मंत्रैः प्रवेधसेयस्त्वायस्मैत्वंत्वेसुपुत्रकैः ॥ चतस्रोन्नाहुतीरंत्येहोतव्यामे
क्षणान्विताः ॥ ज्येष्ठाद्यैराज्यमष्टाभिर्हुत्वास्विष्टकृदादयः ॥ अथालंकृत्यशय्यायांविष्णुर्योनिंजपेन्निशीति ॥ विश्वामित्र
कारिकायां ॥ मासेतृतीयेविज्ञातेगर्भेतस्यास्तुकारणैः ॥ गर्भाधानविधिःकार्योजुहुयात्पक्वमेतया ॥ इत्युपक्रम्यऋतु
संवेशनविच्छित्तिप्रायश्चित्तमथमीरितैः ॥ त्रिभिर्यस्त्वाहृदेत्याद्यैःपक्वहोमादनंतरं॥ कैश्चिन्मेक्षणधर्मेणचरुहोमोविधी
यतइति ॥ गृह्यसूत्रे ॥ चतुर्थ्यांस्नातान्निशायामलंकृत्येत्यृतुसंवेशनकालउक्तः ॥ अथगर्भाधानंव्याख्यास्यामइत्यृतु

संवेशनानंतरंगर्भाधानमुक्तं ॥ किंच॥ यथर्तुसंवेशनादिजन्मप्रभृतिवेतिवचनाच्च ॥कारिकायां ॥प्रयोगरत्नेच॥गर्भाधानं
पक्वहोमानंतरमृतुसंवेशनविच्छित्तिप्रायश्चित्तान्नहोमत्रयस्योक्तत्वाद्गर्भाधानहोमानंतरमथालंकृत्यशय्यायांविष्णुर्योनिं
जपेन्निशीतिपूर्वोक्तवचनाच्च ॥ ऋतुसंवेशनस्यगर्भाधानेनसहसमानतंत्रत्वंपश्चात्कर्तव्यत्वंचोक्तंभवति ॥ विष्णुभट्टस्तु ॥
मेक्षणेनचरुंगृहीत्वा प्रवेधसेयस्त्वाहृदायस्मैत्वंत्वेसुपुत्रइतिचतसृभिर्जुहुयादित्युक्तं ॥ अतः पक्वहोमानंतरंचरुहोमंचतुष्ट
यंकार्यं ॥ चतुर्थ्याद्याषोडशादिनेषुयुग्मादिनेस्वानुकूलेसुमुहूर्तेऋतुसंवेशनंकर्तव्यं ॥ तत्रापियुग्मदिनेषुरात्रिषुपुत्राः अ
युग्मरात्रिषुकन्याः प्रजायंतइतिज्ञेयं ॥ अथप्रयोगः ॥ अथकर्ताप्रातर्मंगलस्नानादिनित्यकर्मकृत्वावैश्वदेवंहुत्वाचम्य
प्राणानायम्य देशकालौसंकीर्त्यकरिष्यमाणर्तुसंवेशनगर्भाधानांगतयाविहितंपुण्याहवाचनपूर्वकंनांदीसमाराधनंहिर
ण्येनकरिष्य इतिसंकल्प्य॥ तत्कृत्वापुनराचमनप्राणायामौकृत्वा आवयोःकरिष्यमाणगर्भाधानर्तुसंवेशनाख्यंकर्मकर्तुं
देहशुद्ध्यर्थंस्नानपवनमंत्राचमनमंत्रप्रोक्षणानिकरिष्य इतिसंकल्प्य ॥ तत्कृत्वापुनःपूर्ववत्संकल्प्यगर्भाधानर्तुसंवेशना
ख्यकर्मकर्तुंपुण्याहवाचनंकरिष्य इतिसंकल्प्यानयोर्गर्भाधानर्तुसंवेशनकर्मणोः पुण्याहंभवंतोब्रुवंतु ॥ आभ्यांगर्भाधा
नर्तुसंवेशनकर्मभ्यांस्वस्तिभवंतोब्रुवंतु ॥ एनयोर्गर्भाधानर्तुसंवेशनकर्मणोः ऋद्धिंभवंतोब्रुवंतु ॥ वेधाःप्रजापतिःप्रिय
तामितिविशेषः ॥ प्रोक्षणांतंकृत्वाथगर्भाधानहोमंकर्तुंस्थलशुद्ध्यर्थंस्थंडिलोल्लेखनाख्यंकर्मकरिष्यइतिसंकल्प्य ॥ तत्कृ
त्वालौकिकाग्निंप्रतिष्ठाप्याजुह्वानउद्बुध्यस्वाग्नइत्यारोपितसमिधंनिधायाचम्यप्राणानायम्यदेशकालौसंकीर्त्य ममास्यां

भार्यायांजनिष्यमाणबीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरप्रजासंस्कारातिशयद्वाराश्रीपरमेश्वरप्रीत्यर्थंगर्भाधानहोमंकरि
ष्ये ॥ गर्भाधानहोमःकर्माघारवत्तंत्रमित्यादिमारुतोनामाग्निः वेधादेवताचरुर्हविरग्निःस्विष्टकृदाज्यस्यमांत्रवर्णिक्यो
देवताइत्यादिसंकल्प्यप्रणीताभ्यःकृत्वा ॥वेधसेजुष्टन्निर्वपामीतिचरुंनिरूप्यप्रोक्ष्याग्निमुखांतंकृत्वापक्वाज्जुहोति ॥ ॐप्रवे
धसे ÷ यजेहेड्यों प्रवेधसे ÷ यजेहेड्यान्स्वाहा ॥ वेधसइदं॥अथपक्वावशिष्टमेक्षणेनगृहीत्वाहस्तेनैवजुहोति ॥ ॐप्रवे
धसे •॥• हेड्यान्स्वाहा ॥ वेधसइदं ॥ ॐयस्त्वाहृदा ÷ मर्त्यागुँस्वाहा ॥ जातवेदसेग्नयइदं ॥ यस्मैत्वं•॥•जातवेदसे
ग्नयइदं ॥ त्वसुपुत्र •॥• इंद्रायेदं ॥ अथस्विष्टकृतमवदायांतःपरिधौनिधायाथस्त्रुवाहुतीर्जुहोति ॥ ॐज्येष्ठायस्वाहा
॥ ज्येष्ठायेदं ॥ ॐश्रेष्ठायस्वाहा ॥ श्रेष्ठायेदं ॥ ॐप्रतिष्ठायस्वाहा ॥ प्रतिष्ठायेदं ॥ ॐ प्रतिष्ठित्यैस्वाहा ॥ प्रतिष्ठि
त्याइदं ॥ ॐगुँसंपत्त्यैस्वाहा ॥ संपत्त्याइदं ॥ ॐसंपतयेस्वाहा ॥ संपतयइदं ॥ ॐब्रह्मणेस्वाहा ॥ ब्रह्मणइदं ॥
ॐआयतनवतेस्वाहा ॥ आयतनवतइदं ॥ अथास्विष्टकृदादिकंकृत्वाथापरेणाग्निमुभौजायापतीउपविश्य ॥ ॐतत्सवि
तुर्वृणीमहइतिहविष्यमन्नमभिमंत्र्यगायत्र्याप्राश्नीयातामथापआचम्य ॥ यतइंद्रस्वस्तिदात्रिशस्पतिरितिद्वाभ्यांजठर
मभिमृश्यापउपस्पृश्योत्तरपरिषेकादिकंकृत्वा ॥ अनेनगर्भाधानकर्मणाश्रीपरमेश्वरःप्रीयतामितीश्वरार्पणंकुर्यात् ॥
एषुगर्भाधानादिकर्मसुप्रत्येकंशतब्राह्मणान्भोजयेदित्युक्तमाश्वलायनधर्मे ॥ विवाहेचोपनयनेगर्भाधानादिकेतथा ॥ अ
ग्न्याधानेशतंविप्रान्भोजयेद्दक्षिणान्वितान् ॥ इति ॥ अथर्तुसंवेशनं ॥कर्तासनप्राणायामौकृत्वाममास्यांभार्यायांजनिष्य

माणसर्वंगर्भसंस्कारार्थमृतुसंवेशनंकरिष्यइतिसंकल्प्य ॥ तदंगत्वेनममायुष्मत्सुगुणानेकसुपुत्रावाप्त्यर्थंवायनफलतांबू
लदानानिकरिष्यइतिसंकल्प्य ॥ ततोनवसंख्यावापंचसंख्यावासुवासिनीस्संपूज्य ॥ फलंमनोरथफलंप्रददातिसदान्
णां ॥ पुत्रपौत्राभिवृद्ध्यर्थमतःशांतिंप्रयच्छमे ॥ तांबूलंश्रीकरंभद्रंब्रह्मविष्णुशिवात्मकं॥तस्मादस्यप्रदानेनसमेविष्णुः
प्रसीदतु ॥ इतिद्वाभ्यांसुवासिनिभ्यःफलदानानिदत्वाथनानागोत्रेभ्योब्राह्मणेभ्योनमइति गंधाक्षतादिभिर्ब्राह्मणान्सं
पूज्य तेभ्यश्चफलतांबूलानिदत्वा ॥ अर्थतुसंवेशनसूक्तंरात्रावसंभवेइदानींवाकुर्यात् ॥ भार्याहस्तेफलतांबूलतंडुलैः पूर्ण
पात्रंदत्वा तांपश्यन्जपति ॥ ॐविष्णुर्योनिंकल्पयतुत्वष्टारूपाणिपिंशतु ॥ आसिंचतुप्रजापतिर्धातागर्भंदधातुते ॥ ग
र्भंधेहिसिनीवालिगर्भंधेहिसरस्वति ॥ गर्भंतेअश्विनावुभावाधत्तांपुष्करस्रजा ॥ हिरण्ययीअरणीयन्निर्मंथतोअश्विना ॥
तंतेगर्भंदधाम्यहंदशमेमासिसूतवे ॥ नेजमेषपरापतसुपुत्रः पुनरापत ॥ अस्यैमेपुत्रकामायैगर्भमाधेहियःपुमानिति ॥
अथैनामालिंग्यजपति ॥ अमूहमस्मि ॥ सात्वं ॥ द्यौरहं ॥ पृथिवीत्वं ॥ सामाहं ॥ ऋक्त्वं ॥ तावेहिसंभवाव॥
सहरेतोदधावहै ॥ पुंसेपुत्रायवेत्तवे ॥ रायस्पोषायसुप्रजास्त्वायसुवीर्यायेति ॥ अथात्मानंप्रत्यभिमृशते ॥ अहंगर्भ
मदधामोषधीष्वहंविश्वेषुभुवनेष्वंतः ॥ अहंप्रजाअजनयन्पितृणामहंजानिभ्योअपरीषुपुत्रानिति॥अथापउपस्पृश्याथैना
मुपगच्छति ॥ तांपूषंच्छिवतमामेरयस्वयस्यांबीजंमनुष्यावपंति ॥ यानऊरूउशतीविश्रयातेयस्यामुशंतः प्रहरामशे
पमिति ॥ एवमेवचतुर्थीप्रभृत्याषोडशीमुत्तरामुत्तरांयुग्मामुपैतीतिउत्तरोत्तरयुग्मातिथयः श्रेष्ठाइत्यर्थः॥ ततोद्विराचम्या

थास्यानाभिदेशस्थितमंगलवस्त्रमध्येसुवासिन्यः फलतांबूललड्डुकादिकंपूरयंति ॥ याःफलिनीर्याः ॥ पुष्पावतीः प्रसू
वतीःफलिनीरफलाउत ॥ अश्वाइवसाजिलरीर्वीरुधःपारयिष्णवइतिद्वाभ्यां ॥ यस्यस्मृत्येत्युक्त्वाआभ्यांगर्भाधानर्तुसंवे
शनकर्मभ्यांश्रीपरमेश्वरः प्रीयतां ॥ अथारार्तिकंकृत्वाब्राह्मणान्भोजयेत् ॥ इतिगर्भाधानर्तुसंवेशनप्रयोगः ॥ ७ ॥ अथवोक्त
दिनेऋतुसंवेशनमात्रंकृत्वातदनंतरंविज्ञातेगर्भेतृतीयेवामासिगर्भाधानहोमंकुर्यात् ॥ तृतीयेमासीतिपूर्वमेवोक्तं ॥ तस्मि
न्पक्षेयदिनिषेकानंतरंपतिर्विपद्यतेथवाप्रवासंगतःसंन्यस्तोवातदासंस्कारकर्तृनिर्णयः ॥ एषुगर्भाधानादिषुपतिस्संस्क
र्तातदभावेदेवरोगुरुर्गोत्रजावान्यगोत्रजावाबांधवाः पूर्वपूर्वाभावेतूत्तरोत्तरअधिकारिणः ॥ तथाचबह्वृचकारिकायां ॥ क
र्तास्यदेवरस्तस्ययस्याः पत्यावसंभवे ॥ ब्राह्मेपि ॥ गर्भाधानादिसंस्कर्तापिताश्रेष्ठतमःस्मृतः ॥ अभावेस्वकुलीनःस्या
द्बांधवोवान्यगोत्रजः ॥ सत्यव्रतः ॥ मृतोदेशांतरगतोभर्तास्त्रीयद्यसंस्कृता ॥ देवरोवागुरुर्वापिवंशजोवासमाचरेदि
ति ॥ इतिकर्तृनिर्णयः ॥ ७ ॥ अथौपासनाग्निनिर्णयः ॥ गर्भाधानादिजातकर्मांतेषुसमस्तौपासनाग्निः ॥ नामकरणादिचौलां
तेषुतदेकदेशाग्निः ॥ तस्मिन्प्रजासंस्कारइत्येकइतिसूत्रात् ॥ अनग्निकस्यसर्वाधानानिनचगर्भाधानादिचौलांतेषुसर्वत्र
लौकिकाग्निरेव ॥ केचित्तुसमानतंत्रप्रयोगेसाग्निकस्यसमस्तौपासनाग्निस्तदेकदेशोवेत्याहुः तच्चिंत्यं ॥ कुतः ॥ समस्तौ
पासनाग्नावितिवचनाभावात् ॥ तथाचसूत्रं ॥ यस्मिन्नग्नावुपनयतितस्मिन्ब्रह्मचर्यंतस्मिन्व्रतचर्यंतस्मिन्त्समावर्तनंतस्मि
न्पाणिग्रहणंतस्मिन्गृह्याणिकर्माणिक्रियंतेतस्मिन्काम्यानितस्मिन्प्रजासंस्कारइत्येकइति ॥ सायदिपुत्रप्रसूर्भवतिप्रासि

द्धमौपासनेजातकर्मकृत्वेतिच ॥ विष्णुभट्टोपि ॥ गर्भाधानादिजातकर्मांतेषुसंस्कारकर्मसुसएवौपासनाग्निस्समस्तोभ
वतीति ॥ एवमुत्पादितोग्निः ॥ प्रजासंस्कारेषुसमस्तोग्राह्योनैकदेशइतिच ॥ तथानामकरणादावुत्सृष्टसूतकाग्नेस्तुपितु
रौपासनैकदेशाग्निंप्रणवेनाहृत्यस्थंडिलेप्रतिष्ठाप्येत्यादि ॥ कुमारस्वामिकारिकायां ॥ गर्भाधानादिचौलांतकर्मतंत्रैक्य
मुच्यते ॥ औपासनैकदेशाग्नौगृह्यमात्रेत्वनग्निकइति ॥ गृहीसाग्निकः ॥ अमात्येलौकिकाग्नौ ॥ इत्यादिवचनपर्यालोच
नयागर्भाधानादिजातकर्मपर्यंतं समस्तौपासनाग्निः ॥ नामकरणादिचौलांतेष्वेकदेशाग्निः ॥ गर्भाधानादिचौलांतक
र्मसुसमानतंत्रेपितुरौपासनैकदेशाग्निरेव ॥ प्रजासंस्कारइतिसामान्यवचनानांजातकर्मांतेषुचरितार्थत्वात् ॥ कारिकादि
विरोधाच्चेत्यलं ॥ सर्वाधानिनस्तुकर्माणिकर्मण्येवैनंपुनःपुनरुसंस्कृत्याहरतीतिपरिभाषासूत्रेलौकिकाग्नेरेवस्मार्तकर्मार्थं
संस्कृत्याहरणमुक्तं ॥ अथयदिपितरिप्रवासंगतेयदन्यःकर्तातदातस्यैवौपासनाग्निंसद्यस्संधायतत्रैवगर्भाधनादिचौलां
तान्यपियथासंभवंवाकृत्वातमुत्सृजेत् ॥ अपवृत्तेकर्मणिलौकिकस्संपद्यतइतिन्यायात् ॥ अतोत्रनैकदेशः ॥ सन्यस्तेमृते
वापितरिलौकिकाग्निरेव ॥ चौलप्रकरणोक्तैकदेशाग्निविषयोप्यत्रैवयोज्यः ॥ इत्यग्निनिर्णयः ॥ ७ ॥ अथाग्निमुखादिसमानतं
त्रनिर्णयः ॥ तत्रायंक्रमः ॥ नांदीमुखाद्यग्निमुखांतंकालातिक्रमप्रायश्चित्तंचतंत्रेणकृत्वामिंदाहुतिपूर्वकंतत्तत्पक्वंहुत्वाप्रत्ये
कतत्तदुपहोमांश्चहुत्वाथस्विष्टकृदाद्युत्तरपरिषेकात्प्राक्प्रोक्तानितंत्रेणकुर्यात् ॥ विष्णुभट्टोपि ॥ अत्राग्निमुखांतंस्विष्टकृ
दाद्येकमेव ॥ मध्येप्रधानहोममतिपन्नंक्रियतइति ॥ प्रायश्चित्तसूत्रे ॥ सर्वेषांसमानमाचार्याब्रुवतेतत्रोदाहरंति ॥ प

क्कंसौविष्टकृतमाज्यंप्रणीताब्रह्मेध्माबर्हिरेकमितिविज्ञायतइतिहिब्राह्मणमिति ॥ प्रयोगसारे ॥ अत्रैतानितुतंत्रतः ॥
पक्वंस्विष्टकृदाद्यंचप्रणीताचेतिवैस्मृतिरिति ॥ कुमारस्वामिकारिकायामपि ॥ गर्भाधानादिचौलांतंकर्मतंत्रैक्यमुच्यते॥
निहितस्थंडिलेतत्रकर्मनामामुकादिकमिति ॥ इतिसमानतंत्रनिर्णयः ॥ अथपक्वप्रधानदेवताः ॥ वेधाप्रजापतिर्धातास
वितामृत्युरेवच ॥ नामनिष्क्रमणान्नाशेसविताश्रोत्रकेशिनः ॥ इतिगर्भाधानादिचौलांतंपक्वदेवताः॥अथपक्वहोमोपहोम
मंत्राः॥प्रधानादौप्रधानादौद्वेद्वेमिंदाहुतीस्स्मृते॥तत्तद्याज्यानुवाक्याभ्यांप्रधानचरुहोमकान्॥ गर्भंप्रवेधसेमंत्रःपूसंवतुप्र
जापते॥धातादददातुसमिंतेसावित्रींवैष्णवेबलौ ॥ हंरिर्गुंहरादिकंजातेतथानान्युपनिष्क्रमे॥अन्नाशयेचसावित्रीश्रोत्रादिःक
र्णवेधने॥अथयेकेशिनश्चौलेउपहोमाइमेक्रमात्॥ज्येष्ठाद्यष्टौचगर्भोअस्यौषधीनामितित्रयः॥धाताद्वादशवैविष्णोर्नुकंषट्स
द्यआदितः ॥ चत्वारः षड्ऋचःप्राजापत्यसूक्तंप्रजापते ॥ स्वस्तिनोष्टावहंचाष्टौप्राणोरक्षतिवैदश ॥ ततःषड्भ्यश्वहो
तव्यमारोहादियथाक्रमं इत्युपहोमाः ॥ स्विष्टकृदादिपरिषेकात्प्राग्बलिमौदुंबरेक्षिपेत् ॥ मंत्रानन्यान्यथाऋचीतिका
रिकावचनाद्गर्भाधानेहविःप्राशनादौद्वारलोपान्मंत्रमात्रमुक्त्वा ॥ गर्भाधानादिचौलांतमुपरिष्टात्तंत्रंक्रमेणकृत्वोत्तरपारि
षेकादिकंकुर्यात् ॥ प्रयोगसारे ॥ हुतशेषनिधानंचप्राशनंमूर्ध्निचाहुतिः॥ कुर्यात्कर्मसमाप्तेः प्राक्परिषेकंविसृज्यच ॥ हु
तशेषनिधानस्यप्राशनस्यनचेद्यजुः॥ व्याहृत्याद्यैस्त्रिभिः कुर्याद्वेदसाराहितेत्रयः ॥ व्याहृतिभिरनाम्नातेजुहुयादुपहो
मकान् ॥ संकल्पेनविनोद्देशत्यागेनचविनाहुतं ॥ समंत्रमपितत्कर्मनयथोक्तफलप्रदं ॥ इतिसर्वत्रज्ञेयं ॥ इतिप्रयो

गमालायांकर्त्रादिसमानतंत्रानिर्णयः ॥ ७ ॥ ७ ॥ अथमुख्यकालातिक्रमेगौणकालेक्रियमाणानांगर्भाधानादि
संस्काराणांसमानतंत्रमग्रेविवक्षुरिदानींतत्तत्कालक्रियमाणानां संस्काराणांतत्तत्प्रयोगज्ञानायभिन्नतंत्रेणतत्तत्कालनिर्ण
यपूर्वकंगर्भाधानादिप्रयोगोलिख्यते ॥ तत्रगर्भाधानंतुऋतुसंवेशनसाहचर्यात्प्रागेवोक्तं ॥ अथपुंसवनकालनिर्णयः ॥
विज्ञातेगर्भेद्वितीयेतृतीयेवामासितिष्येनक्षत्रेन्यस्मिन्वापुन्नक्षत्रेपुंसवनकालः ॥ अत्रजातूकर्ण्यः ॥ द्वितीयेवातृतीयेवामा
सिपुंसवनंभवेत् ॥ व्यक्तेगर्भेभवेत्कार्यंसीमंतेनसहाथवेति ॥ प्रथमप्रसूतायास्तुगर्भाच्चतुर्थेषष्ठेष्टमेवामासि ॥ तथाच
स्मृतिः ॥ तृतीयेमासिकर्तव्यंगृष्टेरन्यत्रशोभनं ॥ गृष्टेश्चतुर्थेमासेतुषष्ठेमास्यथवाष्टमइति ॥ श्रीधरीये ॥ कुर्यात्पुंसवनं
प्रसिद्धविषयेगर्भेतृतीयेथवामासिस्फीततनौतुषारकिरणेपुष्ट्येथवावैष्णवे ॥ हित्वाकर्कटकंनृयुग्ममबलामन्येष्वरिक्तेति
थौशुद्धेनैधनधाम्निशुक्रशशभृद्विन्मंत्रिणांवासरे ॥ गृष्टिरित्युक्ते ॥सकृत्प्रसूतागृष्टिःस्यादित्युक्तत्वात्प्रथमगर्भायाइत्यर्थः ॥
पारिजाते ॥ प्रथमंपुंसवंकुर्यात्सार्धंसीमंतकर्मणा॥ सीमंतोन्नयनस्योक्तमासवारर्क्षराशिष्वेति ॥ वराहः ॥ हस्तोमूलंश्रवणं
पुनर्वसुमृगशीरस्तुतथापुष्यः ॥ पुंसंज्ञकेषुकार्येष्वेतानिशुभानिधिष्ण्यानि ॥ नृसिंहः ॥ अपिपुंसवनंकार्यंदंपत्योरनु
कूलभे॥जन्मादिवर्जयेद्द्वात्रिंशांशकंविपदादिषु ॥ इतिगर्भात्तृतीयेचतुर्थेषष्ठेष्टमेवामासिशुक्लपक्षशुक्लपंचम्यादिकृष्णपंच
मीपर्यंतेषुच्छिद्रपर्ववर्जितेषुतिथिषुशुभवारेषुहस्तमूलश्रवणपुनर्वसूमृगशिरपुष्येषुमिथुनकर्कटकन्यावर्जितेषुराशिषुपुंसव
नंकुर्यात् ॥ अथप्रयोगः ॥ कर्ताप्रातर्मंगलस्नानादिनित्यकर्मकृत्वावैश्वदेवंहुत्वापुण्याहपूर्वकंनांदीश्राद्धंकृत्वापत्नःकर्मा

गपुण्याहंवाचयित्वाप्रजापतिःप्रीयतामितिविशेषः ॥ स्थंडिलोल्लेखनाद्यौपासनाग्निप्रतिष्ठापनांतंकृत्वाप्राणानायम्यदेश
कालौसंकीर्त्यममभार्यायाःगर्भस्यपुंरूपत्वद्विजत्वादिज्ञानोदयासिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंपुंसवनाख्यंकर्मकरिष्ये ॥
पुंसवनहोमः कर्माधारवत्तंत्रमित्यादिचंद्रमानामाग्निः प्रजापतिर्देवताचरुर्हविरग्निःस्विष्टकृदित्यादिसंकल्प्याग्निमुखांतंकृ
त्वापकाज्जुहोति॥ॐप्रजापतेतनुवम्मे ÷ स्यामों प्रजापतेतनुवंमे ÷ स्यामस्वाहा ॥ प्रजापतयइदं॥ अथस्विष्टकृतमव
दायांतः परिधौनिधायाथाज्याहुतीरुपजुहोति ॥ ॐगर्भोअस्योषधीनां ॥ अग्नयेगर्भायेदं॥ ॐप्रसद्यभस्म ॥ ॐपु
नरासद्यसदनं॥ पूर्ववदुद्देशत्यागः ॥ अथस्विष्टकृदादिवरदानांतंकृत्वाज्यशेषंपत्न्यामुखेप्रश्च्योतयति ॥ अस्मेदेवासइ
तिचतसृभिः प्रत्यृचंप्राश्योत्तरपरिषेकादिकंकुर्यात् ॥ अतः परंपत्नीबहुसर्पिष्कमन्नंभुंजीत ॥ इतिपुंसवनप्रयोगः॥ ७ ॥
अथसीमंतोन्नयनं ॥ चतुर्थमासादारभ्याप्रसवात्तदुक्तनक्षत्राद्यान्वितशुभेदिनेसीमंतोन्नयनकालः ॥ शुक्लपक्षेचतुर्थीषष्ठ्य
ष्टमीनवमीद्वादशीचतुर्दश्यमावास्याश्चवर्जयित्वा शुभवारेषुपुष्यहस्तपुनर्वसूश्रवणमृगशिरोरेवतीरोहिण्युत्तरात्रयमूलन
क्षत्रेषुसिंहवृश्चिकवर्जितान्यदशराशिषु सीमंतंकुर्यात्॥तथाचशंखः॥गर्भालंबनमारभ्ययावन्नप्रसवस्तदा॥सीमंतोन्नयनं
कुर्याच्छंखस्यवचनंयथेति॥प्रथमगर्भायास्तुचतुर्थेमास्येव॥तथाचसूत्रं॥प्रथमगर्भायाश्चतुर्थेमासिसीमंतोन्नयनमिति ॥अ
त्रबार्हस्पत्येसौरमासउक्तः ॥ सौरेणैवचतुर्थेस्यान्मासेषष्ठेयाष्टमेपिवा ॥ मासप्रोक्ताः क्रियायाः स्युस्तास्सर्वाः सौरमा
सतः ॥ वसिष्ठस्तु ॥ चतुर्थेसावनेमासिषष्ठेवाप्यथवाष्टमेइति ॥ कारिकायां ॥ पुंनक्षत्रेसितपक्षेत्वन्वाधानादिपूर्ववत्॥

ॐधाताददातुनो ⁑ वावनों धाताप्रजाया ⁑ विधेमस्वाहा॥धात्रइदं ॥अथस्विष्टकृतमवदायांतःपरिधौनिधायाथाज्याहु
तीरुपजुहोति॥ॐधाताददातुनो॰॥॰रयिंप्राचीं॰॥॰धात्रइदं॥१॥ॐधाताददातुदाशुषे॰॥॰धात्रइदं ॥२॥ॐअनुनोद्यानुमतिः
⁑ अनुमत्याइदंॐअन्विदनुमतेत्वंमन्यासै॰॥॰अनुमत्याइदं ॥४॥ॐअनुमन्यतामनु॰॥॰अनुमत्यैदेव्याइदं॥५॥यस्यामि
दं⁑अनुमत्यैदेव्याइदं॥ ६ ॥ ॐराकामहं ॰॥॰ राकायाइदं ॥ ७ ॥ ॐयास्तेराके ॰॥॰ राकायाइदं ॥ ८॥ॐगुंसिनीवा
ली ॰॥॰ सिनीवाल्याइदं ॥ ९ ॥ ॐयासुपाणिः॥ सिनीवाल्याइदं ॥ १० ॥ॐकुहूमहं ॥ कुव्हैदेव्याइदं ॥ ११ ॥ ॐकु
हूर्देवानां ॰॥॰ कुव्हाअमृतस्यपत्न्याइदं ॥ १२ ॥ इतिद्वादशस्रुवाहुतीर्हुत्वास्विष्टकृदादिवरदानांतंकृत्वाथास्यास्त्र्येण्या
शलल्यादर्भैरुदुंबरप्रसूनैर्यवप्रसूनैरिरितिकेशान्विभजन्त्सीमंतमुन्नयंतीतिसूत्रं ॥ अस्यार्थः ॥ त्र्येण्यात्रीणिएतानिवर्णानि
यस्याःसात्र्येणीतया ॥ ( शलल्यावराहसूचीमुखरोम्णावर्णत्रययुक्तवराहरोम्णेत्यर्थः ) ॥ चित्रंकिर्मीरकल्माषशबलैता
श्चकर्बुरेइत्यमरः ॥ तयादर्भैरुदंबरपुष्पस्तबकैर्यवपुष्पैश्चतस्याः केशान्विभजन्त्सीमंतमूर्ध्वमुन्नयति ॥ राकामहंयास्ते
राकइतिद्वाभ्यामथतस्याः कंठेयवपुष्पमालिकांप्रतिमुंचति ॥ यवोसियवयास्मद्द्वेषोयवयारातीरिति ॥ अथवीणागाथि
नौवीणयागायेतामितिब्रूयात् ॥ ततस्तौवीणागाथिनौवीणयागाथामेतांगायतः ॥ सोमएवनोराजेत्याहुर्ब्राह्मणीः ॥प्रजा
विवृत्तचक्रआसीनास्तीरेणगंगेतवेति॥यस्यानद्यास्समीपेवसतितस्यानामसौपदस्थानेसंबुध्यंतेनानिर्देश्यं॥ सीतेतव॥का
वेरीतवेत्यादि॥इतिसीमंतप्रयोगः॥ ५ ॥ अथविष्णुबलिः॥अत्रसूत्रं॥विष्णवेबलिरष्टमेमासिपूर्वपक्षस्यसप्तम्यामष्टम्यां

दशम्यांद्वादश्यांरोहिण्यांश्रोणायांवेति ॥ अतोष्टमेमासिशुक्लपक्षेद्वितीयासप्तम्यष्टमीदशमीद्वादशीषुशुभवारेषुरोहिणीपु
नर्वसूपुष्यहस्तस्वातीमूलोत्तराषाढाश्रवणरेवतीषुचंद्रतारानुकूलेविष्णुबलिंकुर्यात् ॥ कालविधाने ॥ रोहिण्यांवावैष्णवे
पूर्वपक्षेद्वादश्यांवासप्तमेवातिथौच॥मध्येवान्हः पूर्वभागेनरात्रौविष्णोःपूजांकारयेद्गर्भपुष्ट्यै ॥ श्रवणेचैवरोहिण्यांपुष्येचैव
प्रशस्यते ॥ द्वितीयासप्तमीचैवद्वादशीचशुभातिथिः ॥ शुभग्रहोदयाः श्रेष्ठास्तेषांचदिवसाअपि ॥ आश्वलायनः ॥ वर्जे
येत्सर्वकर्माणिविपत्प्रत्यरनैधनैः॥ चंद्राष्टमेनयत्नेनवधनाशव्ययैस्तथा ॥ अनभीष्टोयदिभवेत्तिष्येणश्रवणेनवा॥ सावित्र
नैर्ऋतादित्यैर्वैश्वदेवेनवाद्विजैः॥ एतैर्ऋक्षैश्वसीमंतोबलिश्चापिविधीयते ॥ प्राजापत्यमरुत्पौष्णाधिष्ण्यैर्वापित्वसंभवे ॥ इ
तिकालनिर्णयः॥ ७ ॥अथप्रयोगः॥कर्ताप्रातस्नानादिवैश्वदेवांतंनित्यकर्मकृत्वानांदीश्राद्धंकृत्वाथविष्णुबल्याख्यकर्मंकर्तुं
स्वस्तिपुण्याहवाचनंकरिष्येइतिसंकल्प्य॥सवितृविष्णुप्रीयतामितिविशेषः॥एवंपुण्याहंवाचयित्वास्थंडिलोल्लेखनाद्यौपा
सनाग्निंप्रतिष्ठाप्याचम्यप्राणानायम्यदेशकालौसंकीर्त्यममभार्यायाबीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुःश्रीबलवृद्धि
द्वाराश्रीपरमेश्वरप्रीत्यर्थंगर्भपुष्टिरक्षार्थंविष्णुबलिहोमंकरिष्ये ॥ तत्रशोभनोनामाग्निस्सवितादेवताचरुहैविराज्यहोमेवि
ष्णुर्देवताअग्निः स्विष्टकृदाज्यस्यमांत्रवर्णिक्योदेवताइत्यादिसंकल्प्यान्वाधानाद्याप्रणीताभ्यांकृत्वोपोत्थायाग्रेणाग्निंतंडु
लैस्थंडिलंकृत्वाविष्णुप्रतिमांविन्यस्याथवाविलिख्यास्यगर्भस्यरक्षार्थंपुष्ट्यर्थमायुःश्रीबलवृद्ध्यर्थंचविष्णुपूजांकरिष्ये ॥
गंधपुष्पोदकानिगृहीत्वा ॥ ॐभूः पुरुषमावाहयामि॥ ॐभुवः पुरुषमावाहयामि ॥ ॐस्सुवः पुरुषमावाहयामि ॥ ॐभू

र्भुवःसुवःपुरुषमावाहयामीत्यावाह्य ॥ स्वागतमित्युक्त्वाभगवतोमहापुरुषस्यैतदासनमुपक्लृप्तमत्रास्तांभगवन्महापुरुष
इतिकूर्चंदत्वातंजुषस्वेत्युक्त्वा ॥ ततोगायत्र्याभिमंत्रितेसपवित्रेपात्रेप्आनीयगंधपुष्पाक्षतान्निक्षिप्य ॥ त्रीणिपदावि
चक्रमेविष्णुर्गोपाअदाभ्यः ॥ अतोधर्माणिधारयन् ॥ इतिपाद्यंदत्वाओमित्यर्घ्यंदत्वाथसवित्रेजुष्टंनिर्वपामीतिचरुंनिरू
प्यप्रोक्षणाद्यग्निमुखांतंकृत्वादैवतमर्चयति ॥ आपोहिष्ठेतितिसृभिर्हिरण्यवर्णाइतिचतसृभिः पवमानस्सुवर्जनइत्येतेनानु
वाकेनमार्जयित्वाथाद्भिस्तर्पयति ॥ केशवंतर्पयामि ॥नारायणंतर्पयामीत्यादिभिर्द्वादशनामभिस्तर्पयित्वा॥ एतैरेवनामधे
येर्गंधपुष्पाक्षतधूपदीपैः क्रमेणवक्ष्यमाणमंत्रैस्सहाभ्यर्चयति ॥ यथा ॥ इदंविष्णुः ॥ केशवनारायणमाधवगोविंदवि
ष्णुमधुसूदनत्रिविक्रमवामनश्रीधरहृषीकेशपद्मनाभदामोदरेभ्योनमः ॥ गंधान्समर्पयामि ॥ इरावतीधेनुमतीहिभूत
गुँसूयवसिनीमनुषेदशस्ये ॥ व्यस्कभ्नाद्रोदसीविष्णुरेतेदाधारपृथिवीमभितोमयूखैः ॥ केशवादिदामोदरांतेभ्योनमः
॥ १२ ॥ अक्षतान् ॥ तद्विष्णोःपरमं ॥ केशवनारायणदामोदरेभ्योनमः ॥ पुष्पाणि ॥ तत्सवितुः ॥ केशवादिदा
मोदरांतेभ्योनमः ॥ धूपमाघ्रापयामि ॥ उद्दीप्यस्वजातवेदोपघ्नंनिर्ऋतिंमम ॥ पशूगुँश्चमह्यमावहजीवनंचादिशोदश ॥
केशवादि ॥ १२ ॥ दीपंदर्शयामि ॥ इतिपंचोपचारान्कृत्वागायत्र्यापक्वंहुत्वास्विष्टकृतमवदायांतः परिधौनिधाय ॥ वि
ष्णोर्नुकं ॥ तदस्यप्रियं ॥ प्रतद्विष्णुः ॥ परोमात्रया ॥ विचक्रमे ॥ त्रिर्देवइतिषड्भिरुपहुत्य ॥ सर्वत्रविष्ण
वइदं ॥ अथस्विष्टकृदादिवरदानांतंकृत्वासुघृतमिश्रगुडपायसगुँहविर्निवेद्य ॥ अथान्नेन ॥ केशवायस्वाहा ॥ नारायणा

यस्वाहा ॥ दामोदरायस्वाहेतिद्वादशनामभिस्वाहांतैर्बलिंदत्वा ॥ त्रीणिपदाविचक्रमे ॥ इदंविष्णुर्विचक्रमे ॥ इत्या
दिभिः स्तुत्वा॥ ॐभूःपुरुषमुद्वासयामीत्यादिभिरुद्वास्यान्नशेषंपत्नींप्राशयेत् ॥अनेनविष्णुबलिकर्मणाश्रीपरमेश्वरः प्री
यतामित्युक्त्वाब्राह्मणान्भोजयेत् ॥ इतिविष्णुबलिप्रयोगः ॥ ५ ॥ ॥ अथजातकर्म ॥पुत्रजन्मानंतरंनालच्छेदात्प्रा
ग्जातकर्मकालः॥तत्रमनुः॥प्राङ्नाभिवर्धनात्पुंसोजातकर्मविधीयतइति ॥वर्धनंछेदनं॥बीजवापः ॥ जन्मनोनंतरंकार्यंजा
तकर्मयथाविधि॥दैवादतीतकालश्चेदतीतेसूतकेभवेदिति ॥आचार्योपि॥प्राङ्नाभिकर्तनात्पुंसोजातकर्मक्रियाद्विजैः॥स्ना
त्वासचैलंसंशुद्धैस्सितगंधादिभूषितैः ॥ गर्गः ॥ जातमात्रकुमारस्यजातकर्मविधीयते ॥ स्तनप्राशनतः पूर्वंनाभिकर्तन
तोपिच ॥ एष्वतीतेषुकालेषुशुभयोगेशुभोदये ॥ जातकर्मक्रियांकुर्यात्पुष्ट्यायुःपरिवृद्धये ॥ जैमिनिः ॥ यावन्नच्छिद्यते
नालंतावन्नाप्नोतिसूतकं ॥ छिन्नेनालेततःपश्चात्सूतकंतुविधीयते ॥ अच्छिन्ननाभिकर्तव्यंश्राद्धंवैपुत्रजन्मनि ॥ आशौ
चापगमेकार्यमथवानियतात्मभिः ॥ द्रव्याभावेद्विजाभावेप्रवासेपुत्रजन्मनि ॥ हेमःश्राद्धंप्रकुर्वीतयस्यभार्यारजस्वला॥
वसिष्ठः ॥ श्रुत्वाजातंपितापुत्रंसचैलःस्नानमाचरेत् ॥ उत्तराभिमुखोभूत्वानद्यांवादेवखातकइति ॥ अथस्त्रीणांगर्भाधा
नादिविष्णुबल्यंतंस्त्रीपुंसोःकर्मसमानं ॥ समंत्रकमेवेत्यर्थः ॥ जातकर्मादिचौलांतंस्त्रीणाममंत्रकं विवाहस्तुसमंत्रकः ॥
अथप्रयोगः ॥ पुत्रेजातेपितानद्यादावुत्तराभिमुखःस्नात्वावस्त्रादिकंधृत्वाहिरण्येननांदीश्राद्धंकृत्वापुण्याहवाचनेमृत्युःप्री
यतामितिविशेषः ॥ पुनःप्राणानायम्यदेशकालौसंकीर्त्यममकुमारस्यबीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुःश्रीबल

वृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंजातकर्माख्यंकरिष्ये इतिसंकल्प्याथकुमारंस्पृष्ट्वपश्यन्जपति ॥ अद्भ्यस्संभूतःपृथिव्यैरसाच्चे त्येतमनुवाकमथैनमाद्भिःप्रोक्षति ॥ क्षेत्रियैत्वानिर्ऋत्यैत्वेतिषड्भिरथैनंस्वांकउपवेशयति ॥ अंगादंगात्संभवसीत्यथकु मारस्यमूर्ध्न्यभिजिघ्रति ॥ अश्माभवेति ॥ अत्रासौपदस्थानेनक्षत्रनामधेयंसंबुद्ध्यंतेननिर्देश्यं॥ यथा ॥ब्रह्मणाभिजिघ्रा म्याश्विन ॥ एवमापभरण ॥ कार्तिककृत्तिकेपिवा ॥ रौहिण॥ मृगशीर्ष ॥ आर्द्रक ॥ पुनर्वसो ॥ तिष्य ॥ आश्लेष ॥ मघ ॥ पूर्वाफल्गुन ॥ उत्तराफल्गुन ॥ हस्त ॥ चैत्र॥स्वाते ॥ विशाख॥ अनूराध ॥ ज्येष्ठ॥ मूलक ॥ पूर्वाषाढ॥ उत्त राषाढ॥ श्रावण ॥श्रविष्ठ ॥ शातभिषज॥ पूर्वाप्रोष्ठपद॥ उत्तराप्रोष्ठपद ॥ रैवत ॥ इतिपुंसां ॥ अथस्त्रीणां ॥आश्विने॥ आपभरणे ॥ कार्तिके कृत्तिकेइतिवा ॥ रोहिणि ॥ मार्गशीर्षे ॥ आर्द्रके॥पुनर्वसो॥तिष्ये ॥ आश्लेषे॥मघे॥पूर्वाफल्गुने ॥ ॥ उत्तराफल्गुने॥हस्ते ॥ चित्रे॥स्वाते ॥ विशाखे ॥ अनूराधे ॥ ज्येष्ठे ॥ मूलके ॥ पूर्वाषाढे ॥ उत्तराषाढे॥ श्रावणे ॥ श्रविष्ठे ॥ शाताभिषजे ॥ पूर्वाप्रोष्ठपदे ॥ उत्तराप्रोष्ठपदे ॥ रैवते ॥ इतिसंबुध्यंतमुक्त्वाथास्यदक्षिणेकर्णेजपति ॥ अग्नि रायुष्मानितिपंच ॥ अथवामकर्णे॥आयुषेविश्वतोदधत् ॥ इतिजपित्वादधिमधुघृतमितिसमुदायुत्याहिरण्येनकुमारंप्राश यति ॥ प्राणोरक्षति॰॥॰योदेवः ॰॥॰ मनसः॰॥॰अनत्येतु ॰॥॰जुषतां ॰॥॰ययारूपाणि ॰॥॰ चक्षुर्देवानां ॰॥॰ आयुरिन्नः ॰॥॰ श्रोत्रेणभद्रं ॰॥॰येनप्राच्या ॰॥॰ ॥ १० ॥ इतिदशभिर्दशवारंप्राश्यावशिष्टंव्याहृतिभिर्गोष्पदेनिनयति ॥ ( गोःपादेगोष्ठे वानिनयतीत्यर्थः ) अथैनंमातुरंकेस्थापयति ॥ सीदत्वंमातुः ॰॥॰अंतरग्ने ॰॥॰शिवोभूत्वा ॰॥॰ हंसःशुचिषत् ॰॥॰ इति

चतसृभिरथस्तनमभिमंत्रयते ॥ यस्तेस्तनइति ॥ स्तन्यंपिबंतमनुमंत्रयते ॥ द्यौस्तेपृष्ठमित्यथोदकुंभंशीर्षोपरिशिक्या
दौनिदधाति ॥ आपस्सुप्तेष्विति ॥ अथस्थंडिलोल्लेखनादिसमस्तौपासनाग्निंप्रतिष्ठाप्यप्राणानायम्यदेशकालौसंकी
र्त्यममकुमारस्यायुरभिवृद्ध्यर्थंजातकर्महोमंकरिष्यइतिसंकल्प्य ॥ तत्रप्रबलोनामाग्निर्मृत्युर्देवताचर्वाज्येहविषीत्याद्य
ग्निमुखांतंकृत्वापक्वाज्जुहोति ॥ ॐगुँहरिगुँहरंतं ॥ विक्रमस्वो माछिदोमृत्यो॥विधेमस्वाहा॥मृत्यवइदं॥अथस्विष्टकृत
मवदायांतःपरिधौनिधाय ॥ ॐ सद्यश्चकमानाय ॥ कामेनमे ॥ परंमृत्यो ॥ प्रपूर्व्यं ॥ प्रथमजामृतस्यस्वाहा
॥ सर्वत्रमृत्यवइदं ॥ इतिचतसृभिरुपहुत्य ॥ स्विष्टकृदादिवरदानांतंकृत्वा ॥ आनयुगंरथयुगंवा ॥ युगन्नामअनसो
रथस्यवाचक्रच्छिद्रगतदारुद्वयोरुपरिस्थापितदारुविशेषः ॥ तंस्नाप्यवस्त्रेणाच्छाद्यतदग्नेःपूर्वभागेसंस्थाप्यतस्याग्रेश्व
त्थपर्णेषुहुतशेषंनिदधाति ॥ नमआव्याधिनीभ्योविविध्यंतीभ्यश्चवोनमइति ॥ अथदशमेहनितंयुगमुत्थापयति ॥ब्रह्म
जज्ञानमित्युदकुंभमुत्थापयति॥ ॐभूर्भुवस्सुवरिति॥क्षौरविषये॥द्वेभार्येगर्भिणीस्यातामेकाभार्याप्रसूतिका ॥ वपनंनच
कुर्वीतनामकर्मादिकारयेदितिस्मृतेः॥ गर्भिणीभार्याद्वयेक्षौरनिषेधः॥ इतिजातकर्मप्रयोगः ॥ ७ ॥ ॥ अथनामकर
णं॥नचैकादशेद्वादशेषोडशेष्टादशेविंशेद्वाविंशेवादिनेमासिशताहेवाव्यतीपातवैधृतिछिद्रतिथिपर्वपापवारचरराशींश्चवर्जे
यित्वाश्विनीरोहिणीमृगशिरःपुनर्वसुपुष्यमघोत्तरात्रयहस्तस्वात्यनूराधमूलश्रवणधनिष्ठाशततारेवतीषूपनिष्क्रमणा द
र्वागन्यस्मिन्वाशुभेदिनेनामकरणंकुर्यात् ॥ तत्रसूत्रं ॥ दशम्यांद्वादश्यांवानामकरणमिति ॥(दशम्यामतीतायामित्य

र्थः)॥ अथवोपनिष्क्रमणात्पूर्वंशुभतिथिवारनक्षत्राद्यन्वितदिनेआचतुर्थमासान्नामकरणस्यमुख्यः कालः ॥ तदूर्ध्वंगौणः
तत्रबोधायनस्मृतिः ॥ नामधेयंदशम्यांतुद्वादश्यांवास्यकारयेत् ॥ पुण्येतिथौमुहूर्तेवानक्षत्रेवागुणान्वितइति ॥ वसि
ष्ठः ॥ दशमेद्वादशेवान्हिनामकर्मविधीयते ॥ ततः परंविधानोक्तवारनक्षत्रराशिषु॥ गर्गः ॥ व्यतीपातेचसंक्रांतौग्रहणे
वैधृतावपि ॥ श्राद्धंविनाशुभंनैवप्राप्तकालेपिमानवः ॥ अन्यच्च ॥ अमासंक्रांतिविष्ट्यादौप्राप्तकालेपिनाचरेदिति ॥ सं
ग्रहे ॥ अष्टादशाहेविगतेदशाहेस्याद्द्वादशाहेप्यथमासिवर्षे ॥ चंद्रानुकूलेसुदिनेशताहेपुत्रस्यकुर्यादथनामकर्म ॥ भार
ते ॥ द्वादशेषोडशेविंशेद्वाविंशेक्रमतोदिने ॥ नामकार्यंद्विजातीनांविप्रस्यदशमेपिवा ॥ राशयश्चस्थिराःश्रेष्ठाःद्विस्वभावाः
शुभैर्युताः ॥ श्रेष्ठानेष्टास्तथाशेषायद्यप्युक्तशुभैर्युताः ॥ कालविधाने ॥ मित्रादित्यमघोत्तराशतभिषक्स्वातीधनिष्ठाच्यु
तप्राजेशाश्विशशांकपौष्णदिनकृत्पुष्येषुराशौस्थिरे ॥ छिद्रांपंचदशींविहायनवमींशुद्धेष्टमेभार्गवज्ञाचार्यामृतपादभागदि
वसेनामानिकुर्याच्छिशोः ॥ आदित्यः पुनर्वसुः ॥ युग्माश्चतिथयःशस्ताअजधर्मतिथींविना ॥ पक्षच्छिद्राइतिज्ञेयास्सर्वे
कर्मसुगर्हिताः ॥ अजोद्वितीया ॥ धर्मोदशमी ॥ द्वितीयादशम्यौविनासर्वायुग्मतिथयः पक्षच्छिद्राइत्यन्वयः॥ युग्मति
थयश्चनामकर्मणिशस्ताइति ॥ युग्मास्तिथयः ॥ दशमद्वादशादिदिवसाः॥नतुचतुर्थीषष्ठ्यादितिथयः ॥ गर्गः ॥ मास
नामगुरोर्नामदद्याद्बालस्यवैपिता ॥ अथमासनामानि ॥ कृष्णोनंतोच्युतःचक्रीवैकुंठोथजनार्दनः ॥ उपेंद्रयज्ञपुरुषोवा
सुदेवस्तथाहरिः ॥ योगीशःपुंडरीकाक्षोमासनामान्यनुक्रमात् ॥ तन्मासनामप्रथमंदद्यात्संबोध्यचैवहि ॥ चैत्रादिगण

येदितिशेषः ॥ शर्मेतिब्राह्मणस्योक्तंवर्मेतिक्षत्रियस्यतु ॥ गुप्तदासात्मकंनामप्रशस्तंवैश्यशूद्रयोः ॥ इतिव्यासोक्तेः ॥
कारिकायां ॥ पूंसांयुग्माक्षराणिस्युर्विपरीतानियोषितामिति ॥ सूत्रेपि ॥ घोषवदाद्यंतरंतस्थंदीर्घाभिनिष्ठानांतमपिवाय
स्मिंस्विद्रुपसर्गःस्यादिति ॥ वर्गाणांप्रथमद्वितीयाशषसाअघोषाः ॥ अन्येघोषाः ॥ घोषाक्षरमादौयस्यतत्तथोक्तं॥अंत
रमध्येअंतस्थायस्यतत्तथोक्तं ॥ यरलवाअंतस्थाः ॥ अभिनिष्ठानोविसर्गः॥ सोंतेयस्यतत्तथोक्तं ॥ एतल्लक्षणयुक्तंदेवताना
मऋषिनामवास्वपूर्वपुरुषनामवादद्यात् ॥ यथा ॥ हरिशर्माः ॥ नारायणशर्माः॥ इत्यादिद्रष्टव्यं ॥ इतिनामकालनिर्ण
यः ॥ अथनामकरणप्रयोगः ॥ कर्ताप्रातर्मंगलस्नानादिनित्यकर्मकृत्वावैश्वदेवंहुत्वानांदीश्राद्धंकृत्वापुण्याहंवाचयेत् ॥
सविताप्रीयतामितिविशेषः ॥ पुनःप्राणानायम्यदेशकालौसंकीर्त्यममकुमारस्यबीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमा
युःश्रीबलवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंव्यावहारिकसिद्ध्यर्थंनामकरणाख्यंकर्मकरिष्यइतिकंकल्प्य ॥ स्थंडिलोल्लेखना
द्यौपासनैकदेशाग्निंप्रतिष्ठाप्यप्राणानायम्यनामकरणहोमंकरिष्ये ॥ नामकरणहोमःकर्माधारवत्तंत्रमित्यादिपार्थिवोना
माग्निस्सवितादेवताचरुर्हविराज्यहोमेप्रजापतिर्देवताग्निःस्विष्टकृदित्यादिसंकल्प्यान्वाधानाद्यग्निमुखांतंकृत्वापक्वाज्जुहो
ति ॥ ॐभूर्भुवस्सुवरोमितिपुरोनुवाक्यामनूच्य तत्सवितुरितियाज्ययाहुत्वास्विष्टकृतमवदायांतःपरिधौनिधायाथाज्या
हुतीरूपजुहोति ॥ ॐप्रजापतेनत्वदेतान्यन्यः *॥* रयीणांपतिं *॥* प्रजापतेत्वं *॥* तवेमेलोकाः *॥* प्रजापतिंप्रथमं
*॥* योरायईशे *॥* सर्वत्रप्रजापतयइदं ॥ इतिषड्भिर्हुत्वास्विष्टकृदादिवरदानांतंकृत्वाग्रेणाग्निमश्वत्थपर्णेषु ॥ ॐभूर्भु

वस्सुवरितिहुतशेषंनिधायाथस्वर्णादिपात्रतंडुलान्पूरयित्वातत्रसुवर्णेनहरिद्राखंडेनवा कुलदेवतानाममासनामनक्षत्रना
मव्यावहारिकनामानीतिक्रमेणनामचतुष्टयंलिखेत् ॥ यथा ॥ कुलदेवतानामगणपतिभक्तइति॥मासनाम ॥ कृष्णः ॥अनं
तः ॥ अच्युतः॥चक्रिः॥वैकुंठः॥जनार्दनः॥उपेंद्रः॥यज्ञपुरुषः ॥ वासुदेवः॥हरिः ॥ योगीशः ॥ पुंडरीकाक्षः ॥ इतिद्वादशना
मानिचैत्रादिगणयित्वातत्तन्मासप्राप्तंनामलिखेत् ॥ अथनक्षत्रनाम॥आश्विनः॥आपभरणः॥कार्तिकः॥कृत्तिकइतिवा ॥रौ
हिणः॥मार्गशीर्षः॥आर्द्रकः॥पुनर्वसुः॥ तिष्यः॥आश्लेषः॥माघः ॥पूर्वाफल्गुनः ॥उत्तराफल्गुनः ॥हस्तः॥चैत्रः॥स्वातिः ॥
विशाखः॥अनूराधः॥ज्येष्ठः॥मूलकः॥पूर्वाषाढः॥उत्तराषाढः॥श्रवणः॥श्रविष्ठः॥शातभिषजः ॥ पूर्वाप्रोष्ठपदः ॥ उत्तराप्रोष्ठ
पदः ॥ रैवतः ॥ इतितत्तन्नक्षत्रनामविलिख्य ॥ व्यावहारिकनाम॥ हरिशर्मा नारायणशर्मा ॥इत्यादि ॥ इतिनामचतुष्टयंवि
लिख्य ॥ कुलदेवतामासनक्षत्रव्यावहारिकनामदेवताभ्योनमइतिषोडशोपचारान्कृत्वापुष्पांजलिंदत्वाममकुमारस्यव्या
वहारिकसिद्ध्यर्थमायुःश्रीबलवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंनामाभिधास्यावहे ॥ इतिपितरौसंकल्पयेतां ॥ अथब्राह्मणा
न्हिरण्यादिनातोषयित्वाअस्यनामकरणकर्मणःपुंण्याहंस्वस्तिऋद्धिंभवंतोब्रुवंत्वितिवाचयित्वाथकर्ताकुलदेवतानाम्नागण
पतिभक्तायस्वास्तिभवंतोब्रुवंतु ॥ गणपतिभक्तायस्वस्तीतिप्रतिवचनं ॥ मासनाम्नाकृष्णायस्वास्तिभवंतोब्रुवंतु ॥ कृष्णाय
स्वस्तीतिप्रतिवचनं ॥ एवमनंतायअच्युताय ॥ चक्रिणे ॥ वैकुंठाय ॥ जनार्दनाय ॥ उपेंद्राय ॥ यज्ञपुरुषाय ॥वासुदेवाय॥
हरये ॥ योगीशाय ॥ पुंडरीकाक्षाय ॥ स्वस्तीतिप्रतिवचनं ॥ नक्षत्रनाम्ना ॥ आश्विनायस्वास्तिभवंतोब्रुवंतु ॥ पुनर्वसवे

॥ स्वातये ॥ प्रौष्ठपदाय ॥रैवताय ॥ स्वस्तिभवंतोब्रुवंतु ॥ शेषाणिसुगमानि ॥ व्यावहारिकनाम्ना ॥हरिशर्मणेस्वस्तिभवं
तोब्रुवंतु ॥ हरिशर्मणेस्वस्तीतिप्रतिवचनं ॥ अथकुमारस्यदक्षिणेकर्णेक्रमेणपितरौनामचतुष्टयंकथयेतां ॥ यथा ॥ कु
लदेवतानाम्नात्वंगणपतिभक्तोसि ॥ इतित्रिः ॥ मासनाम्नात्वंकृष्णोसीतित्रिः ॥ चक्र्यसि ॥ हरिरसि ॥ पुंडरीकाक्षोसि
॥ शेषमूह्यं ॥ नक्षत्रनाम्ना त्वमाश्विनोसीतित्रिः ॥ आपभरणोसि ॥ पुनर्वसुरसि ॥ स्वातिरसि ॥ रैवतोसि ॥ शेषमूह्यं
॥ व्यावहारिकनाम्ना त्वंशिवशर्मासि ॥ त्वंहरिशर्मासीतित्रिस्त्रिः कथयित्वाथब्राह्मणहस्तेक्षतान्दत्वास्वयमुत्थायकुल
देवतानाम्नाअयंगणपतिभक्तोभवतस्सर्वान्ब्राह्मणानभिवादयते इत्युक्ते ॥ आयुष्मान्भवतुगणपतिभक्त इतिप्रतिवचनं
॥ मासनाम्नाकृष्णोभवतस्सर्वान्ब्राह्मणानभिवादयते ॥ आयुष्मान्भवतुकृष्णः ॥ इतीतरे ॥ अनंतोभवतइत्यादि ॥ न
क्षत्रनाम्ना ॥ अयमाश्विनोभवतस्सर्वानित्यादि ॥ आयुष्मान्भवत्वाश्विनः ॥ इतिप्रतिवचनं ॥ एवमेवापभरणोभवत
इत्यादि ॥ व्यावहारिकनाम्ना ॥ अयंहरिशर्माभवतस्सर्वान्ब्राह्मणानभिवादयते ॥ आयुष्मान्भवतुहरिशर्मा ॥ अथ
वाशिवशर्मा३ आ:इतिवदेत् ॥ अत्रसूत्रं॥अपिवायस्मिन्स्विदुपसर्गःस्यादिति ॥इत्याशीरुक्त्वाहोमशेषंसमाप्यारार्तिकंकृत्वा
ब्राह्मणामंत्राक्षतान्दद्युः॥अत्रासौपदस्थानेनक्षत्रनामनिर्देश्यमित्युक्तं ॥ यथा ॥ रौहिणश्चापभरणोमार्गशीर्षोथकार्तिकः
॥ माघआश्वयुजश्चैत्रोज्येष्ठोप्रौष्ठपदस्तथा ॥ श्रावणश्शातभिषजोरैवतोद्वादशस्वपि ॥ आदिवृद्धिरकारांतःसंबुद्धौरौहि
णेतिच ॥ तिष्यफाल्गुनआश्लेषोविशाखोहस्तआर्द्रकः ॥ श्रविष्ठोमूलकाषाढौअनूराधोप्ययद्वयः ॥ संबुद्धातद्वदेवस्युर

थस्वातिःपुनर्वसुः ॥ गृह्यसूत्रे ॥ अथनक्षत्राणि ॥ रोहिणीमृगशीर्षमघाचित्राज्येष्ठाश्रवणशताभिषग्रेवत्याश्वयुक्षुप्रथमाक्षर
वृद्धिःस्याद्रौहिण्यांरौहिणायेतितथेतराणितिष्याश्लेषाहस्तविशाखाअनूराधाषाढश्रविष्ठासुप्रकृतिवत्तिष्यायेतितथेतराणि
फल्गुन्यांफल्गुनायेतिस्वातिपुनर्वस्वोःस्वातयेपुनर्वसवइतिमूलार्द्रयोर्मूलकायार्द्रकायेति प्रोष्ठपदासु प्रोष्ठपदायप्रौष्ठपदा
येतिवाएवमापभरण्यामपभरणायेतिवाग्नयेकृत्तिकायकार्तिकायेतिवाख्यातानिहोतुःस्त्रीविषयेकुमार्यैरौहिण्यैसुश्रीयैजयं
त्याइति प्रकृतिवत्तिष्यायैचेतिमूलार्द्रयोर्मूलकायाआर्द्रकायैचेतिप्रोष्ठपदासुनिर्ऋत्यैरुद्राण्यैचेत्यापभरण्यैकार्तिकायैरौहि
ण्यैस्वस्तीति ॥ इतिनामकरणप्रयोगः ॥ ७ ॥अथोपनिष्क्रमणं ॥ तच्चतृतीयेचतुर्थेवामासिशुक्लपक्षेछिद्रतिथीसोमवा
रंचवर्जयित्वाशुभवारेषु पुनर्वसूत्तरात्रयहस्तचित्रास्वातीश्रवणधनिष्ठरेवत्यश्विनीषु मेषवृश्चिकमीनव्यतिरिक्तराशिषूपनि
ष्क्रमणंकुर्यात् ॥ (उपनिष्क्रमणंनामगृहाद्बहिः शिशोःप्रथमनिर्गमनमित्यर्थः) ॥ अत्रगृह्यसूत्रं ॥ चतुर्थेमास्युपनिष्क्रमण
मिति ॥ निष्क्रमणंचंद्रसूर्यदर्शनंदेवतानमस्कारंवाद्वादशेन्हिवातृतीयेचतुर्थेवामासिकुर्यादितिस्मृत्यर्थसारोक्तेश्च ॥ बृह
स्पतिः ॥ अथनिष्क्रमणंनामगृहात्प्रथमनिर्गमः ॥ अकृतायांक्रियायांस्यादायुः श्रीनाशनंशिशोः ॥ कृतेसंपद्विवृद्धिः
स्यादायुर्वर्धनमेवचेति ॥ यमः ॥ तृतीयेमासिकर्तव्यमहस्सूर्यस्यदर्शनं ॥ चतुर्थेमासिकर्तव्यमग्नेश्चंद्रस्यदर्शनामिति ॥
उपनिष्क्रमणंकुर्याच्चतुर्थेमासिसावनइति ॥ मुहूर्तसंग्रहे ॥ चत्वार्यर्यणमविश्वर्क्षात्तिस्त्रोहिर्बुध्न्यभादपि ॥ मैत्रमादित्यपु
ष्योचरोहिणीचशुभावहाः ॥ अर्यमा ॥ उत्तरा ॥ उत्तरादिचतुष्टयं ॥ उत्तराषाढादित्रयं ॥ उत्तराभाद्रादपित्रयं ॥ आ

दित्यः पुनर्वसुः ॥ पूर्वपक्षःशुभःप्रोक्तःकृष्णेचांत्यत्रिकंविना ॥ रिक्ताषष्ठचष्टमींदर्शद्वादशीश्चविवर्जयेत् ॥ वर्ज्यास्त्वशुभ
योगाःस्युर्विष्टिश्चशकुनादिच ॥ झषालीमेषवर्ज्याःस्युस्तथैवाधोमुखानिच ॥ सतांचवारवर्गाश्चशुभदाउदयास्तथा ॥ चां
द्रंसर्वंविवर्ज्यंस्यात्सर्वंकस्थाविनाशदाः ॥ अंकस्थानवमस्थाः ॥ इतिकालनिर्णयः ॥ अथप्रयोगः ॥ प्रातःस्नानादिसर्वं
पूर्ववत्कृत्वानांदीश्राद्धंकृत्वापुण्याहंवाचयेत् ॥ सविताप्रीयतामितिविशेषः ॥ अथस्थंडिलोल्लेखनाद्यौपासनैकदेशाग्निंप्र
तिष्ठाप्यशिवोनामाग्निस्सवितादेवताचरुर्हविरित्यादिसंकल्प्यपूर्ववद्गायत्र्यापकंहुत्वा स्विष्टकृतमवदायातःपरिधीन्निधाय
॥ ॐस्वस्तिनोमिमीता ॥ अश्विभ्यांभगायादित्यैपूष्णेसुरायद्यावापृथिवीभ्यामिदं ॥ १ ॥ ॐस्वस्तयेवायुं ॥ वायवेसो
मायभुवनपतयेबृहस्पतयआदित्येभ्यइदं ॥ २ ॥ ॐविश्वेदेवानोअद्या ॥ विश्वेभ्योदेवेभ्योवैश्वानरायवसवेग्नयेदेवेभ्यो
ऋभुभ्योरुद्रायेदं ॥ ३ ॥ ॐस्वस्तिमित्रावरुणा ॥ मित्रावरुणाभ्यांपथ्यैरेवत्याइंद्रायाग्नयेदित्याइदं ॥ ४ ॥ ॐस्वस्तिपं
थामनुचरेम ॥ सूर्याचंद्रमोभ्यामिदं ॥ ५ ॥ ॐस्वस्त्ययनंतार्क्ष्यं ॥ तार्क्ष्यायारिष्टनेमयेदसुरघ्नायेदं ॥ ६ ॥ ॐअग्नेंहोमुचमां
गिरसं ॥ अंगिरसेस्वस्त्यात्रेयायतार्क्ष्यायेदं ॥ ७ ॥ ॐस्वस्तिनइंद्रोवृद्धश्रवाः ॥ इंद्रायवृद्धश्रवसेपूष्णोविश्ववेदसेता
र्क्ष्यायारिष्टनेमयेस्वस्तयेबृहस्पतयइदं ॥ ८ ॥ इत्यष्टाभिरुपहुत्यास्विष्टकृदादिवरदानांतंकृत्वाग्रेणाग्निमश्वत्थपर्णेषुव्याहृ
तिभिर्हुतशेषंनिधाय ॥ ततोमंगलघोषपुरस्सरंगृहाद्बहिर्देवतायतनंगत्वादेवताः संपूज्यप्रार्थयेत् ॥ चंद्रार्कयोर्दिगीशानां
दिशांचगगनस्यच ॥ निक्षेपार्थमहंदद्मितेमेरक्षंतुसर्वदा ॥ अप्रमत्तंप्रमत्तंवादिवारात्रमथापिवा ॥ रक्षंतुसततंसर्वेदेवाः श

क्रपुरोगमाः ॥ इतिप्रार्थ्यब्राह्मणान्संपूज्याशिषोवाचयित्वास्वगृहानागत्यउत्तरपरिषेकादिकंकुर्यात् ॥ इत्युपनिष्क्रम
णप्रयोगः ॥ ७ ॥ ॥ अथान्नप्राशनं॥तच्चषष्ठेष्टमेदशमेद्वादशेवामासिपुंसां॥स्त्रीणांतुसप्तमेनवमेवामासि॥शुक्लपक्षेश्विनी
रोहिणीमृगशिरपुनर्वसुपुष्योत्तरात्रयहस्तचित्रास्वात्यनूराधश्रवणधनिष्ठाशततारेरेवतीषु प्रथमजन्मनक्षत्रंवर्जयित्वान्य
जन्मनक्षत्रद्वयेछिद्रतिथीन्वर्जयित्वान्यशुभतिथिषु सोमबुधगुरुशुक्रवारेषुमेषवृश्चिकमीनवर्जितेषुराशिष्वन्नप्राशनंकुर्यात्
॥ अत्रसूत्रं ॥ षष्ठेमास्यन्नप्राशनमिति ॥ बोधायनस्मृतौ ॥ अतोन्नप्राशनंमासेषष्ठेकार्यंयथाविधि ॥ अष्टमेवापिकर्त
व्यंयथेष्टंमंगलंकुले ॥ शंखोपि ॥ संवत्सरेन्नप्राशनमर्धसंवत्सरेवाजातेषुदंतेष्विति ॥ निर्णयसिंधौ ॥ नारदः॥तदभावेष्टमे
मासिनवमेदशमेपिवा॥सप्तमेमासिवाकार्यंनवान्नप्राशनंशुभमिति॥श्रीधरीये ॥ व्योमेंद्रियेंदौदिवसेप्रवृद्धेपश्चात्सितेबा
लनवान्नभुक्तिः ॥ खाष्टेंदुसंख्यात्परतस्तुयुग्मेमानेनसौरेणवदंतितज्ज्ञाः ॥ जननदिनादारभ्यपंचाशदुत्तरशतदिनेप्रवृ
द्धेगतेसतीत्यर्थः ॥ खाष्टेंदुसंख्यादिति ॥ जन्मदिवसादारभ्याशीत्युत्तरशतदिनादर्वागित्यर्थः ॥ श्रीपतिः ॥ षष्ठेमासे
प्राशनंदारकाणामन्यस्मिंस्तत्कन्यकानांविधेयं ॥ इत्यनेनपुंसांषष्ठादियुग्ममासेकन्यकानामयुग्ममासइति ॥ अतएवग
र्गः ॥ नरस्यान्नाशनेयुग्मंस्त्रीणांचानाशनेऽयुजमिति ॥ अथनक्षत्राणि ॥ श्रीधरीये ॥ आदित्यतिष्यवसुसौम्यकराणि
लाश्विचित्राजविष्णुवरुणोत्तरपौष्णामित्राः ॥ बालान्नभोजनविधौदशमेविशुद्धेछिद्रांविहायनवमींतिथयःशुभाःस्युः ॥ गु
रुश्च ॥ पौष्णादितींदुहस्ताश्विलाष्ट्रवासववैष्णवाः ॥ रोहिणीमैत्रतिष्याश्चवरुणाश्चोत्तरात्रयं ॥ श्रविष्ठाश्चशुभाह्येतेषोड

शान्नाशनेशिशोः ॥ विधिरत्ने ॥ अन्नप्राशनकार्येतुजन्मभंमृत्युदंभवेत् ॥ शुभंकर्मर्क्षमाधानेविवाहेचान्नभोजने ॥ वारां
शकाश्चगुरुशुक्रशशींदुजानांमेषालिमीनरहितानिशुभानिभानि ॥ भुक्तौशिशोःशुभकराःपरिहृत्यसौम्यंभौमंसितन्नवम
नैधनसप्तमेषु ॥ अर्कांगारकमंदानांवाराश्चापिशुभावहाः ॥ यदावाराधिपस्तिष्ठेत्स्वोच्चमित्रग्रहेतदा ॥ गुरुणाबलिनावा
पिवीक्षितश्चबलान्वितः ॥ दशमस्थान्ग्रहान्त्सर्वान्वर्जयेन्मतिमान्नरः ॥ अन्नप्राशनकृत्येषुमृत्युक्लेशभयावहानिति ॥ इ
तिकालनिर्णयः ॥ ७ ॥ ॥अथान्नप्राशनप्रयोगः ॥ कर्ताप्रातर्मंगलस्नानादिनित्यकर्मकृत्वावैश्वदेवनांदीश्राद्धंपुण्या
हवाचनंचकृत्वासवितापीयतामितिविशेषः ॥ अथस्थंडिलोल्लेखनाद्यौपासनैकदेशाग्निंप्रतिष्ठाप्यप्राणानायम्यदेशकालौ
संकीर्त्य ममकुमारस्यबीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुःश्रीबलवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थमन्नप्राशनाख्यंकर्म
करिष्ये ॥ अन्नप्राशनहोमःकर्माधारवत्तंत्रमित्यादिशुचिर्नामाग्निःसवितादेवताचरुर्हविरग्निःस्विष्टकृदित्यादिसंकल्प्या
ग्निमुखांतंकृत्वापूर्ववद्वायत्र्यापक्वंहुत्वास्विष्टकृतमवदायांतःपरिधौनिधाय ॥ ॐअहमस्मिप्रथमजाऋतस्य *॥* पूर्वमग्ने
*॥* जहाम्यन्यं *॥* पराकेअन्ने *॥* महांतौचरू *॥* अन्नंप्राणमन्नं *॥* मोघमन्नं *॥* अहंमेघः *॥* सर्वत्रान्नायेदं ॥ इ
त्यष्टाभिर्हुत्वास्विष्टकृदादिवरदानांतंकृत्वाग्रेणाग्निमश्वत्थपर्णेषुव्याहृत्याहुतशेषंनिधाय ॥ कुमारंमातुरुत्संगउपवेश्यदीपद्व
ययुक्तेस्वर्णादिपात्रेसमस्तभक्ष्यभोज्यशाकादिसंयुक्तेथौदनंदधिमधुघृतजलैर्मिश्रितंनिधाय कुमारंश्वेतवस्त्रैरलंकृत्यहिर
ण्येनतदन्नंगृहीत्वा ॥ ॐजायाताओषधयः *॥* ॐभूर्भुवस्सुवः अपांत्वौषधीनांरसमन्नंप्राशयामिसिवास्त्वाआपओष

धयस्संत्वनमीवास्माआपओषधयस्संतु॥ॐशतंवोअंब *॥* ॐभूर्भुवस्सुवरपां*॥*ॐपुष्पावतीः*॥*ॐभूर्भुवस्सुवरपां*॥*
ॐओषधीरितिमातरः*॥*ॐभूर्भुवस्सुवरपां*॥*ॐअश्वत्थेवः*॥*ॐभूर्भुवस्सुवरपां*॥*ॐयदहंवाजयन्निमाओषधीः ॥ॐ
भूर्भुवस्सुवरपां॥ इतिषड्भिःप्राशयित्वामुखंप्रक्षाल्यतूष्णीमाचमय्याशिषोवाचयित्वोत्तरपरिषेकादिकंकुर्यात्*॥*इत्यन्नप्रा
शनप्रयोगः॥छ॥ ॥ अथकर्णवेधनं॥तच्चद्वादशेषोडशेवान्हिप्रथमेषष्ठेसप्तमेष्टमेवामासिसंवत्सरेवाशुक्लपक्षेपूर्वाण्हेदिवै
वतिथिसंधिनक्षत्रसंधिछिद्रतिथिपर्वपापवारांश्चवर्जयित्वाजन्ममासमेकादशींचविहायमृगशिरआर्द्रापुनर्वसुपुष्योत्तरात्र
यहस्तचित्राश्रवणधनिष्ठारेवतीषुसिंहवृश्चिककुंभराशींश्चवर्जयित्वान्यराशिषुकर्णवेधनंकुर्यात् ॥ अत्रसूत्रं॥सप्तमेमास्य
ष्टमेमासिवाकर्णवेधनमिति॥ गर्गः॥मासेषष्ठेसप्तमेवाप्यष्टमेमासिवत्सरे ॥ कर्णवेधंप्रशंसंतिपुष्ट्यायुःश्रीविवृद्धये॥मदनर
त्ने॥प्रथमेसप्तमेमासिअष्टमेदशमेथवा ॥ द्वादशेचतथाकुर्यात्कर्णवेधंशुभावहं॥श्रीधरीये॥ मासेषष्ठेसप्तमेवाष्टमेवावेध्यौक
र्णौद्वादशेषोडशेन्हि ॥ मध्येवान्हःपूर्वभागेनरात्रौनक्षत्रेद्वेद्वेतिथीवर्जयित्वा ॥ गुरुः ॥ जन्मतोदशमेवान्हिद्वादशेवाथषोड
शे ॥ सप्तमेमासिवाकुर्यादष्टमेमासिवापुनः ॥ व्यासः॥ योजन्ममासेक्षुरकर्मयात्रांकर्णस्यवेधंकुरुतेतिमोहात् ॥ नूनंस
रोगीधनपुत्रनाशंप्राप्नोतिमूढोवधबंधनानि ॥ गुरुः ॥ यस्मिन्वारेतिथीतारेद्वेद्वेयुक्तेनशोभने ॥ संध्येद्वयोःपुरापश्चाद्दि
नादिशुभतारयोः ॥ पूर्वाण्हेसुप्रशस्तंस्यादपराण्हेनशोभनं ॥ अगस्त्यः॥ द्वयोस्तुसंध्ययोर्लग्नेनकुर्यात्कर्णवेधनं ॥ रा
त्रावपितथालग्ननक्षत्रतिथिसंधिषु ॥ कर्णवेधंनकुर्वीतकुर्याच्चेच्छेदनंभवेत् ॥ श्रीधरीये ॥ हरिहरकरचित्रासौम्यपौष्णो

शशिबुधगुरुकाव्यानांदिनेपर्वरिक्तारहिततिथिषुशुद्धेनैधनेकर्णवेधः ॥ गु

त्तरार्यादितिवसुषुघटालीसिंव्हवर्ज्येविलग्ने ॥ मध्यमौशेषितास्सर्वेशुभाःस्युःकर्णवेधनइति ॥इतिकर्णवेधनकालनिर्णयः

रुः ॥ वृषवर्ज्याःस्थिरास्सर्वेनशुभामकराजभौ ॥ प्रातर्मंगलस्नानादिऔपासनैकदेशाग्निंप्रतिष्ठाप्य ममकुमारस्यबीजगर्भसमुद्भवैनोनिबर्हं

॥७॥ अथकर्णवेधनप्रयोगः ॥ प्रातर्मंगलस्नानादिऔपासनैकदेशाग्निं... कर्णवेधनहोमःकर्माधारवत्तंत्रमित्यादिं

णपुरस्सरमायुःश्रीबलवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंकर्णवेधनाख्यंकर्मकरिष्ये ॥ ॐगुँश्रोत्रेणभद्रं ॥ आश्रुणोमों

वर्द्धमानोनामाग्निःश्रोत्रंदेवताचरुर्हविरित्यादिसंकल्प्याग्निमुखांतंकृत्वापक्वाज्जुहोति ॥ ॐप्राणोरक्षति ॥ प्राणा

येनप्राच्या ॥ बभूवस्वाहा ॥ श्रोत्रायेदं ॥ अथस्विष्टकृतमवदायांतःपरिधौनिधाय ॥ मनसइदं ॥ ३ ॥ ॐआन

येदं ॥ १ ॥ ॐयोदेवोदेवेषु ॥ प्राणायेदं ॥ २ ॥ ॐमनसश्चित्तेदं ॥ ध्वग्नियगुँस्वाहा ॥ मनसइदं ॥ ६ ॥ ॐचक्षुर्देवानां ॥

एतु ॥ मनसइदं ॥ ४ ॥ ॐजुषताम्मेवा ॥ वाचइदं॥ ५॥ ॐययारूपाणि ॥ वाचेदेव्याइदं ॥ ८ ॥ ॐगुँश्रोत्रेणभद्रं ॥ श्रोत्रायेदं

द्विचक्षणगुँस्वाहा ॥ चक्षुषइदं॥ ७ ॥ॐआयुरिन्नः ॥ मृतगुँस्वाहा ॥ चक्षुषइदं ॥ ८ ॥ ॐगुँश्रोत्रेणभद्रं ॥ श्रोत्रायेदं

॥ ९॥ ॐयेनप्राच्या ॥ श्रोत्रायेदं ॥ १० ॥ इतिदशभिरुपहुत्यास्विष्टकृदादिवरदानांतेग्रेणाग्निंवेणुपर्णेषुहुतशेषंनिदध्या

ति ॥ समुद्रायवयुनायसिंधूनांपतयेनमः ॥ नदीनांगुँसर्वासांपित्रेजुहुताविश्वकर्मणेविश्वाहामर्त्यगुँहविरिति ॥ अथक

तास्यकुमारस्यकर्णवेधनकर्मणःपुण्याहं ॥ कर्मणेस्वस्ति ॥ कर्मणऋद्धिंभवंतोब्रुवंतु ॥ इत्याशिषोवाचयित्वाशिवंकर्मास्तु

॥ श्रोत्रंप्रीयतामितिवाचयित्वाथसूच्यावासुवर्णेनवाकंटकेनवादा[illegible] ॥ गायत्रीत्रिष्टुप्जगतीत्यथापउपस्पृ

श्य द्विपदायेतिवामकर्णंविद्ध्वाअपउपस्पृश्याथलोहितसूत्रेणवाशणसूत्रेणवाबध्नातिवरुणस्यस्कंभनमसीति ॥ परेहनिविस
र्जयति॥ वरुणस्यस्कंभसर्जनमसीति ॥ अथापउपस्पृश्याशिषोवाचयित्वोत्तरपरिषेकादिकंकुर्यात्॥ इतिकर्णवेधनप्रयो
गः॥छ॥ ॥अथनामकरणादिचतुष्टयस्यसंक्षेपप्रकारः॥गृह्यसूत्रे॥नामकरणोपनिष्क्रमणान्नप्राशनकर्णवेधादिब्राह्म
णभोजनादेवैकेषांपुण्याहवाचनादेवैकेषांप्रासिद्धेचौलोपनयनेइति॥ अनेनतत्तत्कालकर्तव्यनामकरणादिचतुष्टयस्यापादि
ब्राह्मणभोजनेनवाकेवलपुंण्याहवाचनेनवाकर्तव्यत्वंप्रतिपादितंभवतिनतुसमानतंत्रे॥तत्रकर्तव्यत्वमेव ॥तस्मिन्पक्षेतुपुं
ण्याहंवाचयित्वाउपरिष्टात्तंत्राणिकुर्यात्॥ इतिकर्णवेधनतंत्रप्रयोगः॥छ॥ ॥ अथचौलं॥तच्चजननादारभ्यसंवत्सरेपूर्णे
द्वितीयेतृतीयेत्रितीयभागगतेपंचमेब्देसप्तमेब्देवाकार्यं॥त्रिभागगतेपंचमइतिसप्तपंचाशन्मासादूर्ध्वमित्यर्थः ॥तत्राप्युत्त
रायणेशुक्लपक्षेगुरुशुक्रास्तमलमासादिरहितेजन्ममासंजन्मपक्षंवावर्जयित्वामकरकुंभमीनमेषवृषभमिथुनमासेषु॥अश्वि
नीरोहिणीमृगशिरःपुनर्वसुपुष्योत्तरात्रयहस्तचित्रास्वातीश्रवणधनिष्ठाशततारारेवतीषुवृषभमिथुनकर्कटककन्यातूलमी
नलग्नेषुअष्टमेनवमेचशुद्धेसप्तमेशुक्रपापग्रहरहितेष्टमस्थितेशुक्रेचौलंकुर्यात्॥ अत्रसूत्रं॥संवत्सरेचौलकर्मत्रिषुवासंवत्सरे
ष्विति॥स्मृतिरपि॥ततस्संवत्सरेपूर्णेचूडाकर्मविधीयते॥द्वितीयेवातृतीयेवाकर्तव्यंश्रुतिचोदनात्॥पारिजाते॥जाताधिकारा
जन्मादितृतीयेब्देतुचौलकं ॥ आद्येब्देकुर्वतेकेचित्पंचमेब्देद्वितीयके ॥ उपनीत्यासहैवेतिविकल्पाःकुलधर्मतः ॥ बृहस्प
तिः ॥ द्वितीयेब्देशिशोर्गर्भंजन्मतोवाविशेषतः॥ पंचमेसप्तमेवापिस्त्रियाःपूंसोपिवासमइति ॥ नारदः ॥ जन्मतस्तुतृतीये

ब्देश्रेष्ठमिच्छंतिपंडिताः ॥ पंचमेसप्तमेवापिजन्मतोमध्यमंभवेत् ॥ अधमोगर्भतः स्यात्तुनवमैकादशेपिवा॥ श्रीधरीये ॥ वर्षेतृतीयेप्यथपंचमेब्देगतत्रिभागेप्रवदंतिचौलं ॥ उदग्गतेर्केगुरुशुक्रतेजःप्रकाशितेव्योम्निचशुक्लपक्षे ॥ काश्यपः ॥जन्मर्क्षाणांचतुर्विंशात्परतश्चौलमाचरेत्॥ अथवापंचमेवर्षेसावनेनैवयोजयेत् ॥ गतत्रिभागेपंचमइतिमतांतरमुच्यते॥ तथाचन्द्रसिंव्हः ॥ तृतीयेमंचमेवर्षेगतेभागेतृतीयके ॥ आदौचौलंप्रकर्तव्यमितिकेचित्प्रचक्षतइति ॥ देवरातः ॥ उत्तरं देवभागःस्याद्दक्षिणंयाम्यमुच्यते॥ देवभागंगतेसूर्येचूडाकर्मसमाचरेत् ॥ अयनेचोत्तरेसौम्यंदक्षिणेत्वशुभावहं ॥ ज्योतिर्णवे ॥ मकरेसर्वसंपत्तिःकुंभेसंतानवर्द्धनं ॥ मीनमासेसदासौख्यंमेषेसर्वार्थसाधनं ॥ विजयंवृषभेविद्यान्मिथुनेवंशवृद्धिकृत् ॥ कर्कटेबहुरोगीस्यात्सिंव्हेनष्टप्रजोभवेत् ॥ षष्ठेकुलक्षयंविद्यात्तुलायांदेहनाशनं ॥ वृश्चिकेबंधुनाशःस्याद्वित्तनाशस्तुकार्मुकइति ॥ बृहस्पतिः ॥ उत्तरायणगेसूर्येविशेषात्सौम्यगोलके ॥ अधिमासस्तुनिंद्यःस्यात्ससर्पांहस्पतीतथा ॥ गुरुशुक्रौनदृश्येतेयदातिस्फुटमंबरे ॥ बालवृद्धाव्हयःकालश्चौलेनिंद्यस्तयोर्द्वयोः ॥ संग्रहे ॥ स्वजन्ममासेबालानां चौलमायुःक्षयावहं ॥ तत्रापिकेचित्कुर्वंतिसहोपनयनेनतत् ॥ व्यासश्च ॥योजन्ममासेक्षुरकर्मयात्राभितिकर्णवेधप्रकरणउक्तं ॥ अथजन्ममासलक्षणं ॥ आरभ्यजन्मदिवसाद्यावत्त्रिंशद्दिनंभवेत् ॥ जन्ममासःसविज्ञेयस्सर्वकर्मबहिष्कृतः ॥ जन्ममासंतथाजन्मदिनंजन्मद्वयंतथा ॥ हूणेवंगेत्यजेत्सर्वमध्येदेशंशुभावहं ॥ अन्नप्राशनमुद्वाहश्चौलकर्मोपनायनं ॥ जन्ममासेषुवर्ज्यंस्यात्कलिंगेमगधेतथा ॥ गुरुः॥ शुक्लपक्षेशुभंप्रोक्तंकृष्णपक्षेशुभेतरत् ॥ अशुभांत्यत्रिभागः स्यात्कृष्णपक्षे

त्रिधाकृते ॥ अथनक्षत्राणि॥ आदित्यसौम्यवसुवैष्णवपौष्णतिष्यत्वाष्ट्राश्विचंडकिरणेषुदिवाप्रशस्तं ॥ स्वातीविधातृवरुणोत्तरभानिमध्यान्याहुर्निशास्वथनचक्षुरकर्मकार्यं॥संपदिक्षेमभेमैत्रेसाधकेभेतीमित्रभे॥चौलकर्मप्रशस्तंस्याच्छोभनांशगतेविधौआद्यंशोविपदित्याज्यःप्रत्यरेचरमोशुभः॥वधेत्याज्यस्तृतीयांशः शेषांशाअपिशोभनाः॥अर्णवे॥जन्मत्रयेवार्किदिवाकरारवारेधिमासेसितजीवमौढ्ये ॥ पक्षद्वयेपर्वनिशादिनांतेक्षौरंयदिस्यात्कुलनाशहेतुः ॥ षष्ठ्यष्टमीप्रतिपदस्तिथयश्चरिक्तावर्ज्याः शशांकगुरुसोमजभार्गवानां॥ वारांशकोदयविलोकनमिष्टमाहुः क्षौरेचकर्मणिनशोकमुशंतिशांवे ॥ द्वित्रिपंचमसप्तम्यामेकादश्यांतथैवच ॥ दशम्यांचत्रयोदश्यांकार्यंक्षौरंविजानता ॥ गुरुः ॥ पापग्रहाणांवारांशानिंदिताः शुभकर्मणि ॥ शुभग्रहाणांवारायेपूजिताब्रह्मणोमतं ॥ सोमवारेसितपक्षेकृष्णपक्षेतिगर्हितः ॥ बुधवारेशुभःप्रोक्तः पापग्रहयुतेबुधे ॥ पापग्रहाणांवाराशौविप्राणांतुशुभोरवेः ॥ क्षत्रियाणांक्षमासूनोर्विट्शूद्राणांशनेः शुभः ॥ माधवीये ॥ कर्क्यंगनामिथुनमीनतुलोक्षनक्राःपूज्याःक्रियालिहरिचापधराजघन्याः ॥ तेपिस्ववीर्यशुभदृष्टियुताविधेयाश्चौलेघटः शुभयुतोपिनिषिद्धएव ॥ उक्षावृषभः॥क्रियोमेषः ॥ वासिष्ठः ॥ वृषभश्चकुलीरश्चयमकन्यातुलाधराः ॥ मकरश्चैवमीनश्चक्षुरकर्मणिपूजिताः ॥ गुरुः ॥ अष्टमस्थाग्रहास्सर्वेनेष्टाः शुक्रविवर्जिताः ॥शुक्रस्तुनिधनेक्षौरेसर्वसंपत्प्रदः शिशोः ॥ बृहस्पतिः॥लग्नादष्टमराशीशःकेंद्रगः शुभवीक्षितः ॥ यद्यप्यष्टमगस्योक्तंदोषमाशुव्यपोहति ॥ रंध्रेशः स्वांशगःस्वोच्चस्वक्षेत्रोपचयर्क्षगः ॥ अष्टमस्थस्यदोषोयंविनश्यतिनसंशयः ॥ नारदः ॥ लग्नाष्टमेशयोर्मैत्र्येलग्नेशेबलसंयुते ॥ अस्तगेनिध

नांशेवानिधनेपिशुभोग्रहः ॥ वसिष्ठः ॥ जामित्रेभास्करेक्षौरेमृत्युस्स्याद्भूमिजेतथा ॥ शुक्रेसौम्येविनाशः स्यान्मंदभाग्यं शनैश्चरे ॥ त्रिषडायगताः पापाः क्षुरकर्मणिपूजिताः ॥ शेषेषुनिंदिताःप्रोक्ताःस्वोच्चस्वर्क्षबलाद्दते ॥ इति ॥ एतच्चाशि शोर्मातरिगर्भिण्यांनकार्यं ॥ तथाचज्योतिर्निबंधेमदनरत्नेबृहद्गर्गः ॥ पुत्रचूडाकृतौमातायदिवागर्भिणीभवेत् ॥ शस्त्रे णमृत्युमाप्नोतितस्मात्क्षौरंविवर्जयेत् ॥ नारदस्तु ॥ सूनोर्मातरिगर्भिण्यांचूडाकर्मनकारयेत् ॥ पंचाब्दात्प्रागतोर्ध्वंतुग र्भिण्यामपिकारयेत् ॥ निर्णयसिंधौगार्ग्यः ॥ पंचममासादूर्ध्वंमातुर्गर्भस्यजायतेमृत्युरिति ॥ बृहस्पतिः ॥ गर्भेमातुःकु मारस्यनकुर्याच्चौलकर्मतु ॥ पंचमासादधः कुर्यादतऊर्ध्वंनकारयेदिति ॥ अथप्रयोगः॥प्रातर्मंगलस्नानादिनित्यकर्मकृ त्वावैश्वदेवंहुत्वापूर्वेद्युःसद्योवानांदीश्राद्धंकृत्वाउदकशांतिप्रतिसरबंधौकृत्वापवनादिकंकृत्वाकेशिनः प्रीयंतामितिपुण्या हंवाचयित्वापुनः प्राणानायम्यदेशकालौसंकीर्त्यममकुमारस्यबीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुः श्रीबलवृद्धिद्वा राश्रीपरमेश्वरप्रीत्यर्थंचौलाख्यंकर्मकरिष्ये ॥ इतिसंकल्प्यस्थंडिलोल्लेखनाद्यौपासनैकदेशाग्निंप्रतिष्ठाप्य ॥ चौलहो मःकर्माधारवत्तंत्रमित्यादिसद्भ्योनामाग्निःकेशिनोदेवताचरुर्हविरग्निस्स्विष्टकृदित्यादिसंकल्प्य पात्रासादनकालेप्राकृत पात्रैःसहक्षुरंदर्भान्शीतोदकमुष्णोदकंचासाद्यप्रोक्षिण्यादिसंस्कृत्यकेशिभ्योजुष्टंनिर्वपामीति चरुंनिरूप्याग्निमुखांतंकृ त्वापक्वाज्जुहोति ॥ ॐयेकेशिनः ≡ सर्गुस्सुजाथो नतेब्रह्मणः ≡ वपनस्यनान्यस्वाहा ॥ केशिभ्यइदं ॥ स्विष्टकृतमवदा यांतःपरिधौनिधाय ॥ आरोहप्रोष्ठं ॥* वशिन्याउग्रायाइदं ॥ १ ॥ येनावपत्सविता ॥* सवित्रेसोमायराज्ञेवरुणायब्र

ह्मणइदं ॥ २ ॥ ॐमातेकेशात् ॥ धात्रइंद्रायबृहस्पतयेसवित्रइदं ॥ ३ ॥ ॐ तेभ्योनिधानं ॥ द्यावापृथिवीभ्या
मिदं ॥ ४ ॥ ॐ बलंते ॥ सवित्रेसोमायाश्विभ्यामिदं ॥ ५ ॥ ॐ यत्सीमंतं ॥ अश्विभ्यामिदं ॥ ६ ॥ इतिषड्भि
रुपहुत्यस्विष्टकृदादिवरदानांतंकृत्वाग्रेणाग्निमौदुंबरपर्णेषुहुतशेषंनिदधाति ॥ नमोहिरण्यबाहवेसेनान्येदिशांचपतयेन
मइत्यथापरेणाग्निंसूष्णास्वस्फुशीताआनयति ॥ उष्णेनवायउदकेनेह्यदितिःकेशान्वपतीति ॥ स्वयंप्राङ्मुखउपवि
श्यशिशुंप्रत्यङ्मुखमुपवेश्यताभिरद्भिरस्यशिशोःशिरआर्द्रीकरोति ॥ आपउंदंतु ॥ वर्चसइति ॥ अथोर्ध्वाग्रान्दर्भा
न्केशेषुनिदधाति ॥ ओषधेत्रायस्वैनमिति ॥ तान्केशान्दर्भैश्चसहवामहस्तेगृहीत्वादक्षिणेनक्षुरंगृहीत्वाभिमंत्रयते ॥
ज्योक्सूर्यंदृशइति ॥ अथैनंस्वधितिंवामहस्तगृहीतेषुकेशेषुनिदधाति ॥ स्वधितेमैनगुँहिगुँसीरिति ॥ अथदर्भैस्सह
तान्केशांच्छिनत्ति ॥ येनावपत्सविताक्षुरेणेत्यथापउपस्पृश्यप्रवपतइतरान्केशाननुमंत्रयते ॥ मातेकेशानित्यथनापिते
नोप्तान्त्सर्वान्केशानेकीकृत्यदर्भस्तंबेनिदधाति ॥ तेभ्योनिधानंबहुधाव्यैच्छन्नित्यथैनमुष्णोदकेनस्नावयाति ॥ बलंतेबाहु
वोरिति ॥ अथैकशिखस्त्रिशिखःपंचशिखोवायथैवैषांकुलधर्मःस्याद्यथाऋषिशिखानिदधातीत्येकइतिसूत्रं ॥ स्वस्वगोत्रे
यावंतःप्रवराऋषयस्तावत्यःशिखाइत्यर्थः ॥ ततोमंगलतूर्यघोषैस्सहोष्णोदकेनस्नाप्याच्छाद्यालंकृत्यब्राह्मणान्फलतां
बूलादिनासंतोष्यअस्यचौलकर्मणःपुण्याहंस्वास्तिऋद्धिंभवंतोब्रुवंत्वितिवाचयित्वाशिवंकर्मास्तुकेशिनःप्रीयंतामित्युक्त्वो
त्तरपरिषेकादिकंकुर्यात् ॥ इतिचौलप्रयोगः ॥ ७ ॥ ॥ ७ ॥ ॥ अत्रैकदेशाग्निविषयेविशेषउक्तोविष्णुभट्टेन

तत्रौपासनवतःसर्वेषुगृहकर्मसुगर्भाधानादिजातकर्मांतेषुसंस्कारकर्मसुसएवौपासनाग्निस्समस्तोभवति ॥ स्थंडिलोक्त
नियमोपितस्यैवाग्नेरितरस्यलौकिकोग्निर्बहुकर्तृकेपिकर्माणिसएवाग्निः ॥ समस्तौपासनाग्नौब्रह्मौदनपाकेपुनस्त्वादित्यमं
त्रेणलौकिकाग्नौप्रतिकर्महुत्वा तत्रगृह्याणिकर्माणिवैश्वदेवादीनिकृत्वातमुत्सृजेत् ॥ अपवृत्तकर्मणिलौकिकस्संपद्यतइति
न्यायात् ॥ एवमुत्पादितोग्निः प्रजासंस्कारेषुसमस्तोग्राह्यः ॥ नत्वेकदेशः ॥ अथचेदौपासनंविभज्यब्रह्मौदनस्यपाक
स्तदार्धांतरंपितरौपासनंविद्यतएवतस्मिन्नौपासनाग्नौगृह्याणिकर्माणिक्रियंतइत्युक्तमेवइति ॥ अथयमलजननेतत्रज्येष्ठ
कनिष्ठविभागउच्यते ॥ निर्णयसिंधौ ॥ मनुः ॥ जन्मज्येष्ठस्यचाव्हानंसुब्रह्मण्यास्वपिस्मृतं ॥ यमयोश्चैवगर्भेषुजन्म
तोज्येष्ठतास्मृता ॥ देवलोपि ॥ यस्यजातस्ययमयोःपश्यतिप्रथमंमुखं ॥ संतानपितरश्चैवतस्मिन्ज्यैष्ठ्यंप्रतिष्ठितमि
ति ॥ भागवतेतु ॥ द्वौतदाभवतोगर्भौसूतिर्वंशविपर्ययात् ॥ इतिपश्चादुत्पन्नस्यज्यैष्ठ्यमुक्तं ॥ अत्राशिष्टाचारव्यवस्था
ज्ञेया ॥ अथगोस्त्रियोर्यमलजननेप्रायश्चित्तमुक्तंगृह्यसूत्रेप्रायश्चित्तप्रश्ने ॥ अथगोस्त्रियोर्यमलजन्मन्युल्लेखनाद्याज्यसं
स्कारांतंकृत्वाचतस्त्रोव्याहृतिः पाहिनोअग्नइतिपंचव्याहृतिचतुष्टयमितिपाहित्रयोदशाहुतीर्जुहुयादिति ॥ अथयमलसं
स्कारः॥निर्णयसिंधौ ॥ एकस्मिन्वासरेप्राप्तेकुर्याद्यमलजातयोः ॥ क्षौरंचैवविवाहंचमौंजीबंधनमेवच ॥ज्योतिर्निबंधेरत्ने
॥ एकस्मिन्वत्सरेप्राप्तेकुर्याद्यमलजातयोः ॥ क्षौरंचैवविवाहंचमौंजीबंधनमेवचेति॥भट्टकारिकायां ॥ एकस्मिन्वत्सरेचैव
वासरेमंडपेतथा ॥ कर्त्तव्यंमंगलंस्वस्त्रोर्भ्रात्रोर्यमलजातयोः ॥ आश्वलायनस्मृतौ ॥ पितात्वहनिचैकस्मिन्नेकस्यांसहजा

तयोः ॥ करोतिजातकर्माणिपृथक्स्नात्वायथाविधि ॥ बहुभार्यासुचैकस्मिन्बहुपुत्रेषुवासरे ॥जातेष्वेकःपिताकुर्याज्जात
कर्माणिचद्वयोरिति ॥ इतियमलसंस्कारनिर्णयः ॥ ७ ॥ ॥ अथयमलजातयोस्समानतंत्रप्रयोगः ॥ कर्तास्नात्वाच
म्यालंकृत्यप्राणानायम्यदेशकालौसंकीर्त्यानयोर्यमलजातयोःकुमारयोर्बीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुःश्रीबल
वृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंजातकर्मकरिष्ये ॥ इतिसंकल्प्यानयोर्यमलजातयोर्जातकर्मांगतया विहितंनांदीसमाराधनं
हिरण्येनकरिष्ये ॥ पुण्याहंवाचयिष्ये ॥ इतिसंकल्पेविशेषः ॥ एवंनांदींपुण्याहंचकृत्वा ॥ अद्भ्यःसंभूतइत्यनुवाकंपृथ
क्पृथगुक्त्वापृथगभिमृश्यक्षेत्रियैत्वेतिद्विर्जपित्वापृथक्स्नापयित्वा ॥ अंगादंगात्संभवसि *॥* अश्माभवा *॥* अग्निरायु
ष्मान् *॥* आयुष्टेविश्वतइत्येतान्मंत्रान्पृथक्पृथग्जपित्वापृथक्संस्कृत्यप्राणोरक्षतीतिपृथग्जपित्वापृथक्प्राशयित्वासीद
त्वंमातुरस्याः *॥* हंसःशुचिषत् *॥* इतिपृथग्जपित्वापृथगेवमातुरुपस्थआधाय यस्तेस्तनइतिसकृज्जपित्वा स्तनम
भिमंत्र्यद्यौस्तेपृष्ठमितिद्विर्जपित्वास्तनंपृथक्प्राशयित्वाआपस्सुप्तेष्वित्युदकुंभनिधानंसकृत्॥ सकृदेवहोमः॥एवमेवनाम
करणादिचौलांतेषुसकृदेवनांदीपुण्याहहोमहुतशेषादयः ॥ नामकरणेकुलदेवतादिनामचतुष्टयंपृथङ्निर्देश्यं॥अन्नप्राशने
पियाजाताइत्यादिपृथक्प्राशनंच॥कर्णवेधेगायत्रीत्रिष्टुबित्यादिपृथक्॥ चौलेपिउष्णेनवायउदकेनेत्यादिपृथगेवकुर्यात्॥
यद्येकःपुमानेकास्त्रीचेत्तदाअनयोःकुमारयोरित्येवंसंकल्पः ॥पुरुषस्योक्तप्रकारेणसंस्कारस्समंत्रकः ॥ स्त्रियास्त्वमंत्रकए
व ॥ उभेयदिकन्ये ॥ अनयोः कुमार्योरितिसंकल्पः ॥ तूष्णीमेवसंस्कारः ॥ उपनयनेतु ॥ पृथङ्मंत्रंवाचयित्वोपवीतधा

रणं ॥ होमोपिपृथक् ॥आयुर्दाअग्नइत्यादिसर्वंपृथक्पृथग्वाचयित्वापृथगेवहोमवस्त्रदंडादिधारणंकारयित्वागायत्र्युपदे
शोपस्थाननामग्रहादिसर्वंपृथगेवकुर्यात् ॥ गर्भाधानादिविष्णुबल्यंतेषुहोमादिकंसर्वंजननानंतरमपिसकृदेव ॥ यमल
जननशांतिस्तुशौनकीयेपारिजातादौद्रष्टव्या ॥ इतिव्यंकटेशकृतौप्रयोगमालायांगर्भाधानादिचौलांतानामाभिन्नतंत्रप्र
योगस्समाप्तः ॥ ७ ॥ ॥ ७ ॥ ॥ यदिनामकरणंद्वादशाहाद्युक्तदिनेकरोतितस्मिन्नेवादिनेउपनिष्क्रमणा
न्नप्राशनकर्णवेधनान्यप्यपकृष्यकर्तव्यानीत्युक्तं ॥ तथाचपुराणे ॥ द्वादशेहनिराजेंद्रशिशोर्निष्क्रमणंगृहादिति ॥ द्वाद
शेहनिराजेंद्रयथेष्टंमंगलंकुलइतिवचनाच्च ॥ मंगलमन्नप्राशनं ॥ निष्क्रमणंद्वादशेह्नितृतीयेवामासिचतुर्थेवाकुर्यादिति
स्मृत्यर्थसारोक्तेः ॥ वेध्यौकर्णौद्वादशेषोडशेन्हीतिमदनरत्नेवसिष्ठश्रीधरवचनाच्च ॥ इत्यादिवचनपर्यालोचनयाद्वादशे
हनिनामकरणोपनिष्क्रमणान्नप्राशनकर्णवेधनानामपिविहितत्त्वादन्नप्राशनस्यतदंतर्वर्त्तित्वान्नामकरणदिनेप्यपकृष्यक
र्तव्यानि ॥ एतदपितत्तन्मुख्यकालेकर्तुमशक्तपरमितिज्ञेयं ॥ अथयदिद्वादशादिदिनेकर्णवेधांतानिनामकरणेनसह क
रोति ॥ अथवाअतीतवशात्समानतंत्रेणकरोतितत्प्रयोगप्रचारार्थंसमानतंत्रप्रयोगोलिख्यते ॥ अथगर्भाधानादि
कर्मणामेकैकस्यद्वयोत्र्यादीनांवाप्रमादादिनालोपेउत्तरोत्तरकर्मकालेलुप्तकर्मणांकालातिक्रमप्रायश्चित्तंकृत्वोत्तरेणसहस
मानतंत्रेणकार्याणि ॥ सर्वेषांलोपेतूपनयनकालेप्रायश्चित्तपूर्वकंकर्तव्यानि ॥ पूर्वोकरणेह्युत्तरस्मिन्नधिकाराभावात् ॥
उत्तरस्यप्राप्तकालत्वेनपूर्वेषांतत्तत्कालकर्तव्यतायाअर्थसिद्धत्वात् ॥ तदुक्तंत्रिकांडमंडनेन ॥ कालातीतेषुकार्येषुप्राप्तव

त्स्वपरेषुच ॥ कालातीतानिकृत्वैवविदध्यादुत्तराणितु ॥ एतदभिप्रायेणैवपूंसवनानुवृत्तौजातूकर्ण्यः ॥ व्यक्तेगर्भेभवे
त्कार्यंसीमंतेनसहाथवेति ॥ जन्मनोनंतरामित्युदाहृतबीजवापवचनमप्येतदभिप्रायं ॥ मदनरत्ने ॥ अन्नप्राशनकाले
वाकुर्यान्निष्क्रमणक्रियामिति ॥ मनुः ॥ जातकर्मादिसंस्काराः स्वकालेनभवंतिचेत् ॥ चौलादर्वाक्प्रकुर्वीतप्रायश्चित्ता
दनंतरं ॥ गृह्यसूत्रे ॥ अथतुसंवेशनादिजन्मप्रभृतिवाकुमारः क्रियाभिर्लुप्तःस्यादुपनयनंचैकंस्यादिति ॥ उपनयनंलुप्त
गर्भाधानंचैककालकर्तव्यत्वादेकंस्यात् (एकप्रयोगापन्नंस्यादित्यर्थः) एतेषामुपनयनकालेनुष्ठानेपक्षद्वयंफलितं ॥काल
कर्त्रैक्येपिवचनात्पृथक्पृथक्स्थंडिलानिकृत्वादशसंस्काराः कालातिपत्तिप्रायश्चित्तपूर्वकंपृथक्पृथक्प्रयोक्तव्याइत्येकः
पक्षः॥अथवैकस्मिन्नेवस्थंडिलेकालातिपत्तिप्रायश्चित्तपूर्वकंप्रधानादौप्रधानादौद्वेद्वेमिंदाहुतीर्हुत्वातंत्रेणैवकार्याइत्यपरः॥
अत्रगृह्यसूत्रं ॥ तासांपृथक्पृथक्क्रियाणांकरणंनचैकहोमेसर्वाणिकर्माण्युपपातयेद्यद्येकहोमेसर्वाणिकर्माण्युपपातयेत्प्र
धानादौप्रधानादौद्वेद्वेमिंदाहुतीर्जुहुयान्मिंदाहुतीर्हुत्वाजयाभ्यातान्रुद्राहुत्यंतेचविज्ञायतइति ॥ कालातिपन्नप्रायश्चित्त
पूर्वकंसमानतंत्रमुक्तंप्रायश्चित्तप्रश्ने ॥ ततम्मआपोयत्पाकत्रामनस्वतिमिंदाहुतीर्महाव्याहृतीश्चप्रायश्चित्तंजुहुयात् ॥
कालातिक्रमेप्रधानादौप्रधानादौद्वेद्वेमिंदाहुतीर्जुहुयाद्व्याहृतिपूर्वकंचेति ॥ कल्पसारकारिकायामपि ॥ यदिपूंसवना
दीनिनकृतान्युपनायनात् ॥तत्तत्संस्कारयेत्तत्रप्रायश्चित्ताहुतीस्त्वियं॥पृथक्तंत्रास्तुसंस्कारास्तंत्रैक्येजुहुयादिमाः ॥ ज
याभ्यातानहोमाश्चरुद्राहुत्यंतकाश्चते ॥ततम्मआपइत्येकायत्पाकत्रामनस्वती॥महाव्याहृतयश्चेतिकालातिक्रमउच्यते

प्रधानादौप्रधानादौह्वेमिंदाहुतीस्मृते ॥ व्याहृत्याहुतिपूर्वंचेत्तत्रैतानितुतंत्रतइति ॥ विष्णुभट्टोपि ॥ अथयादिसमानतं
त्राणिकालातिक्रमप्रायश्चित्तंहुत्वानंतरंप्रधानमुपहोमंचकृत्वापुनरप्यतिपातप्रधानमुपहोमइति ॥ कुमारस्वामिकारि
कायां ॥ मखांतेजुहुयादाज्यंस्रुवेणैवाहुतीरिमाः ॥ जयाभ्यातानमंत्रैस्तुरुद्राहुत्यंतकैस्स्मृताः ॥ ततंमआपोयत्पाकत्रा
मनोज्योतिरेवच ॥ महाव्याहृतयश्चेतिकालातिक्रमईरिताः ॥ हुत्वापृथक्पृथक्पादमर्धंचौलेसमाचरेत् ॥ इतिकात्यायन
वचनात् ॥ (पादंपादकृच्छ्रमर्धमर्धकृच्छ्रमित्यर्थः )केचित्तु ॥ प्रायश्चित्तेकृतपश्चादतीतमपिकर्मवै ॥ कार्यमित्येकआचार्या
नेत्यन्येतुविपश्चितइति ॥ अनेनप्रायश्चित्तहोमेकृतेलुप्तंकर्मकृताकृतमित्याहुः॥तत्तुच्छं ॥कात्यायनस्तु ॥ लुप्तकर्माणिसर्वं
त्रप्रायश्चित्तंसमाचरेत्॥प्रायश्चित्तेकृतेपश्चाल्लुप्तंकर्मसमाचरेदितिवचनात्प्रायश्चित्तहोमेकृच्छ्रेचकृतेपिलुप्तानांकर्मणांपुनः
करणत्वमुक्तं ॥ अकरणेबहुवचनविरोधः ॥ इतिसमानतंत्रनिर्णयः ॥ ५ ॥ ॥ अथगर्भाधानादिसमानतंत्रप्रयोगः॥
गर्भाधानाद्यतीतानुसारेणोत्तरत्रतत्तदुक्तकालक्रियमाणकर्मणासहकालातिपत्तिप्रायश्चित्तपूर्वकंगर्भाधानादिवाजातकर्मा
दिवाकुर्यात् ॥ अथवायद्युक्तद्वादशाहादौनामकरणदिनेअतिक्रांतगर्भाधानादिकंकर्णवेधनांतंचकर्मापकृष्यकरोति ॥
तदागर्भाधानादिजातकर्मांतकर्मणांमुख्यकालातिपत्तिप्रायश्चित्तंकृत्वातत्तत्प्रधानहोमानुपहोमांश्चहुत्वानामकरणादिकं
कुर्यात् ॥ एवंनिष्क्रमणादावपिज्ञेयं ॥ सर्वेषुलुप्तेषुचौलकालेवोपनयनकालेवाप्रायश्चित्तपूर्वकंतत्सर्वंकुर्यात् ॥ यथा ॥
पूर्वेद्युर्नित्यकर्मकृत्वावैश्वदेवंहुत्वागणपतिंसंपूज्यनांदीसमाराधनंकर्तुंपुण्याहवाचनंकरिष्यइतिसंकल्प्य तत्कृत्वापुनःप्रा

णानायम्यदेशकालौसंकीर्त्यममकुमारस्यश्वःकरिष्यमाणगर्भाधानपूंसवनसीमंतविष्णुबलिजातकर्मनामकरणोपनिष्क्र
मणान्नप्राशनकर्णवेधनचौलकर्मणामंगलत्वेनविहितंनांदीसमाराधनंहिरण्येनकरिष्यइतिसंकल्प्य॥तत्कृत्वातस्यामेवरात्रा
वुदकशांतिप्रतिसरबंधौचकृत्वापरेद्युः प्रातर्मंगलस्नानादिनित्यकर्मकृत्वापवनमंत्राचमनमंत्रप्रोक्षणानिचकृत्वागणपतिंसं
पूज्यवेधाः प्रजापतिर्धातासवितामृत्युस्सवितासवितासविताश्रोत्रकेशिनःप्रीयंतामितिपुंण्याहंवाचयित्वाप्रधानसंकल्पंकृ
त्वातत्तत्कर्मकुर्यात् ॥ पूर्वेद्युरसंभवेसद्योवाप्रातर्मंगलस्नानादिवैश्वदेवनांद्युदकशांतिप्रतिसरबंधांश्चकृत्वापुनःस्नानपवना
दिकंकृत्वाप्रधानकर्मकुर्यात् ॥ यथा ॥ कर्तापत्नीपुत्रसहितःप्रातर्मंगलस्नानादिवैश्वदेवांतंनित्यकर्मकृत्वाप्राणानायम्यदे
शकालौसंकीर्त्य ममकुमारस्याद्यकरिष्यमाणगर्भाधानपूंसवनसीमंतविष्णुबलिजातकर्मनामकरणोपनिष्क्रमणान्नप्राश
नकर्णवेधनचौलकर्मकर्तुंशरीरशुद्ध्यर्थंस्नानपवनमंत्राचमनमंत्रप्रोक्षणानिकरिष्ये ॥ इतिसंकल्प्यतत्कृत्वागणपतिंसंपू
ज्यनांदीसमाराधनकर्मणः पुंण्याहंस्वस्तिऋद्धिमितिवाचयित्वानांदीमुखाः पितरःप्रीयंतामितिवाचयित्वापुनः प्राणाना
यम्यदेशकालौसंकीर्त्यममकुमारस्यकरिष्यमाणगर्भाधानपूंसवनसीमंत ⁘ चौलकर्मणामंगलत्वेनविहितंनांदीसमाराध
नंहिरण्येनकरिष्यइतिसंकल्प्य॥ तत्कृत्वापुनराचमनप्राणायामादिकंकृत्वाममकुमारस्याद्यकरिष्यमाणगर्भाधान ⁘ चौ
लकर्मकर्तुंपुंण्याहवाचनंकरिष्यइतिसंकल्प्य॥ममकुमारस्याद्यकरिष्यमाणगर्भाधानपूंसवनसीमंतविष्णुबलिजातकर्मना
मकरणोपनिष्क्रमणान्नप्राशनकर्णवेधनचौलकर्मणांपुंण्याहंभवंतोब्रुवंतु ॥ कर्मभ्यः स्वस्तिभवंतोब्रुवंतु ॥ कर्मणांऋद्धिंभवं

तोन्नुवंतु ॥ वेधाप्रजापतिर्धातासवितामृत्युस्सवितासवितासविताश्रोत्रकेशिनःश्रीयंतामितिवाचयित्वा ॥ प्रोक्षणांतंकृत्वाच
म्यप्राणानायम्यदेशकालौसंकीर्त्य॥ममकुमारस्यबीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुः श्रीबलवृद्धिद्वाराश्रीपरमेश्वर
प्रीत्यर्थंगर्भाधानपूंसवनसीमंतविष्णुबलिजातकर्मनामकरणोपनिष्क्रमणान्नप्राशनकर्णवेधनचौलकर्माणिसमानतंत्रेणक
रिष्यइतिसंकल्प्यजातकर्मतंत्रंकुर्यात् ॥ यथा ॥ कुमारंस्पृष्ट्वापश्यन्जपति ॥ अद्भ्यःसंभूतःपृथिव्यैरसाच्च ॥ विश्वकर्मणस्स
मवर्तताधि ॥ तस्यत्वष्टाविदधद्रूपमेति ॥ तत्पुरुषस्याविश्वमाजानमग्रे ॥ वेदाहमेतंपुरुषंमहांतं ॥ आदित्यवर्णंतमसःप
रस्तात् ॥ तमेवंविद्वानमृतइहभवति ॥ नान्यःपंथाविद्यतेयनाय ॥ प्रजापतिश्चरतिगर्भेअंतः ॥ अजायमानोबहुधावि
जायते ॥ तस्यधीराःपरिजानंतियोनिं ॥ मरीचीनांपदमिच्छंतिवेधसः ॥ योदेवेभ्यआतपति ॥ योदेवानांपुरोहितः ॥
पूर्वोयोदेवेभ्योजातः ॥ नमोरुचायब्राह्मये ॥ रुचंब्राह्मंजनयंतः ॥ देवाअग्रेतदब्रुवन् ॥ यस्त्वैवंब्राह्मणोविद्यात् ॥ तस्य
देवाअसन्वशे ॥ ऱ्हीश्चतेलक्ष्मीश्चपत्न्यौ ॥ अहोरात्रेपार्श्वे ॥ नक्षत्राणिरूपं ॥ अश्विनौव्यात्तं ॥ इष्टंमनिषाण ॥ अमुंम
निषाण ॥ सर्वंमनिषाण ॥ इत्येतेनाभिमंत्र्याथकुमारंस्नापयति ॥ क्षेत्रियैत्वानिर्ऋत्यैत्वा ॥ द्रुहोमुंचामिवरुणस्यपाशात्
॥ अनागसंब्रह्मणेत्वाकरोमि ॥ शिवेतेद्यावापृथिवीउभेइमे ॥ १ ॥ शंतेअग्निस्सहाद्भिरस्तु ॥ शंद्यावापृथिवीसहौषधीभिः
॥ शमंतरिक्षंसहवातेनते ॥ शंतेचतस्त्रःप्रदिशोभवंतु ॥२॥ यादेवीश्चतस्त्रःप्रदिशः ॥ वातपत्नीरभिसूर्योविचष्टे ॥ तासां
त्वाजरसआदधामि ॥ प्रयक्ष्मएतुनिर्ऋतिंपराचैः ॥ ३ ॥ अमोचीयक्ष्मदुरितादवर्त्यै ॥ द्रुहःपाशान्निर्ऋत्यैचोदमोचि ॥

अहाअवर्तिमविदत्स्योनं ॥ अप्यभूद्भद्रेसुकृतस्यलोके ॥ ४ ॥ सूर्यमृतंतमसोग्राह्यायत् ॥ देवाअमुंचन्नसृजान्व्येनसः ॥
एवमहमिमंक्षेत्रियाज्जामिशगुँसात् ॥ द्रुहोमुंचामिवरुणस्यपाशात् ॥ ५ ॥ बृहस्पतेयुवमिंद्रश्चवस्वः ॥ दिव्यस्येशाथे
उतपार्थिवस्य ॥ धत्तगुँरयिगुँस्तुवतेकीरयेचित् ॥ यूयंपातःस्वस्तिभिस्सदानः ॥ ६॥ इतिषड्भिःस्नापयित्वाथकुमारंस्वां
कउपवेशयति ॥ अंगादंगात्संभवसिहृदयादधिजायसे ॥ आत्मावैपुत्रनामासिसजीवशरदःशतं॥ इत्यथकुमारंमूर्ध्न्यभिजि
घ्रति ॥ अश्माभवपरशुर्भवहिरण्यमस्तृतंभव ॥ पशूनांत्वाहिंकारेणब्रह्मणाभिजिघ्राम्याश्विन ॥ आपभरण ॥ कार्तिक ॥
रौहिण ॥ मार्गशीर्ष ॥ आर्द्रक ॥ पुनर्वसो ॥ तिष्य ॥ आश्लेष ॥ माघ ॥ पूर्वाफल्गुन ॥ उत्तराफल्गुन ॥ हस्त ॥ चैत्र
॥ स्वाते ॥ विशाख ॥ अनूराध ॥ ज्येष्ठ ॥ मूलक ॥ पूर्वाषाढ ॥ उत्तराषाढ ॥ श्रावण ॥ श्रविष्ठ ॥ शातभिषज ॥ पूर्वाप्रो
ष्ठपद ॥ उत्तराप्रोष्ठपद ॥ रैवत ॥ इत्यसौपदस्थानेनक्षत्रनामसंबुध्यंतमुक्त्वा॥अथकुमारस्यदक्षिणेकर्णेजपति॥ अग्निरायु
ष्मान्त्सवनस्पतिभिरायुष्मान्तेनत्वायुषायुष्मंतंकरोमि॥सोमआयुष्मान्त्सओषधीभिरायुष्मान्तेनत्वायुषायुष्मंतंकरोमि
॥ यज्ञआयुष्मान्त्सदक्षिणाभिरायुष्मान्तेनत्वायुषायुष्मंतंकरोमि ॥ ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तेनत्वायुषायुष्मंतंकरोमि॥
देवाआयुष्मन्तस्तेमृतेनायुष्मन्तस्तेनत्वायुषायुष्मंतंकरोमि ॥ अथवामकर्णेजपति ॥आयुष्टेविश्वतोदधदयमग्निर्वरेण्यः॥
पुनस्तेप्राणआयतिपरायक्ष्मगुँसुवामिते ॥ इति ॥ अथदधिमधुघृतमितिसमुदायुत्यहिरण्येनकुमारंप्राशयति ॥ प्राणो
रक्षतिविश्वमेजत् ॥ इर्योभूत्वाबहुधाबहूनि ॥ सइत्सर्वंव्यानशे ॥ १ ॥ योदेवोदेवेषुविभूरंतः ॥ आवृदूदात्क्षेत्रियध्वगद्वृ

षा ॥ तस्मिन्प्राणंमनसोपाशिक्षत ॥ अग्रंदेवानामिदमत्तुनोहविः ॥ २ ॥ मनसश्चित्तेदं ॥ भूतंभव्यंचगुप्यते ॥ तद्धिदेवे
ष्वग्रियं ॥ ३ ॥ आनएतुपुरश्चरं ॥ सहदेवैरिमगुँहवं ॥ मनःश्रेयसिश्रेयसि ॥ कर्मन्यज्ञपतिंदधत् ॥ ४ ॥ जुषतांमेवा
गिदगुँहविः ॥ विराड्देवीपुरोहिता ॥ हव्यवाडनपायिनी ॥ ५ ॥ ययारूपाणिबहुधावदंति ॥ पेशागुँसिदेवाःपरमेज
नित्रे ॥ सानोविराडनपस्फुरंती ॥ वाग्देवीजुषतामिदगुँहविः ॥ ६ ॥ चक्षुर्देवानांज्योतिरमृतेन्यक्तं ॥ अस्यविज्ञायबहु
धानिधीयते ॥ तस्यसुम्नमशीमहि ॥ मानोहासीद्विचक्षणं ॥ ७ ॥ आयुरिन्नःप्रतीर्यतां ॥ अनंधाश्चक्षुषावयं ॥ जीवाज्ज्यो
तिरशीमहि ॥ सुवर्ज्योतिरुतामृतं ॥ ८ ॥ श्रोत्रेणभद्रमुतशृण्वंतिसत्यं ॥ श्रोत्रेणवाचंबहुधोद्यमानां ॥ श्रोत्रेणमोदश्चमह
श्चश्रूयते ॥ श्रोत्रेणसर्वादिशआशृणोमि ॥ ९ ॥ येनप्राच्याउतदक्षिणा ॥ प्रतीच्यैदिशः शृण्वंत्युत्तरात् ॥ तदिच्छ्रोत्रं
बहुधोद्यमानं ॥ अरान्ननेमिःपरिसर्वंबभूव ॥ १० ॥ इतिदशभिःप्राशयित्वा ॥ तदवशिष्टंगोष्ठेनिनयति ॥ ॐभूर्भुव
स्सुवरित्यथैनंमातुरुत्संगआदधाति ॥ सीदत्वंमातुरस्याउपस्थेविश्वान्यग्नेवयुनानिविद्वान् ॥ मैनामर्चिषामातपसाभि
शूशुचोंतरस्यागुँशुक्रज्योतिर्विभाहि ॥ १ ॥ अंतरग्नेरुचात्वमुखायेसदनेस्वे ॥ तस्यास्त्वगुँहरसातपंजातवेदःशिवोभव
॥ २ ॥ शिवोभूत्वामह्यमग्नेथोसीदशिवस्त्वं ॥ शिवाःकृत्वादिशःसर्वास्स्वांयोनिमिहासदः ॥ ३ ॥ हगुँसश्शुचिषद्वसुरंतरि
क्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतंबृहत् ॥ ४ ॥ इतिचतसृभिः
॥ इतःपरंमंत्रावृत्तिरेव ॥ अर्थलोपात् ॥ अर्थलुप्तेष्वनादरइतिप्रायाश्चित्तप्रकरणेउक्तत्वात् ॥ यस्तेस्तनःशशयोयोमयो

भूर्येनविश्वापुष्यसिवार्याणि ॥ योरत्नधावसुविद्यस्सदत्रस्सरस्वतितमिहधातवेकः ॥ द्यौस्तेपृष्ठगुँरक्षतुवायुरूरूअश्विनौ
चस्तनंधयंतगुँसविताभिरक्षत्वाससःपरिधानाद्बृहस्पतिर्विश्वेदेवाअभिरक्षंतुपश्चात् ॥ आपःसुप्तेषुजाग्रतोरक्षागुँसिनिर
तोनुदध्वं ॥ इतिमंत्रान्जपित्वाथास्यकुमारस्यगर्भाधानपूंसवन ÷ चौलहोमंकर्तुंस्थंडिलोल्लेखनाख्यंकर्मकरिष्ये ॥ इ
तिसंकल्प्य ॥ तत्कृत्वाऔपासनैकदेशाग्निंप्रतिष्ठाप्य ॥ सद्यस्संधानपक्षेसमस्ताग्निरेवनत्वेकदेशः ॥ द्विराचम्यप्राणानाय
म्यदेशकालौसंकीर्त्यममकुमारस्यबीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुःश्रीबलवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंगर्भाधा
नपूंसवनसीमंतविष्णुबलिजातकर्मनामकरणोपनिष्क्रमणान्नप्राशनकर्णवेधनहोमान्कालातिपन्नप्रायश्चित्तहोमपूर्वकस
समानतंत्रेणकरिष्ये॥ गर्भाधानपूंसवन ÷ चौलहोमःकर्माधारवत्तंत्रेपंचदशदारुरिध्मःअग्नीषोमावाज्यभागौमारुतश्चंद्र
मामंगलःशोभनःप्रबलःपार्थिवःशिवःशुचिर्वर्धमानःसद्यचोनामाग्नयः॥ वेधाप्रजापतिर्धातासवितामृत्युःसवितासवितास
वित्ताश्रोत्रकेशिनोदेवताः चरुर्हविरग्निः स्विष्टकृदाज्यस्यमांत्रवर्णिक्योदेवताअंगदेवताःप्रधानदेवतास्तास्सर्वास्सन्निहि
तास्संतुएवंसांगेनकर्मणासद्योयक्ष्ये॥तदंगमन्वाधानंकरिष्येइतिसंकल्प्य॥अन्वाधानादिकंकृत्वाप्राकृतपात्रैस्सहक्षुरंदर्भा
न्शीतोष्णोदकेसूचिंलोहितसूत्रमितिसकृदेवासाद्यप्रणीतासादनांतंकृत्वाग्ने : पूर्वभागेतंडुलपुंजेषुहरे : प्रतिमामालिख्यगं
धाक्षतपुष्पैरवकीर्य॥ ममकुमारस्यरक्षार्थमायुःश्रीबलवृद्ध्यर्थंश्रीपरमेश्वरप्रीत्यर्थंविष्णुपूजांकरिष्ये॥ गंधपुष्पोदकानिगृ
हीत्वा॥ॐभूःपुरुषमावाहयामि॥ॐभुवःपुरुषमावाहयामि ॥ ॐसुवःपुरुषमावाहयामि ॥ ॐभूर्भुवस्सुवःपुरुषमावाहया

मीत्यावाह्यस्वागतंपुनरागतंभगवतोमहापुरुषस्यैतदासनमुपक्लृप्तमत्रास्तांभगवन्महापुरुष॥ भगवतोयंकूर्चोदर्भमयस्त्रि
वृद्धरितस्सुवर्णस्तंजुषस्वेतिकूर्चंदत्वासपवित्रेपात्रेपआनीयगंधपुष्पाक्षता न्निक्षिप्यगायत्र्या भिमंत्र्यओमित्यादित्यंदर्श
यित्वा॥ त्रीणिपदाविचक्रमेविष्णुर्गोपाअदाभ्यः॥ अतोधर्माणिधारयन्नितिपाद्यंदत्वाप्रणवेनार्घ्यंदत्वाचरुंनिर्वपति ॥ ॐदे
वस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यां॥वेधसेजुष्टंनिर्वपामि॥एवंसर्वत्रत्रिर्मंत्रेणतूष्णींचतुर्थं॥देवस्यत्वा * ह
स्ताभ्यां॥ प्रजापतयेजुष्टंनिर्वपामि॥ देवस्यत्वा॰॥॰धात्रेजुष्टंनिर्वपामि॥ देवस्यत्वा॰॥॰सवित्रेजुष्टंनिर्वपामि॥ देवस्यत्वा॰॥॰
मृत्यवेजुष्टंनिर्वपामि ॥ सवित्रेजुष्टं ॰॥॰ सवित्रेजुष्टं ॰॥॰ सवित्रेजुष्टं ॰॥॰ श्रोत्रायजुष्टंनिर्वपामि ॥ देवस्यत्वा ॰॥॰ केशिभ्यो
जुष्टंनिर्वपामीतित्रिर्मंत्रेणतूष्णींचतुर्थंनिरूप्य ॥ देवस्यत्वा * हस्ताभ्यां ॥ वेधसेवोजुष्टंप्रोक्ष्यामि ॥ प्रजापतयेवोजुष्टंप्रो
क्ष्यामि ॥ धात्रेवोजुष्टंप्रोक्ष्यामि ॥ सवित्रेवोजुष्टं ॥ मृत्यवेवोजुष्टं ॥ सवित्रेवोजुष्टं ॥ सवित्रेवोजुष्टं ॥ सवित्रेवोजुष्टं ॥ श्रोत्राय
वोजुष्टंप्रोक्ष्यामि॥ केशिभ्योवोजुष्टंप्रोक्षामीतिसकृन्मंत्रेणद्विस्तूष्णींप्रोक्ष्याज्यसंस्काराद्यग्निमुखांतंकृत्वाविष्णुंस्नापयति ॥
आपोहिष्ठेतितिसृभिर्हिरण्यवर्णाइतिचतसृभिः पवमानस्सुवर्जनइत्येतेनानुवाकेनमार्जयित्वाथाद्भिस्तर्पयाति ॥ केशवंतर्प
यामि ॥ नारायणंतर्पयामि ॥ माधवंतर्पयामि ॥ गोविंदंतर्पयामि ॥ विष्णुंतर्पयामि ॥मधुसूदनंतर्पयामि ॥ त्रिविक्रमं
तर्पयामि ॥ वामनंतर्पयामि ॥ श्रीधरंतर्पयामि ॥ हृषीकेशंतर्पयामि ॥ पद्मनाभंतर्पयामि ॥ दामोदरंतर्पयामीतितर्प
यित्वाएतैरेवनामधेयैर्गंधपुष्पाक्षतधूपदीपैरर्चयाति ॥ यथा ॥ केशवनारायणमाधवगोविंदाविष्णुमधुसूदनत्रिविक्रमवामन

श्रीधरहृषीकेशपद्मनाभदामोदरेभ्योनमः॥ इदंविष्णुः ॥ गंधान्समर्पयामि॥ तद्विष्णोः परमं ॥ केशवनारायण ÷ दामोदरेभ्योनमः॥ पुष्पाणिसमर्पयामि॥ इरावतीधेनुमती ॥ केशव ÷ दामोदरेभ्योनमः॥ अक्षतान्समर्पयामि॥ तत्सवितुः ॥ केशव ÷ दामोदरेभ्योनमः॥ धूपमाघ्रापयामि॥ उद्दीप्यस्व ॥ केशव ÷ दामोदरेभ्योनमः॥ दीपंदर्शयामीतिपंचोपचारान्कृत्वाथातिपन्नसंस्काराणांकालातिपन्नप्रायश्चित्तंकुर्यात्॥ ममकुमारस्यगर्भाधान ÷ चौलकर्मणांमुख्यकालातिपन्नप्रायश्चित्तार्थंकृच्छ्रत्रयपूर्वकंकालातिपत्तिप्रायश्चित्तहोमंकरिष्येइतिसंकल्प्य॥ कृच्छ्रप्रत्याम्नायगोत्रयंतन्मूल्यंवाब्राह्मणेभ्योदत्वाहोमंकुर्यात्॥चित्तंचस्वाहेत्यादित्रयोदशस्त्रुवाहुतीर्हुत्वा॥अग्निर्भूतानामित्यादिरुद्रःपशूनामित्यंतंहुत्वापउपस्पृश्य॥ ततंमआपस्तदुतायतेपुनः॥ स्वाधिष्ठाधीतिरुचथायशस्यते॥ अयगुँसमुद्रउतविश्वभेषजः॥ स्वाहाकृतस्यसमुतृप्णुतर्भवःस्वाहा॥ऋभुभ्यइदं॥यत्पाकत्रा॥अग्नयइदं॥मनोज्योतिर्जुषतां॥मनसेज्योतिषइदं॥ यन्मआत्म॥पुनरग्निः॥महाव्याहृतीर्जुहुयात्॥ इतआरभ्यसर्वत्रप्रधानादौप्रधानादौद्वेद्वेमिंदाहुतीर्व्याहृतीश्चजुहुयात्॥यन्मआत्मनः॥पुनरग्निः॥ व्याहृतीर्हुत्वास्त्रुवेणदर्व्यामुपस्तीर्यपूर्वार्धाच्चरोरवदायापरार्धादवद्याति॥ पंचावत्तिनांतुमध्यात्पूर्वार्धादपरार्धादितित्रिरवदायाभिघारयतिप्रत्यनक्तिपुरस्तात्स्त्रुवाहुतिंहुत्वा॥ ॐप्रवेधसेकवयेमेध्यायवचोवंदारुवृषभायवृष्णे॥ यतोभयमभयंतन्नोअस्त्वववदेवान्यजेहेड्यों प्रवेधसे ÷ हेड्यान्स्वाहा॥ वेधसइदं॥ उपरिष्टात्स्त्रुवाहुतिंहुत्वाथपक्कावशिष्टचरुंमेक्षणेनगृहीत्वाजुहोति॥ यस्त्वेत्यादित्रिभिः॥ ॐयस्त्वाहृदाकीरिणामन्यमानोमर्त्यंमर्त्योजोहवीमि॥ जातवेदोयशोअ

स्मासुधेहिप्रजाभिरग्नेअमृतत्वमश्यांगुँस्वाहा॥ जातवेदसेग्नयइदं॥ ॐयस्मैत्वगुँसुकृतेजातवेदउलोकमग्नेकृणुवस्योनं॥ अ
श्विनगुँसुपुत्रिणंवरिवंतंगोमंतगुँरयिन्नशतेस्वस्तिस्वाहा॥ जातवेदसेग्नयइदं॥ ॐत्वेसुपुत्रशवसोवृत्रहन्कामकातयः॥ न
त्वामिंद्रातिरिच्यतेस्वाहा ॥ इंद्रायेदं ॥ इतितिसृभिरन्नंहुत्वाथाज्याहुतीरुपजुहोति ॥ ॐज्येष्ठायस्वाहा ॥ ज्येष्ठायेदं ॥
ॐश्रेष्ठायस्वाहा॥ श्रेष्ठायेदं॥ ॐप्रतिष्ठायस्वाहा॥ प्रतिष्ठायेदं॥ ॐप्रतिष्ठित्यैस्वाहा॥ प्रतिष्ठित्याइदं॥ ॐसंपत्त्यैस्वाहा॥
संपत्त्याइदं॥ ॐसंपतयेस्वाहा॥ संपतयइदं॥ ॐब्रह्मणेस्वाहा॥ ब्रह्मणइदं॥ ॐआयतनवतेस्वाहा॥ आयतनवतइदं॥ इ
त्यष्टभिर्हुत्वाव्याहृतीर्हुत्वापुनर्मिंदाहुतीर्हुत्वास्त्रुवेणदर्व्यामुपस्तीर्य॥ द्वितीयाद्यवदानेतुअपरार्धादवदायपूर्वार्धादवद्यति॥
पंचावत्तिनांतुमध्यादपरार्धात्पूर्वार्धादित्यवदानंअभिघारयतिप्रत्यनक्तिपुरस्तात्स्त्रुवाहुतिंहुत्वा ॥ ॐप्रजापतेतनुवंमेजुष
स्वत्वष्टुर्देवेभिस्सहसामइंद्र॥ विश्वैर्देवैररातिभिस्सगुँरराणःपुगुँसांबहूनांमातरस्यामों प्रजापतेतनुवंमे ॥ स्यामस्वाहा॥
प्रजापतयइदं ॥ उपरिष्टात्स्त्रुवाहुतिंहुत्वाथाज्याहुतीरुपजुहोति॥ ॐगर्भोअस्योषधीनांगर्भोवनस्पतीनां॥ गर्भोविश्वस्य
भूतस्याग्नेगर्भोअपामसिस्वाहा ॥ अग्नयेगर्भायेदं ॥ १ ॥ ॐप्रसद्यभस्मनायोनिमपश्चपृथिवीमग्ने ॥ सगुँसृज्यमातृभि
स्त्वंज्योतिष्मान्पुरासदःस्वाहा ॥ अग्नयेज्योतिष्मतइदं ॥ २ ॥ ॐपुनरासद्यसदनमपश्चपृथिवीमग्ने ॥ शेषेमातुर्यथोपस्थें
तरस्यांगुँशिवतमःस्वाहा ॥ अग्नयइदं ॥ ३ ॥ इतितिसृभिरुपहुत्यव्याहृतीर्हुत्वामिंदाहुतीर्हुत्वासीमंतपक्वहोमंकुर्यात् ॥
स्त्रुवेणदर्व्यामुपस्तीर्यापरार्धाच्चरोरवदायपूर्वार्धादवद्यत्यभिघारयतिप्रत्यनक्तिपुरस्तात्स्त्रुवाहुतिंहुत्वा ॐधातादददातुनोर

यिमीशानोजगतस्पतिः ॥ सनःपूर्णेनवावनों धाताप्रजायाउतरायईशेधातेदंविश्वंभुवनंजजान ॥ धातापुत्रंयजमानायदाता
तस्माउहव्यंघृतवद्विधेमस्वाहा ॥ धात्रइदं ॥ उपरिष्टात्स्रुवाहुतिंहुत्वाथाज्याहुतीरुपजुहोति ॥ ॐधाताददातुनोरयिंप्राचीं
जीवातुमक्षितां ॥ वयंदेवस्यधीमहिसुमतिगुँसत्यराधसःस्वाहा ॥ धात्रइदं ॥१॥ ॐधाताददातुदाशुषेवसूनिप्रजाकामाय
मीढुषेदुरोणे ॥ तस्मैदेवाअमृतास्संव्ययंतांविश्वेदेवासोअदितिस्सजोषाःस्वाहा ॥ धात्रेविश्वेभ्योदित्याइदं ॥ २ ॥ ॐअनु
नोद्यानुमतिर्यज्ञंदेवेषुमन्यतां ॥ अग्निश्चहव्यवाहनोभवतांदाशुषेमयःस्वाहा ॥ अनुमत्याइदं ॥ ३ ॥ ॐअन्विदनुमतेत्वं
मन्यासैशंचनःकृधि ॥ क्रत्वेदक्षायनोहिनुप्रणआयुगुँषितारिषःस्वाहा ॥ अनुमत्याइदं ॥ ४ ॥ ॐअनुमन्यतामनुमन्य
मानाप्रजावंतगुँरयिमक्षीयमाणं ॥ तस्यैवयगुँहेडसिमापिभूमसानोदेवीसुहवाशर्मयच्छतुस्वाहा ॥ अनुमत्यैदेव्याइदं
॥ ५ ॥ ॐयस्यामिदंप्रदिशियद्विरोचतेनुमतिंप्रतिभूषंत्यायवः ॥ यस्याउपस्थउर्वंतरिक्षगुँसानोदेवीसुहवाशर्मयच्छतुस्वा
हा ॥ अनुमत्यैदेव्याइदं ॥ ६ ॥ ॐगुँराकामहगुँसुहवागुँसुष्टुतीहुवेशृणोतुनःसुभगाबोधतुत्मना ॥ सीव्यत्वपःसूच्या
च्छिद्यमानयाददातुवीरगुँशतदायमुक्थ्यगुँस्वाहा ॥ राकायाइदं ॥ ७ ॥ ॐयास्तेराकेसुमतयस्सुपेशसोयाभिर्ददासिदाशु
षेवसूनि ॥ ताभिर्नोअद्यसुमनाउपागहिसहस्रपोषगुँसुभगेरराणास्वाहा ॥ राकायाइदं ॥ ८ ॥ ॐगुँसिनीवालीपृथुष्टुके
यादेवानामसिस्वाहा ॥ जुषस्वहव्यमाहुतंप्रजांदेवीदिदिड्ढिणःस्वाहा ॥ सिनीवाल्याइदं ॥ ९ ॥ ॐयासुपाणिःस्वंगुरिः
सुषूमाबहुसूवरी ॥ तस्यैविश्पत्न्यैहविःसिनीवाल्यैजुहोतनःस्वाहा ॥ सिनीवाल्याइदं ॥ १० ॥ ॐकुहूमहगुँसुभगां

विघ्ननापसमस्मिन्यज्ञेसुहवांजोहवीमि॥ सानोददातुश्रवणंपितृणांतस्यास्तेदेविहविषाविधेमस्वाहा ॥ कुव्हैदेव्याइदं ॥
॥ ११ ॥ कुहूर्देवानाममृतस्यपत्नीहव्यानोअस्यहविषश्चिकेतु ॥ संदाशुषेकिरतुभूरिवामगुँरायस्पोषंचिकितुषेददातुस्वा
हा ॥ कुव्हैदेवानांपत्न्याइदं ॥ १२ ॥ इतिद्वादशभिर्हुत्वाव्याहृतिमिंदाहुतीर्हुत्वाविष्णुबलिपक्कहोमंकुर्यात् ॥ पूर्ववदवदाय॥
ॐ भूर्भुवस्सुवरों॥तत्सवितुः ⁞ दयात्स्वाहा॥ सवित्रइदं॥ अथाज्याहुतीरुपजुहोति ॥ ॐ विष्णोर्नुकं *॥* तदस्यप्रियं *॥*
प्रतद्विष्णुः *॥* परोमात्रया *॥* विचक्रमे *॥* त्रिर्देवः *॥* सर्वत्रविष्णवइदं ॥ इतिषड्भिर्हुत्वाव्याहृतिमिंदाहुतीर्हुत्वा
जातकर्मपक्कहोमंकरिष्ये ॥ पूर्ववदवदायपुरस्तात्स्रुवाहुतिंहुत्वा ॥ ॐहरिगुँहरंतमनुयंतिदेवाविश्वस्येशानंवृषभंमतीनां ॥
ब्रह्मसरूपमनुमेदमागादयनंमाविवधीर्विक्रमस्वोंमाछिदोमृत्योमावधीर्मामेबलंविवृहोमाप्रमोषीः ॥ प्रजांमामेरीरिषआ
युरुग्रनृक्षचसंत्वाहविषाविधेमस्वाहा ॥ मृत्यवइदं ॥ अथाज्याहुतीरुपजुहोति ॥ ॐसद्यश्चकमानाय ॥ प्रवेपानायमृ
त्यवे ॥ प्रास्माआशाअशृण्वन् ॥ कामेनाजनयन्पुनःस्वाहा ॥ मृत्यवइदं ॥ १ ॥ ॐकामेनकामआगात् ॥ हृदयाद्धृद
यंमृत्योः ॥ यदमीषामतःप्रियं ॥ तदेतूपमामभिःस्वाहा ॥ मृत्यवइदं ॥ २ ॥ ॐपरंमृत्योअनुपरेहिपंथांयस्तेस्वइतरोदे
वयानात् ॥ चक्षुष्मतेशृण्वतेतेब्रवीमि ॥ मानःप्रजागुँरीरिषोमोतवीरान्स्वाहा ॥ मृत्यवइदं ॥ ३ ॥ ॐप्रपूर्व्यंमनसावंद
मानः ॥ नाधमानोवृषभंचर्षणीनां ॥ यःप्रजानामेकराण्मानुषीणां ॥ मृत्युंयजेप्रथमजामृतस्यस्वाहा ॥ मृत्यवइदं ॥४॥
इतिचतसृभिर्हुत्वाव्याहृतिमिंदाहुतीर्हुत्वानामकरणपक्कहोमंकरिष्ये ॥ पूर्ववदवदायगायत्र्यापक्कंहुत्वाथाज्याहुतीरुपजुहो

ति ॥ ॐ प्रजापतेनत्वदेतान्यन्यः ॥ प्रजापतयइदं ॥ १ ॥ ॐगुँरयीणांपतिंयजतंबृहंतं ॥ अस्मिन्भरेनृतमंवाजसातौ ॥ प्रजापतिंप्रथमजामृतस्य ॥ यजामदेवमधिनोब्रवीतुस्वाहा ॥ प्रजापतयइदं ॥ २ ॥ प्रजापतेत्वन्निधिपाःपुराणः ॥ देवानांपिताजनिताप्रजानां ॥ पतिर्विश्वस्यजगतःपररूपाः ॥ हविर्नोदेविविहवेजुषस्वस्वाहा ॥ प्रजापतयइदं ॥३॥ ॐतवेमेलोकाःप्रदिशोदिशश्च ॥ परावतोनिवतउद्वतश्च ॥ प्रजापतेविश्वसृज्जीवधन्यः॥ इदन्नोदेवप्रतिहर्यहव्यगुँस्वाहा ॥ प्रजापतयइदं ॥४॥ ॐप्रजापतिंप्रथमंयज्ञियानां॥ देवानामग्रेयजतंयजध्वं ॥ सनोददातुद्रविणगुँसुवीर्यं ॥ रायस्पोषंविष्यतुनाभिमस्मेस्वाहा॥प्रजापतयइदं ॥५॥ ॐयोरायईशेशतदायउक्थ्यः॥यःपशूनांगुँरक्षिताविष्ठितानां॥प्रजापतिःप्रथमजाऋतस्य॥सहस्रधामाजुषतागुँहविर्नःस्वाहा॥प्रजापतयइदं ॥६॥ इतिषड्भिर्हुत्वाव्याहृतिमिंदाहुतीर्हुत्वाउपनिष्क्रमणपक्वहोमंकुर्यात्॥ पूर्ववद्गायत्र्यापक्वंहुत्वाथाज्याहुतीर्जुहोति॥ॐस्वस्तिनोमिमीतामश्विनाभगःस्वस्तिदेव्यदितिरनर्वणः ॥ स्वस्तिपूषाअसुरोददातुनःस्वस्तिद्यावापृथिवीसुचेतुनास्वाहा॥अश्विभ्यांभगायादित्यैपूष्णेद्यावापृथिवीभ्यामिदं ॥१॥ ॐस्वस्तयेवायुमुपब्रवामहैसोमगुँस्वस्तिभुवनस्ययस्पतिः ॥ बृहस्पतिगुँसर्वगणगुँस्वस्तयेस्वस्तयआदित्यासोभवंतुनःस्वाहा ॥ वायवेसोमायभुवनपतयेबृहस्पतयआदित्येभ्यइदं ॥ २ ॥ ॐविश्वेदेवानोअद्यास्वस्तयेवैश्वानरो वसुरग्निःस्वस्तये॥ देवाअवंत्वृभवःस्वस्तयेस्वस्तिनोरुद्रःपात्वगुँहसःस्वाहा ॥ विश्वेभ्योदेवेभ्योवैश्वानरायवसवेग्नयेदेवेभ्योऋभुभ्योरुद्रायेदं ॥ ३ ॥ ॐस्वस्तिमित्रावरुणास्वस्तिपथ्येरेवति ॥ स्वस्तिनइंद्रश्चाग्निश्चस्वस्तिनोअदितेकृधिस्वाहा ॥ मित्रावरुणाभ्यांपथ्यायै

रेवत्याइंद्रायाग्नयेदित्याइदं ॥ ४ ॥ ॐस्वस्तिपंथामनुचरेमसूर्याचंद्रमसाविव ॥ पुनर्ददताघ्नताजानतासंगमेमहिस्वाहा सूर्याचंद्रमोभ्यामिदं॥५॥ॐस्वस्त्ययनंताक्ष्यमरिष्टनेमिंमहद्भूतंवायसंदेवतानां॥असुरघ्नमिंद्रसखंगुँबृहद्यशोनावामिवारुहे मस्वाहा ॥ ताक्ष्यायारिष्टनेमयेअसुरघ्नायेंद्रसखायेदं॥६॥ॐअगुँहोमुचमांगिरसंगयंचस्वस्त्यात्रेयंमनसाचताक्ष्यं॥प्रयत पाणिःशरणंप्रपद्येस्वस्तिसंबाधेष्वभयन्नोअस्तुस्वाहा ॥ आंगिरसायस्वस्त्यात्रेयायताक्ष्यायेदं ॥७॥ ॐस्वस्तिनइंद्रो वृद्धश्रवाः॥स्वस्तिनःपूषाविश्ववेदाः॥स्वस्तिनस्ताक्ष्योअरिष्टनेमिः॥स्वस्तिनोबृहस्पतिर्दधातुस्वाहा ॥ इंद्रायवृद्धश्रवसेपू ष्णेविश्ववेदसेताक्ष्यायारिष्टनेमयेस्वस्त्ययेबृहस्पतयइदं ॥८॥ इत्यष्टभिर्हुत्वान्नप्राशनपक्वहोमंकुर्यात् ॥ पूर्ववद्दायत्र्यापक्वं हुत्वाथाज्याहुतीरुपजुहोति ॥ ॐअहमस्मिप्रथमजाऋतस्य ॥ पूर्वंदेवेभ्योअमृतस्यनाभिः ॥ योमाददातिसइदेवमावाः ॥ अहमन्नमन्नमदंतमद्मिस्वाहा ॥ अन्नायेदं ॥ १ ॥ ॐपूर्वमग्नेरपिदहत्यन्नं ॥ यत्तौहासातेअहमुत्तरेषु ॥ व्यात्तमस्य पशवस्सुजंभं ॥ पश्यंतिधीराःप्रचरंतिपाकास्वाहा ॥ अन्नायेदं ॥ २ ॥ ॐजहाम्यन्यन्नजहाम्यन्नं ॥ अहमन्नंवशमिच्च रामि ॥ समानमर्थंपर्येमिभुंजत् ॥ कोमामन्नंमनुष्योदयेतस्वाहा ॥ अन्नायेदं ॥ ३ ॥ ॐपराकेअन्नंनिहितंलोकएत त् ॥ विश्वैर्देवैःपितृभिर्गुप्तमन्नं ॥ यदद्यतेलुप्यतेयत्परोप्यते ॥ शततमीसातनूर्मेबभूवस्वाहा ॥ अन्नायेदं ॥ ४ ॥ ॐम हांतौचरूसकृद्दुग्धेनपप्रौ ॥ दिवंचपृश्निपृथिवींचसाकं ॥ तत्संपिबंतोनमिनंतिवेधसः ॥ नैतद्भूयोभवतिनोकनीयःस्वा हा ॥ अन्नायेदं ॥ ५ ॥ ॐअन्नंप्राणमन्नमपानमाहुः ॥ अन्नंमृत्युंतमुजीवातुमाहुः ॥ अन्नंब्रह्माणोजरसंवदंति ॥ अन्न

माहु :प्रजननंप्रजानागुँस्वाहा ॥ अन्नायेदं ॥ ६ ॥ ॐमोघमन्नंविंदतेअप्रचेता : ॥ सत्यंब्रवीमिवधइत्सतस्य ॥ नार्यम
णंपुष्यतिनोसखायं ॥ केवलाघोभवतिकेवलादिस्वाहा ॥ अन्नायेदं ॥ ७ ॥ अहंमेघस्तनयन्वर्षन्नस्मि ॥ मामदंत्यहम
द्म्यन्यान् ॥ अहगुँसदमृतोभवामि ॥ मदादित्याअधिसर्वेतपंतिस्वाहा ॥ अन्नायेदं ॥ ८ ॥ इत्यष्टभिर्हुत्वाकंवेधनप
कहोमंकुर्यात् ॥ व्याहृतिमिंदाहुतीर्हुत्वापूर्ववदवदाय ॥ ॐश्रोत्रेणभद्रमुतशृण्वंतिसत्यं ॥ श्रोत्रेणवाचंबहुधोद्यमानां ॥
श्रोत्रेणमोदश्चमहश्चश्रूयते ॥ श्रोत्रेणसर्वादिशआशृणोमोयेनप्राच्याउतदक्षिणा ॥ प्रतीच्यैदिशःशृण्वंत्युत्तरात् ॥ त
दिच्छ्रोत्रंबहुधोद्यमानं ॥ अरान्ननेमिःपरिसर्वंबभूवस्वाहा ॥ श्रोत्रायेदं ॥ अथाज्याहुतीर्जुहोति ॥ ॐप्राणोरक्षति ⁂
व्यानशेस्वाहा ॥ प्राणायेदं ॥ १ ॥ ॐयोदेवोदेवेषुविभूरंतः ⁂ हविःस्वाहा ॥ प्राणायेदं ॥ २ ॥ ॐ मनसाश्चित्तेदं ⁂
भ्रियगुँस्वाहा ॥ मनसइदं ॥ ३ ॥ ॐआनएतुपुरश्चरं ⁂ दधत्स्वाहा ॥ मनसइदं ॥ ४ ॥ ॐ जुषतांमेवाक् ⁂ पायि
नीस्वाहा ॥ वाचेदेव्याइदं ॥ ५ ॥ ॐययारूपाणिबहुधावदंति ⁂ हविःस्वाहा ॥ वाचेदेव्याइदं ॥ ६ ॥ ॐ चक्षुर्दे
वानां ⁂ क्षणगुँस्वाहा ॥ चक्षुषइदं ॥ ७ ॥ ॐआयुरिन्नः ⁂ मृतगुँस्वाहा ॥ चक्षुषइदं ॥ ८ ॥ श्रोत्रेणभद्र ⁂ शृणोमि
स्वाहा ॥ श्रोत्रायेदं ॥ ९ ॥ येनप्राच्या ॥ ⁂ बभूवस्वाहा ॥ श्रोत्रायेदं ॥ १० ॥ इतिदशभिर्हुत्वाचौलपक्कहोमंकुर्या
त् ॥ व्याहृतिमिंदाहुतीर्हुत्वास्त्रुवेणदर्व्यामुपस्तीर्यापरार्धादवदायपूर्वार्धादवद्यत्यभिघारयातिप्रत्यनक्तिपुरस्तात्स्त्रुवाहुतिं
हुत्वा ॥ ॐयेकेशिनःप्रथमास्सत्रमासत ॥ येभिराभृतंयदिदंविरोचते ॥ तेभ्योजुहोमिबहुधाघृतेन ॥ रायस्पोषेणेमंव

चंसासगुँसृजाथों नतेंब्रह्मणस्तपसोविमोकः ॥ द्विनाम्नीदीक्षावशिनीह्युग्रा ॥ प्रकेशास्सुवतेकांडिनोभवंति ॥ येषांब्र ह्मेदिशेवपनस्यनान्यःस्वाहा ॥ केशिभ्यइदं ॥ उपरिष्टात्स्रुवाहुतिंहुत्वास्विष्टकृतमुत्तरार्धात्सकृदवदायाद्भिरभिघार्यनप्र त्यज्यांतःपरिधौनिधायपंचावत्तिनांतुत्रिरभिघारणं ॥ अथाज्याहुतीरुपजुहोति ॥ ॐआरोहप्रोष्ठंविषहस्वशत्रून् ॥ अ वास्राग्दीक्षावशिनील्युग्रा ॥ देहिदक्षिणांप्रतिरस्वायुः ॥ अथामुच्यस्ववरुणस्यपाशात्स्वाहा ॥ वशिन्याउग्रायाइदं ॥१॥ ॐयेनावपत्सविताक्षुरेण ॥ सोमस्यराज्ञोवरुणस्यविद्वान् ॥ तेनब्रह्माणोवपतेदमस्योर्जेमं ॥ रय्यावर्चसासगुँसृजाथस्वा हा ॥ सवित्रेसोमायराज्ञेवरुणायेदं ॥२॥ ॐमातेकेशाननुगाद्वर्चएतत् ॥ तथाधाताकरोतुते ॥ तुभ्यमिंद्रोबृहस्पतिः ॥ सवितावर्चआदधात्स्वाहा ॥ धात्रइंद्रायबृहस्पतयेसवित्रइदं ॥३॥ ॐतेभ्योनिधानंबहुधाव्यैच्छन् ॥ अंतराद्यावापृथि वीअपस्सुवः ॥ दर्भस्तंबेवीर्यंकृतेनिधाय ॥ पौगुँस्येनेमंवर्चसासगुँसृजाथस्वाहा ॥ द्यावापृथिवीभ्यामिदं ॥४॥ ॐब लंतेबाहुवोस्सवितादधातु ॥ सोमस्त्वानक्तुपयसाघृतेन ॥ स्त्रीषुरूपमश्विनैतांनिधत्तं ॥ पौगुँस्येनेमंवर्चसासगुँसृजाथस्वा हा ॥ सवित्रेसोमायाश्विभ्यामिदं ॥५॥ ॐयत्सीमंतंकंकतस्तेलिलेख ॥ यद्वाक्षुरःपरिवर्जमपगुँस्ते ॥ स्त्रीषुरूपमश्वि नैतांनिधत्तं ॥ पौगुँस्येनेमंवर्चसासगुँसृजाथोवीर्येणस्वाहा ॥ अश्विभ्यामिदं ॥६॥ इतिषड्भिर्हुत्वाव्याहृतीर्हुत्वापुर स्तात्स्रुवाहुतिंहुत्वा ॥ ॐहव्यवाह ३ हुवेमोगुँस्विष्टमग्ने ३ आयुःस्वाहा ॥ अग्नयेस्विष्टकृतइदं ॥ अथमेक्षणप्रहरणा घृतरपरिषेकंविनान्यत्समस्तंकृत्वागर्भाधानाद्यपरिष्टात्तंत्राणिकर्यात ॥ तत्रसीमंतपर्यंतमतीतानांपंचावृत्तिरेव ॥ यथा ॥

तत्सवितुर्वृणीमहे ॥ वयंदेवस्यभोजनं ॥ श्रेष्ठगुँसर्वधातमं ॥ तुरंभगस्यधीमहि ॥ तत्सवितुः •॥• यतइंद्रभयामहे •॥•
स्वस्तिदा •॥• इतिजपेत् ॥ इतिगर्भाधानतंत्रं ॥ अथपूंसवनं ॥ अस्मेदेवासोवपुषेचिकित्सतयमाशिरादंपतीवाममश्नुतः
॥ पुमान्पुत्रोजायतेविंदतेवस्वथविश्वेअरपाएधतेग्रहः ॥ १ ॥ आशीर्दायादंपतीवाममश्नुतामरिष्टोरायःसचतागुँसमोक
सा ॥ यआसिचत्संदुग्धंकुंभ्यासहेष्टेनयामन्नमतिंजहातुसः ॥२॥ सर्पिर्ग्रीवीपीवर्यस्यजायापीवानःपुत्राअकृशासोअस्य
॥ सहजानिर्यसुमखस्यमानइंद्रायाशिरगुँसहकुंभ्यादात् ॥ ३ ॥ आशीर्मऊर्जमुतसुप्रजास्त्वमिषंदधातुद्रविणगुँसुवर्चसं
॥ संजयन्क्षेत्राणिसहसाहमिंद्रकृण्वानोअन्यागुँअधरान्त्सपत्नान् ॥ ४ ॥ इतिपूंसवनतंत्रं ॥ अथसीमंतं ॥ राकामहं
•॥• यास्तेराके •॥• इतिद्वे ॥ यवोसियवयास्मद्वेषोयवयारातीः ॥ सोमएवनोराजेत्याहुर्ब्राह्मणीःप्रजाविवृत्तचक्रआसीना
स्तीरेण ॥ गंगेतव ॥ सीतेतव ॥ कावेरीतव ॥ इत्यादि ॥ इतिसीमंततंत्रं ॥ ५ ॥ अथविष्णुबलिः ॥ अथगुडपायसगुँ
सघृतमिश्रमितिहविर्विष्णवेनिवेद्यप्रदक्षिणनमस्कारांतंकृत्वाथान्नेन ॥ केशवायस्वाहा ॥ नारायणाय ॥ माधवाय ॥ गो
विंदाय॥ विष्णवे ॥ मधुसूदनाय ॥ त्रिविक्रमाय ॥ वामनाय ॥ श्रीधराय ॥ हृषीकेशाय॥ पद्मनाभाय ॥ दामोदरायस्वाहा
॥ इतिद्वादशनामभिर्बलिंदत्वाकेशवंतर्पयामि ॥ नारायणंतर्पयामीतिदामोदरांतंतर्पयामीतिद्वादशनामाभिस्तर्पयित्वा ॥
त्रीणिपदाविचक्रमे •॥• इदंविष्णुर्विचक्रमइत्यादिस्तुतिभिःस्तुत्वा ॥ ॐभूःपुरुषमुद्वासयामि ॥ ॐभूवःपुरुषमुद्वासयामि
॥ ॐगुँसुवःपुरुषमुद्वासयामि ॥ ॐभूर्भुवस्सुवःपुरुषमुद्वासयामीत्युद्वासयेत्॥इतिविष्णुबलितंत्रं॥अथजातकर्मतंत्रं॥अनो

युगंरथयुगंवास्नाप्यवस्त्रेणाच्छाद्यतदग्नेः पूर्वभागेसंस्थाप्यतस्याग्रेश्वत्थपर्णेषुहुतशेषंनिदधाति॥ नमआव्याधिनीभ्योवि
विध्यंतीभ्यश्चवोनमइति॥ब्रह्मजज्ञानं ॥ व्याहृतीश्चजपेत्॥इतिजातकर्मतंत्रं ॥ ॥छ ॥ ॥अथनामकरणतंत्रं॥ कर्ताप्राणा
नायम्यदेशकालौसंकीर्त्यममकुमारस्यायुःश्रीबलवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंव्यावहारिकासिद्ध्यर्थंनामाभिधास्यावहे
इतिपितरौसंकल्पयेतां ॥ अथसुवर्णादिपात्रेतंडुलमापूर्यहिरण्यशकलेनहरिद्राखंडेनवाकुलदेवतानाममासनामनक्षत्र
नामव्यावहारिकनामानीतिक्रमेणनामचतुष्टयंविलिख्य ॥ कुलदेवतानामगणपतिभक्तः ॥ मासनामकृष्णा ॥ पुंडरी
काक्षइतिद्वादशनामानिचैत्रादिगणयित्वातत्तन्मासनामानिविलिख्य॥ नक्षत्रनामआश्विनः॥ आपभरणः ॥ कार्तिकः॥
रौहिणः ॥ मार्गशीर्षः ॥ आर्द्रकः ॥ पुनर्वसुः ॥ तिष्यः ॥ आश्लेषः ॥ माघः ॥ पूर्वाफल्गुनः ॥ उत्तराफल्गुनः ॥ ह
स्तः ॥ चैत्रः ॥ स्वातिः ॥ विशाखः ॥ अनूराधः ॥ ज्यैष्ठः ॥ मूलकः ॥ पूर्वाषाढः ॥ उत्तराषाढः ॥ श्रावणः ॥ श्रविष्ठः ॥
शातभिषजः ॥ पूर्वाप्रौष्ठपदः ॥ उत्तराप्रौष्ठपदः ॥ रैवतः ॥ इतितत्तन्नक्षत्रनामानिविलिख्यव्यावहारिकनाम ॥ शिव
शर्माइतिविलिख्य ॥ कुलदेवतानाममासनामनक्षत्रनामव्यावहारिकनामदेवताभ्योनमः ॥ ध्यानंसमर्पयामीत्यादि
षोडशोपचारान्कृत्वा ॥ दक्षिणार्थंसुवर्णंदत्वा ॥ यज्ञेनयज्ञमयजंतदेवास्तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमा
नःसचंतेयत्रपूर्वेसाध्यास्संतिदेवाः ॥ इतिपुष्पांजलिंदत्वा ॥ ब्राह्मणान्संपूज्यास्यनामकरणकर्मणःपुण्याहंभवंतोब्रुवंतु ॥
अस्मैनामकरणकर्मणेस्वस्तिभवंतोब्रुवंतु ॥ अस्यनामकरणकर्मणःऋद्धिंभवंतोब्रुवंतु ॥ एवंत्रिस्त्रिर्वाचयित्वाशिवंकर्मास्तुप्र

जापतिःप्रीयतामितिवाचयित्वाततःकर्ताकुलदेवतानाम्नागणपतिभक्तायस्वस्तिभवंतोब्रुवंतु ॥ गणपतिभक्तायस्वस्तीति
प्रतिवचनं ॥ मासनाम्नाकृष्णायस्वस्तिभवंतोब्रुवंतु ॥ कृष्णायस्वस्तीतिप्रतिवचनं ॥ एवंअनंतादिपुंडरीकाक्षांताय ॥
स्वस्तिभवंतोब्रुवंतु ॥ नाक्षत्रनाम्नाआश्विनाय ॥ आपभरणाय ॥ कार्तिकाय ॥ पुनर्वसवे ॥ स्वातये ॥ रैवताय ॥ शे
षमूह्यं ॥ व्यावहारिकनाम्नाशिवशर्मणेस्वस्तीतीतरे ॥ अथमातापितरौनामानित्रिस्त्रिःकथयेतां ॥ कुलदेवतानाम्नात्वं
गणपतिभक्तोसि ॥ मासनाम्नाकृष्णोसि ॥ चक्रिरसि ॥ हरिरसि ॥ नाक्षत्रनाम्नात्वमाश्विनोसि ॥ पुनर्वसुरसि ॥
स्वातिरसि ॥ रैवतोसि ॥ शेषमूह्यं ॥ व्यावहारिकनाम्नात्वंशिवशर्मासिएवंत्रिस्त्रिर्वाचयित्वा ॥ ततोब्राह्मणहस्तेअक्ष
तान्दत्वास्वयंचोत्थायकृतांजलिर्भूत्वा ॥ कुलदेवतानाम्नाअयंगणपतिभक्तोभवतः सर्वान्ब्राह्मणानभिवादयते ॥ आ
युष्मान्भवतुगणपतिभक्तइतिप्रतिवचनं ॥ मासनाम्नाकृष्णोभवतः सर्वान्ब्राह्मणानभिवादयते ॥ अयुष्मानूभवतुकृ
ष्ण : ॥ एवंअनंतोभवतइत्यादि ॥ नक्षत्रनाम्नाआश्विनोभवतः सर्वान्ब्राह्मणानभिवादयते ॥ आयुष्मान्भवत्वाश्वि
नःइतिप्रतिवचनं ॥ एवंआपभरणोभवतः ॥ पुनर्वसुर्भवतः ॥ स्वातिर्भवतः ॥ रैवतोभवतइत्याद्यथासंभवमूह्यं ॥
व्यावहारिकनाम्नाशिवशर्मोभवतस्सर्वान्ब्राह्मणानभिवादयते ॥ आयुष्मानूभवतुशिवशर्माइतिप्रतिवचनं ॥ नामकर
णमुहूर्तः सुमुहूर्तोस्त्वितिभवंतोब्रुवंतु ॥ सुमुहूर्तमस्त्वितिप्रतिवचनं ॥ कृष्णोनंतइतिचैत्रादिक्रमेणपुंसां ॥ स्त्रीणांतु
मार्गशीर्षादिक्रमेण ॥ लक्ष्मीः श्रीः कमलाभद्रासीतासत्याचरुक्मिणी ॥ माधवीचैत्रिकाभूमिःतुलसीजान्हवीतथा ॥ इ

तिस्रीणांद्वादशमासनामानि ॥ इतिनामकरणतंत्रं ॥४॥ अथोपनिष्क्रमणं ॥ अथाग्रेणाग्निमश्वत्थपर्णेषुहुतशेषंनिदधाति ॥
ॐभूर्भुवस्सुवरिति ॥ अथमंगलघोषपुरस्सरंगृहाद्बहिर्देवतायतनानिगत्वातत्रचंद्रार्कदिक्पालानभ्यर्च्यप्रार्थयेत् ॥ चंद्रा
र्कयोर्दिगीशानांदिशांचगगनस्यच ॥ निक्षेपार्थमहंदद्मितेमेरक्षंतुसर्वदा ॥ अप्रमत्तंप्रमत्तंवादिवारात्रमथापिवा ॥ रक्षं
तुसततंसर्वेदेवाश्शक्रपुरोगमाः ॥ इतिप्रार्थ्यत्रिवृतान्नेनब्राह्मणान्त्संपूज्याशिषोवाचयित्वा ॥ त्रिवृदन्नलक्षणंतु ॥ ओदन
स्याप्यपूपानांसक्तूनांसक्तमिश्रितस्यचेति ॥ अन्यच्च ॥ भक्ष्यंभोज्यंचपेयंचेत्येतत्समुदितंत्रिवृत् ॥ इतिद्विधात्रिवृदन्नलक्ष
णमुक्तं ॥ अथोपनिष्क्रमणकर्मणः पुंण्याहंस्वस्त्यृद्धिमितिवाचयित्वाशिवंकर्मास्तु ॥ चित्रियाणिप्रीयंतामित्युक्त्वा ॥ दे
वताप्रदक्षिणनमस्कारान्शिशोःकारयित्व गृहंगत्वा ब्राह्मणेभ्योदक्षिणांदत्वाशिषोवाचयेत् ॥ अथवास्वगृहदेवतासमी
पेसर्वंकारयित्वाअस्योपनिष्क्रमणकर्मणःसुमुहूर्तमस्त्वितिवाचयित्वाब्राह्मणान्प्रणमेत् ॥ इत्युपनिष्क्रमणतंत्रं ॥ ६ ॥ अ
थान्नप्राशनं ॥ पूर्ववद्व्याहृत्याश्वत्थपर्णेषुहुतशेषंनिधायकुमारंमातुरुत्संगउपवेश्यसुवर्णादिपात्रेसमस्तभक्षभोज्यादिसमे
तंशाल्यन्नंनिधाय दधिमधुघृतजलैस्समुदायुत्यहिरण्येनकुमारंप्राशयति ॥ ॐयाजाताओषधयोदेवेभ्यस्त्रियुगंपुरा ॥ मं
दामिबभ्रूणामहगुँशतंधामानिसप्तच ॥ ॐभूर्भुवस्सुवरपांचौषधीनागुँरसमन्नंप्राशयामिशिवास्ताआपओषधयस्संत्वनमी
वास्माआपओषधयस्संतु ॥१॥ ॐशतंवोअंबधामानिसहस्रमुतवोरुहः ॥ अथाशतक्रत्वोयूयमिमंमेअगदंकृत ॥ भूर्भुवसुवर
पां ॥ ॥२॥ ॐपुष्पावतीःप्रसूवतीःफलिनीरफलाउत ॥ अश्वाइवसजित्वरीर्वीरुधःपारयिष्णवः ॥ भूर्भुवस्सुवरपां ॥ ॥३॥

ॐओषधीरितिमातरस्तद्वोदेवीरुपब्रुवे ॥ रपाꣳसिविघ्नतीरितरपश्चातयमानाः ॥ भूर्भुवस्सुवरपां *॥* ॥ ४ ॥ ॐअश्वत्थेवो
निषदनंपर्णेवोवसतिःकृता ॥ गोभाजइत्किलासतयत्सनवथपूरुषं॥भूर्भुवस्सुवरपां *॥* ॥५॥ ॐयदहंवाजयन्निमाओषधी
र्हस्तआदधे ॥ आत्मायक्ष्मस्यनश्यतिपुराजीवगृभोयथा ॥ भूर्भुवस्सुवरपां *॥* ॥ ६ ॥ इतिषड्भिःप्राशयित्वामुखंप्रक्षाल्य
तूष्णीमाचमय्य ॥ अस्यान्नप्राशनकर्मणःसुमुहूर्तमस्त्वितिभवंतोब्रुवंतु ॥ सुमुहूर्तमस्त्वितिवाचयित्वाशिषोवाचयित्वासमा
पयेत् ॥ इत्यन्नप्राशनतंत्रं ॥ अथकर्णवेधनं ॥ अथाग्रेणाग्निंरेणुपर्णेषुहुतशेषंनिदधाति ॥ समुद्रायवयुनायसिंधूनांपतयेन
मः ॥ नदीनाꣳसर्वासांपित्रेजुहुताविश्वकर्मणेविश्वाहामर्त्यꣳहविःइति ॥ अथब्राह्मणान्त्संपूज्याशिषोवाचयित्वाममकुमार
स्यकरिष्यमाणकर्णवेधनकर्मणःपुंण्याहंस्वस्तिऋद्धिंभवंतोब्रुवंतु॥ यथायोग्यंप्रत्युत्तरंदद्युः ॥ शिवंकर्मास्तु ॥ श्रोत्रंप्रीयता
मितिवाचयित्वाततःकंटकादिनादक्षिणंकर्णंविद्ध्याति ॥ गायत्रीत्रिष्टुप्जगत्यनुष्टुप्पङ्क्त्यासहबृहत्युष्णिहककुत्सूतिभिःशि
म्यंतुत्वा॥ इत्यथापउपस्पृश्याथवामकर्णं॥द्विपदायाचतुष्पदात्रिपदायाचषट्पदा ॥ सच्छंदायाचविच्छंदाःसूचीभिःशिम्यं
तुत्वा॥ इतिविध्वाथापउपस्पृश्य रक्तसूत्रेणशणसूत्रेणवाबध्नातिवरुणस्यस्कंभनमसीति॥परेहनिविसर्जयति॥वरुणस्यस्कं
भसर्जनमसीति॥ अथापउपस्पृश्यकर्णवेधनमुहूर्तःसुमुहूर्तोस्त्वितिवाचयित्वाशिषोवाचयेत् ॥ इतिकर्णवेधनतंत्रं ॥ अथचौ
लं॥ अथाग्रेणाग्निमुदुंबरपर्णेषुहुतशेषंनिदधाति ॥ नमोहिरण्यबाहवेसेनान्येदिशांचपतयेनमइत्यथाग्नेः पश्चात्स्वयंप्राङ्मु
खउपविश्यकुमारंप्रत्यङ्मुखमुपवेश्यउष्णोदकेशीतजलमानयाति ॥ उष्णेनवायउदकेनेह्यदितिःकेशान्वपतीति ॥ ताभि

रस्यशिरउनत्ति॥ (आर्द्रांकरोतीत्यर्थः॥) आपउंदंतुजीवसेदीर्घायुत्वायवर्चसइति॥ ततऊर्ध्वाग्रान्दर्भांच्छिरसिनिदधा
ति॥ ओषधेत्रायस्वैनमिति॥तान्दर्भान्केशैस्सहवामहस्तेगृहीत्वादक्षिणेनक्षुरंगृहीत्वातदभिमंत्रयते॥ ज्योक्चसूर्यंदृशइत्य
थैनंस्वधितिंतिर्यंचंवामहस्तगृहीतेषुसदर्भकेशेषुनिदधाति॥ स्वधितेमैनगुँहिगुँसीरिति॥ अथदर्भैस्सहतान्केशांच्छिनत्ति॥
येनावपत्सविताक्षुरेणेत्यथापउपस्पृश्याथप्रवपतःकेशाननुमंत्रयते॥ मातेकेशाननुगाद्वर्चएतत्॥ तथाधाताकरोतुते॥ तुभ्य
मिंद्रोबृहस्पतिः॥ सवितावर्चआदधात्॥ अथनापितेनोप्तान्सर्वान्केशानेकीकृत्यदर्भस्तंबेनिदधाति॥ तेभ्योनिधानंब
हुधान्वैच्छन्नित्यथैनमुष्णोदकेनाप्लावयति॥ बलंतेबाहुवोस्सवितादधात्वित्यथैकशिखस्त्रिशिखः पंचशिखोवायथाकुला
चारंशिखांविन्यस्यस्वस्वगोत्रेयावंतःप्रवरऋषयस्तावत्यःशिखावा॥ (अष्टोत्तरशताधिकद्विसहस्रसंख्याककेशाःशिखा
प्रमाणमित्यर्थः) ॥ अथमंगलघोषैस्सहउष्णोदकेनस्नापयित्वाच्छाद्यालंकृत्यब्राह्मणान्फलतांबूलादिनासंतोष्यास्यचौल
कर्मणःपुंण्याहंस्वस्त्यृद्धिमितिवाचयित्वाकेशिनः प्रीयंतामितिवाचयित्वास्यचौलकर्मणः पुंण्याहंस्वस्तिऋद्धिमितिवाचयि
त्वाकेशिनःप्रीयंतामितिवाचयित्वास्यचौलकर्मणःसुमुहूर्तमस्त्वितिभवंतोब्रुवंतुइतिवाचयित्वा॥ जुषस्वनःसमिधमित्या
द्युत्तरपरिषेकंप्रणीताविमोचनंब्रह्मोद्वासनंचकृत्वाकृतानांगर्भाधानादिकर्मणांसांगतासिद्ध्यर्थंनानागोत्रेभ्योब्राह्मणेभ्योय
थाशक्तिदक्षिणांदातुमहमुत्सृजे॥ यथाशक्तिब्राह्मणान्भोजयिष्येइत्युक्त्वा॥ यस्यस्मृत्याचनामोक्त्यातपोहोमक्रियादि
षु॥ न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतमित्युक्त्वा॥ एभिःगर्भाधानपूंसवनसीमंतविष्णुबलिजातकर्मनामकरणोपनि

ष्क्रमणान्नप्राशनकर्णवेधनचौलकर्मभिः श्रीपरमेश्वरःप्रीयतां ॥ एवमृतुसंवेशनादिवागर्भाधानादिवाजातकर्मादिवाअती
तानुसारेणसमानतंत्रेणकुर्यात् ॥ इतिप्रयोगमालायांगर्भाधानादिसमानतंत्रप्रयोगः ॥ ॥ ६ ॥ ॥ अथक्रमप्राप्ताक्षर
प्रारंभविधिरभिधीयते ॥ जन्मतःपंचमेवर्षेउत्तरायणेकुंभमासंवर्जयित्वाशुक्लपक्षेद्वितीयातृतीयापंचमीसप्तमीदशम्येका
दशीत्रयोदशीषुगुरुशुक्रवारौश्रेष्ठौरविवारेपूर्वाण्हेसोमवारेपराण्हेचश्रेष्ठःबुधवारोमध्यःअश्विन्यार्द्रापुनर्वसुहस्तचित्रास्वा
त्यनूराधश्रवणरेवतीषुनवतारासुस्थिरराशयःश्रेष्ठाः उभयराशयोमध्याः अष्टमेसर्वग्रहवर्जितेपंचमेपापवर्जितेअक्षरप्रारंभं
कुर्यात् ॥ तथाचश्रीधरीये ॥ उदग्गतेभास्वतिपंचमेब्देप्राप्तेक्षरस्वीकरणंशिशूनां ॥ सरस्वतींविघ्नविनायकंचगुडोदनाद्यै
रभिपूज्यकुर्यात् ॥ नृसिंहः ॥ अक्षरस्वीकृतिःप्रोक्ताप्राप्तेपंचमहायने ॥ उत्तरायणगेसूर्येकुंभमासविवर्जिते ॥ श्रीध
रीये ॥ हस्तादित्यसमीरमित्रपुरुजित्पौष्णाश्विचित्राच्युतेष्वाराकर्यंशदिनोदयादिरहितेराशौस्थिरेचोभये॥ पक्षेपूर्वानिशा
करेप्रतिपदंरिक्तांविहायाष्टमींषष्ठीमष्टमशुद्धभाजिभवनेप्रोक्ताक्षरस्वीकृतिः ॥ मार्कंडेयः ॥ वारेदिनेशभृगुपुत्रबृहस्पती
नांविद्वानसौभवतियोहिविमूढबुद्धिः ॥ चंद्रेचचंद्रतनयेचकृशंचसर्वंविघ्नोभवेदवनिजेरविजेविनाशः ॥ वसिष्ठः ॥ दिवसां
शोदयावर्ज्यायत्नेनकुजसौरयोः ॥ श्रेष्ठासितज्ञजीवानांमध्यमाश्चंद्रसूर्ययोः ॥ रविवारेचपूर्वाण्हेविद्यारंभोविशिष्यते ॥
चंद्रवारेपराण्हेचविद्यागुर्वीविधीयते ॥ रात्रौचवर्जयेन्नित्यंसंध्ययोश्चविशेषतः ॥ इति ॥ अथप्रयोगः ॥ पारिजाते ॥ क
र्ताशुचौसमेदेशेगोमयेनोपलिप्यसैकतंस्थंडिलंकृत्वा पालाशंदंडनमृदंखात्वास्थंडिलेपरिनिधायाचम्यप्राणानायम्यदेश

कालौसंकीर्त्यममकुमारस्यसमस्तविद्याप्राप्त्यर्थमक्षरप्रारंभंकरिष्ये ॥ तदंगत्वेननिर्विघ्नतासिद्ध्यर्थंगणपतिपूजांकरिष्ये इतिसंकल्प्य ॥ गणपतिंगुरुंचसंपूज्यस्थंडिलमध्येसरस्वतींपूजयेत् ॥ ॐभुवनमातस्सर्ववाङ्मयरूपेआगच्छागच्छ ॥ इतिमंत्रेणावाह्यप्रणवेनार्घ्यपाद्याचमनगंधपुष्पधूपदीपांश्चदत्वा पायसंगुडोदनंचनिवेद्यप्रदक्षिणनमस्कारान्कृत्वागुरुंवस्त्राभरणादिनासंतोष्यसरस्वतीविघ्नेशाचार्यांस्त्रिःप्रदक्षिणंकृत्वाआवाहनक्रमेणदेवतामुद्वास्यगुरुःप्राङ्मुखउपविश्यकुमारंप्रत्यङ्मुखमुपवेश्यबिंदुरहितप्रणवेनसह ॥ ॐनमःशिवायेतिषडक्षरमुपदिश्याकारादिक्षकारांतंपंचाशद्वर्णानुपदिश्य ( वाचयित्वेत्यर्थः ॥ ) तथैवलेखयित्वाततःकुमारंप्राङ्मुखमुपवेश्यलिखितंत्रिर्वाचयित्वालड्डूकादिभिर्ब्राह्मणान्संतोषयेत् ॥ इत्यक्षरप्रारंभप्रयोगविधिःसमाप्तः ॥ ॥ ९ ॥ ॥ अथोपनयनं ॥ अथाह्नुतो गर्भाष्टमेषुब्राह्मणमुपनयीतेति ॥ वसंतेब्राह्मणमुपनयीतेतिच ॥ सिंगाभट्टीये ॥ गर्भादारभ्यषष्ठेसप्तमेअष्टमेष्वेवावतिष्ठतेकुमारस्यव्रतसामर्थ्यादिति ॥ कात्यायनस्तु ॥ जन्मादिपंचमाब्दादिदशाब्दांतंयथाक्रमं ॥ ब्रह्मवर्चसमायुष्यंतेजश्वान्नाद्यमेवच ॥ श्रियंपशून्नीयमानःकुर्याद्विप्रस्सुतंद्विजइति ॥ निर्णयसिंधौ ॥ आश्वलायनः ॥ गर्भाष्टमेष्टमेवाब्देपंचमेसप्तमेपिवा ॥ द्विजत्वंप्राप्नुयाद्विप्रोवर्षेत्वेकादशेनृपइति ॥ मनुः ॥ ब्रह्मवर्चसकामस्यकार्योविप्रस्यपंचमे ॥ राज्ञोबलार्थिनःषष्ठेवैश्यस्यार्थार्थिनोष्टमे ॥ विष्णुः ॥ षष्ठेतुधनकामस्यविद्याकामस्यसप्तमे ॥ अष्टमेसर्वकामस्यनवमेकांतिमिच्छतः ॥ आपस्तंबः ॥ गर्भाष्टमेषुब्राह्मणमुपनयीतेति ॥ गर्भाष्टमेष्वित्यत्रबहुवचनंगर्भषष्ठसप्तमयोःप्राप्त्यर्थमितिसुदर्शनभाष्ये

व्याख्यातं ॥ अथकाम्यानि ॥ सप्तमेब्रह्मवर्चसकाममष्टमआयुष्काममंनवमेतेजस्काममंदशमेन्नाद्यकाममेकादशइंद्रियका
मंद्वादशेपशुकामंत्रयोदशेमेधाकामंचतुर्दशेपुष्टिकामंपंचदशेभ्रातृव्यवंतंगुँषोडशेसर्वकाममिति ॥ आषोडशाद्ब्राह्मणस्य
नात्ययइतिगृह्यसूत्रं ॥ अतएवकालातिक्रमेदोषउक्तोज्योतिर्निबंधे ॥ अग्रजाबाहुजावैश्याःस्वावधेरूर्ध्वमब्दतः ॥ अकृ
तोपनयास्सर्वेवृषलाइवतेस्मृताइति ॥ हेमाद्रौ ॥ माघादिषुचमासेषुमौंजीपंचसुशस्यतइति ॥ वराहः ॥ नकदाचिद्दश
र्क्षेषुभानोरार्द्राप्रवेशनात् ॥ विवाहोदेवतानांचप्रतिष्ठाचोपनायनं ॥ अथजन्ममासादिनिषेधः ॥ नजन्मधिष्ण्येनचजन्म
मासेनजन्मकालीयदिनेविदध्यात् ॥ ज्येष्ठेनमासिप्रथमस्यसूनोस्तथासुतायाअपिमंगलानि ॥ जातंदिनंदूषयतेवसिष्ठो
ह्यष्टौचगर्गोनियतंदशत्रिः ॥ जातस्यपक्षंकिलभागुरिश्चशेषाःप्रशस्ताःखलुजन्ममासि ॥ राजमार्तंडः ॥ जन्ममासेति
थौभेचविपरीतदलेसति ॥ कार्यंमंगलमित्याहुर्गर्गभार्गवशौनकाः ॥ जन्ममासनिषेधेपिदिनानिदशवर्जयेत् ॥ आर
भ्यजन्मदिवसाच्छुभाःस्युस्तिथयोपरे ॥ संग्रहे ॥ अन्नप्राशनमुद्वाहश्चौलकर्मोपनायनं ॥ जन्ममासेषुवर्ज्यंस्यात्कलिंग
मगधेतथा ॥ गृहप्रवेशसीमंतपट्टबंधव्रतानिच ॥ जन्ममासेषुवर्ज्यंस्यान्नर्मदातटउत्तरे ॥ नर्मदादक्षिणेदेशेजन्ममासःशु
भप्रदः ॥ अन्यदेशेनशुभदंबहूनांसंमतंत्विदं ॥ निर्णयसिंधौ ॥ शुद्धिर्नैवगुरोर्यस्यवर्षेप्राप्तेष्टमेयदि ॥ चैत्रेमीनगतेभा
नौतस्योपनयनंशुभं ॥ जन्मभादष्टमेसिंहेनीचेवाशत्रुभेगुरौ॥मौंजीबंधःशुभःप्रोक्तःचैत्रेमीनगतेरवाविति ॥ वसिष्ठः ॥ नै
मित्तिकमनध्यायंकृष्णेचप्रतिपद्दिनं ॥ मेखलाबंधनेशस्तंचौलेवेदव्रतेस्वपीति ॥ कृष्णपक्षेचतुर्थींचसप्तम्यादिदिनत्रयं ॥

त्रयोदशीचतुष्कंचअष्टावेतेगलग्रहाः ॥ नारदः ॥ विनर्तुनावसंतेनकृष्णपक्षेगलग्रहे ॥ अपराण्हेचोपनीतःपुनस्संस्कार
मर्हति ॥ व्यासः ॥ याचैत्रवैशाखसितातृतीयामाघस्यसप्तम्यथफाल्गुनस्य ॥ कृष्णेतृतीयोपनयेप्रशस्ताःप्रोक्ताभर
द्वाजमुनींद्रमुख्यैः ॥ पारिजाते ॥ गर्गः ॥ ज्येष्ठमासेविशेषेणसर्वज्येष्ठस्यचैवहि ॥ उपनीतस्यपुत्रस्यजडत्वंमृत्युरेवच ॥
कालविधाने ॥ शुक्लेपक्षेनिर्मलेशीतभानौशुक्रेजीवेचांबरेदृश्यमाने॥ शाखाधीशेशक्तियुक्तेनुकूलेऋक्षेराशौमौंजिबंधःशिशोः
स्यात् ॥ द्वितीयापंचमीषष्ठीसप्तमीदशमीतथा ॥ त्रयोदशीतृतीयाचशुक्लेश्रेष्ठाःप्रचोदिताः ॥ द्वादश्येकादशीचैवमध्यमेच
तिथीइमे ॥ मध्यमेचप्रशंसंतिचंद्रेचबलसंयुते ॥ कृष्णेचैवप्रशस्ताःस्युस्तिथयश्चोपनायने ॥ गुरुशुक्रबुधानांतुवाराःश्रेष्ठ
तमास्मृताः ॥ मध्यमस्सोमवारस्तुसूर्यवारश्चमध्यमः ॥ वारौमंदारयोर्वर्ज्यौकृष्णेवर्ज्योनिशापतेः ॥ अस्तंगतस्यसौम्य
स्यवारोवर्ज्योद्विजन्मनि ॥ गुरुः ॥ त्रिषूत्तरेषुरोहिण्यांहस्तेमैत्रेचवासवे ॥ त्वाष्ट्रेसौम्यपुनर्वस्वोःप्रशस्तंचोपनायनं ॥
वारुणेवैष्णवेपुष्येवायव्येप्रोष्ठपद्यपि ॥ आश्विनेषट्सुभेषूक्तंमध्यमंचैवपौष्णभं ॥ माधवीये ॥ मूकाविद्वान्बोधवान्वेदवा
दीशिल्पीधीमान्लब्धवाणिज्यवृत्तिः ॥ पापीपूज्यःशूद्रगोराजदूतःशास्त्रार्थज्ञस्स्याच्चमेषादिलग्ने ॥ श्रीधरीये ॥ असत्फ
लप्रदेराशावपिलग्नेशुभेक्षिते ॥ शुभयुक्तेथवातेषांशुभमेवफलंविदुरिति ॥ इत्युपनयनकालनिर्णयः ॥ अथकर्तृनिर्णयः ॥
सिंगभट्टीये ॥ उपनयादिस्नानांतकर्मस्वभ्युदयक्रियां ॥ पिताकुर्यात्तदूर्ध्वंतुपरिणेतायथाविधि ॥ नांदीश्राद्धंपिताकु
र्यात्पुत्रीपुत्रविवाहयोः ॥ उत्तरेषुविवाहेषुस्वयंकुर्यात्तुनांदिकं ॥ ॥ ६ ॥ ॥ अथाविद्यमानपितृकस्यदेवतानियमउ

क्तः ॥ स्मृतौ ॥ असगोत्रस्सगोत्रोवायआचार्यउपानयेत् ॥ तदोपनेयपित्रादीनुद्दिश्यभ्युदयंचरेत् ॥ कन्यकायाअयंमार्गो
मुनिभिःपरिकीर्तितः ॥ अन्येतु ॥ उपनीतोतुपित्रादेरभावेन्यन्निवेदयेत् ॥ आचार्यपितरस्तस्यवृद्धिश्राद्धेतुदेवताइति ॥
पितैवोपनयेत्पुत्रंतदभावेपितुःपिता ॥ तदभावेपितृभ्रातातदभावेपिसोदरः ॥ प्रयोगरत्नेवृद्धमनुः ॥ पितापितामहोभ्राता
ज्ञातयोगोत्रजाग्रजाः ॥ उपानयेधिकारीस्यात्पूर्वाभावेपरःपरइति ॥ इतिकर्तृनिर्णयः ॥ ॥ ७ ॥ ॥ अथो
पनयनप्रयोगः ॥ जन्मतःपंचमेषष्ठेसप्तमेष्टमेवावर्षेउपनयनकालः ॥ तत्रगर्भाष्टमोमुख्यः ॥ स्वराशिचंद्रराश्यपेक्ष
याद्वितीयपंचमसप्तमनवमैकादशेषुवागुरौविद्यमानेगुरुशुक्रास्तरहितउत्तरायणेजन्ममासंवर्जयित्वाजन्मपक्षंवाद्वितीयातृ
तीयापंचमीशुक्लषष्ठीसप्तम्येकादशीद्वादशीत्रयोदशीषुचंद्रेबलयुतेकृष्णपक्षेवाजन्मराशिजन्मलग्नतत्काललग्नचंद्रराशीनां
चाष्टमेशुद्धेभानोरार्द्राप्रवेशानंतरंवर्जयित्वाअनध्यायरहितेचैत्रवैशाखयोः शुक्लतृतीयामाघशुक्लसप्तमीत्यनध्यायाअपि
ग्राह्याः॥अन्यावर्ज्याःफाल्गुनकृष्णतृतीयातिश्रेष्ठा ॥ आदित्यचंद्रबुधगुरुशुक्रवारेषुरोहिणीमृगशिरःपुनर्वसूत्तरात्रयहस्त
चित्रानुराधधनिष्ठाइतिदशताराश्रेष्ठाः॥ अश्विनीपुष्यस्वातिश्रवणशततारारेवत्यइतिषट्तारामध्यमाः ॥वृषभमिथुनकर्क
टककन्याराशयःश्रेष्ठाःकुंभसिंव्हौमध्यमौ ॥ तावेवशुभयोगशुभदृष्टियुक्तौचेच्छ्रेष्ठौ ॥ इत्युक्तकालेउपनयनंकुर्यात् ॥ उ
पनीत्यासहचौलकरणपक्षेचौलांगक्षौरंतंत्रेणकृत्वाउपनयनांगक्षौरमेवकुर्यात् ॥ कर्तोपनयनात्पूर्वेद्युःप्रातःस्नानादिनित्य
कर्मकृत्वावैश्वदेवंहुत्वाभद्रासनेस्वयंप्राङ्मुखउपविश्य पत्नीकुमारौस्वदक्षिणतउपवेश्याचम्यप्राणानायम्यदेशकालौसं

कीर्त्यममकुमारस्यश्वःकरिष्यमाणोपनयनांगतयाविहितंनांदीसमाराधनंहिरण्येनकरिष्यइतिसंकप्य॥तदंगत्वेननिर्विघ्न
तासिद्ध्यर्थंगणपतिपूजांस्वस्तिपुंण्याहवाचनंचकरिष्येइत्युक्त्वा॥सुमुखश्चेत्यादिनागणपतिंसंपूज्यपुंण्याहंवाचयित्वानां
दीमुखाःपितरःप्रीयंतामितिवाचयित्वा ॥प्रोक्षणांतंकृत्वानांदीश्राद्धंकृत्वातस्यामेवरात्रौप्रदोषांतेउदकशांतिप्रतिसरबंधौच
कुर्यात् ॥ अथयदिपितृभ्रातृव्यातिरिक्तोनांदीश्राद्धकर्तातदाअस्यकुमारस्यमातृपितामहिप्रपितामह्यः ॥ अस्यकुमारस्य
पितृपितामहप्रपितामहाः ॥ अस्यकुमारस्यमातामहमातुःपितामहमातुःप्रपितामहाःनांदीमुखाइत्यादि॥तस्यामेवरात्रौ
कर्ताप्राणानायम्यममकुमारस्यसर्वामंगलनिरसनार्थंसमस्तमांगल्यप्राप्त्यर्थंश्व : करिष्यमाणोपनयनांगतयाविहितावु
दकशांतिप्रतिसरबंधौचसमानतंत्रेणकरिष्यइतिसंकल्प्य ॥ तत्कृत्वाथापरेद्युःकर्तासपत्नीकस्संस्कार्येणसहप्रातर्मंगल
स्नानादिनित्यकर्मकृत्वादेहशुद्ध्यर्थंपवनमंत्राचमनमंत्रप्रोक्षणानिचकृत्वा ॥ पूर्वेद्युरसंभवेसद्योवानांद्युदकशांतिप्रतिसर
बंधस्नानपवनादिकंकृत्वापुंण्याहंवाचयेत् ॥ कर्ताप्राणानायम्यदेशकालौसंकीर्त्यममकुमारस्यउपनयनाख्यकर्मकर्तुंत
दादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंपुंण्याहवाचनंचकरिष्यइतिसंकल्प्य ॥ अस्योपनयनकर्मणःपुंण्याहं ॥ अस्मैउप
नयनकर्मणेस्वस्ति ॥ अस्योपनयनकर्मणऋद्धिंभवंतोब्रुवंतु॥ एवंत्रिस्त्रिर्वाचयित्वाशिवंकर्मास्तुमेधाकरेंद्रःप्रीयतामितिवा
चयित्वाप्रोक्षणांतंकृत्वाउपनयनप्रधानसंकल्पंकुर्यात् ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यममकुमारस्यद्विजत्त्वसि
द्ध्यावेदाध्ययनाधिकारसिद्ध्यर्थंउपनयनाख्यंकर्मकरिष्यइतिसंकल्प्य॥पुनःकर्ताममगायत्रीप्रदानयोग्यतासिद्ध्यर्थंसह

स्रंसख्याकगायत्रीजपंकरिष्ये ॥ इतिसंकल्प्यपूर्वेद्युःसद्योवातत्कृत्वाकुमारंब्रह्मचारिभिस्सुवासिनीभिश्चसहभोजयित्वा
तस्यचौलवत्तूष्णींकेशानोप्येतिसूत्रात् ॥ तूष्णीमुष्णस्वप्सुशीताआनीयताभिःप्रत्यङ्मुखमुपविष्टस्यशिशोःशिरउनत्ति
॥ तूष्णीमूर्ध्वाग्रंबर्हिरनुच्छत्यतूष्णींक्षुरंगृहीत्वातूष्णीमादित्यंदर्शयित्वातूष्णींदर्भैस्सहकेशांश्छित्वाप्रवपतःकेशान्तूष्णी
मुपस्पृश्याथनापितेनोप्तान्केशान्तूष्णीमेवदर्भस्तंबेनिदध्यात् ॥ इतिसर्वंतूष्णींकृत्वास्नापयित्वाथमंडपवेदिकामध्येतंडु
लराशौदर्भेषुशुचिवाससंबद्धशिखंकुमारंप्राङ्मुखमुपवेश्य तूष्णींद्विराचमय्यस्वयमाचमनप्राणायामौकृत्वाममकुमारस्य
कामचारकामवादकामभक्षणदोषपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंकृच्छ्रत्रयंकरिष्ये ॥ अशक्तश्चेत्तत्प्रत्याम्नायरूपेणाच
रिष्यइतिसंकल्प्य ॥ तत्प्रत्याम्नायगोत्रयंतन्मूल्यंवाब्राह्मणायदत्वा ममकुमारस्योपनयनांगतयाविहितंश्रद्धामेधाप्रज्ञा
सिद्ध्यर्थंफलतांबूलदानंकारिष्यइतिसंकल्प्य ॥ फलतांबूलगोपीचंदनंयज्ञोपवीतानिचब्राह्मणेभ्योब्रह्मचारिभ्यश्चदत्वात
तआचार्यः ॥ ॐकारोग्निश्चनागश्चसोमःपितृप्रजापती ॥ वायुःसूर्योविश्वेदेवाइत्येतेतंतुदेवताः ॥ इत्युपवीतंतत्तद्देवता
त्मकंध्यात्वाषोडशोपचारान्कृत्वापोहिष्ठेतितिसृभिःप्रोक्ष्यगायत्र्याभिमंत्र्यउद्वयंतमसस्परीत्यादित्यंदर्शयित्वा ॥ स्योनापृ
थिवीतिभूमौनिधायदेवस्यत्वेत्यादायस्वदक्षिणभागस्थितंकुमारंयज्ञोपवीतंप्रतिमुंचन्वाचयति ॥ यज्ञोपवीतंपरमंपवित्रं
प्रजापतेर्यत्सहजंपुरस्तात् ॥ ॐआयुष्यमग्र्यंप्रतिमुंचशुभ्रंयज्ञोपवीतंबलमस्तुतेजः ॥ इतिधारयेत् ॥ उपविश्यैवयज्ञोपवी
तधारणं ॥ तदुक्तंसंग्रहे ॥ तिलकंब्रह्मसूत्रंचपाद्यमाचमनीयकं ॥तिष्ठन्नपियदाकुर्यात्सद्यःशूद्रोभवेद्द्विजइति ॥ अथकुमा

:द्विराचमय्यदक्षिणेहस्तेगृहीत्वामंगलघोषपुरस्सरंस्वस्तिपंथामनुचरेमेत्युपनयनवेदिकामानयति ॥ ततआचार्योमाण
वकमग्नेःपश्चादात्मनोदक्षिणतउपवेश्यद्विराचम्यदेवयजनोल्लेखनप्रभृतिलौकिकाग्निंप्रतिष्ठाप्यप्राणानायम्यदेशकालौसं
कीर्त्यममकुमारस्यद्विजत्वसिद्धिद्वारावेदाध्ययनाधिकारसिध्यर्थमुपनयनहोमंकरिष्ये ॥ यमलयोस्तुस्थंडिलादिसर्वंपृथ
गेवकुर्यात् ॥ नत्वेकतंत्रेण ॥ उपनयनहोमःकर्मआघारवत्तंत्रंपंचदशदारुरिध्मःअग्नीषोमावाज्यभागौजातवेदोनामाग्निः
मेधाकरेंद्रोदेवताचरुर्हविरग्निःस्विष्टकृदाज्यस्यमांत्रवर्णिक्योदेवताइत्यादिएवंसांगेनकर्मणासद्योयक्ष्ये॥तदंगमन्वाधानं
करिष्ये ॥ इतिसंकल्प्यान्वाधानंकृत्वाप्राकृतपात्राण्यासाद्य ॥ अश्मानंदंडमजिनंवस्त्रंमौंजींसामिद्दलं ॥ व्रतार्थंसमिध
श्चैतिसादयेत्सहपात्रकैः ॥ एतत्सर्वंसकृदेवासाद्याप्रणीताभ्यःकृत्वा॥देवस्यत्वा॰॥॰हस्ताभ्यां ॥ मेधाकरेंद्रायजुष्टंनिर्व
पामीतित्रिर्निरूप्यतूष्णींचतुर्थं ॥ देवस्यत्वा ॰॰ हस्ताभ्यां ॥ मेधाकरेंद्रायवोजुष्टंप्रोक्ष्यामीतिसकृन्मंत्रेणाद्विस्तूष्णींप्रो
क्ष्याज्यसंस्काराद्यग्निमुखांतंकृत्वापालाशीगुँसमिधमाज्येनाक्त्वाभ्याधापयन्वाचयति ॥ ॐआयुर्दादेवजरसंगृणानोघृ
तप्रतीकोघृतपृष्ठोअग्ने ॥ घृतंपिबन्नमृतंचारुगव्यंपितेवपुत्रंजरसेनयेमगुँस्वाहा ॥ आयुर्दाग्नयइदं ॥ अथैनमुत्थाप्या
ग्न्याचार्ययोर्मध्येनीत्वाग्नेरुत्तरतःस्थितमश्मानमास्थापयति ॥ आतिष्ठममश्मानमश्मेवत्वगुँस्थिरोभव ॥ अभितिष्ठपृत
न्यतस्सहस्वपृतनायतइति ॥ यथागतंपुनरानीयाथाहतंवासउदङ्परिधापयन्वाचयति ॥ तल्लक्षणंप्रचेतसोक्तं॥ ईषद्धौ
तंनवंश्वेतंसदशंयन्नधारितं ॥ अहतंतद्विजानीयात्सर्वकर्मसुपावनमिति ॥ अन्यच्च ॥ सदशंनवमाधौतंवासस्सृष्टंस्वयंभु

ना ॥ शस्तंमांगलिकेधृत्वातावत्कालंनसर्वदेति ॥ याअकृंतन्नवयन्याअतन्वतयाश्चदेवीरंतानभितोददंथ ॥ तास्त्वादेवी
र्जरसासंव्ययंत्वायुष्मान्निदंपरिधत्स्ववासइति ॥ परिहितमनुमंत्रयते॥परिधत्तधत्तवाससैनगुँशतायुषंकृणुतदीर्घमायुः॥
बृहस्पतिः प्रायच्छद्वासएतत्सोमायराज्ञेपरिधातवाउ ॥ जरान्गच्छासिपरिधत्स्ववासोभवाकृष्टीनामभिशस्तिपावा ॥ श
तंचजीवशरदःसुवर्चारायश्चपोषमुपसंव्ययस्व ॥ परीदंवासोअधिधाःस्वस्तयेभूरातोनामभिशस्तिपावा ॥ शतंचजीवश
रदःपुरूचीर्वसूनिचांप्योविभजासिजीवन्निति ॥ अथैनंमौंजींमेखलांत्रिवृत्तांत्रिःप्रदक्षिणंपरिव्ययन्वाचयति ॥ इयंदुरुक्ता
त्परिबाधमानाशर्मवरूथंपुनतीनआगात् ॥ प्राणापानाभ्यांबलमाभरंतीप्रियादेवानागुँसुभगामेखलेयमिति ॥ परिवीत
मनुमंत्रयते ॥ ऋतस्यगोप्त्रीतपसःपरस्पीघ्नतीरक्षस्सहमानाअरातीः ॥ सानस्समंतमनुपरीहिभद्रयाभर्त्तारस्तेमेखले
मारिषामेति ॥ अथनाभिदेशेग्रंथिंकरोति ॥ प्राणानांग्रंथिरसिसमाविस्त्रसइति ॥ अथास्माअजिनंत्र्यंगुलविस्तारंचर्म
त्रितयसहितंचतुश्छिद्रयुक्तंदृढसूत्रंदक्षिणावृत्तलोमकंयज्ञोपवीतवत्प्रतिमुंचन्वाचयति॥ मित्रस्यचक्षुर्धरुणंबलीयस्तेजोय
शस्वीस्थविरगुँसमिद्धं ॥ अनाहनस्यंवसनंजरिष्णुपरीदंवाज्यजिनंदधेहमिति ॥ अथास्मैपालाशदंडंशिरस्सम्मितमव्र
णंसत्वचंमृदुदंडंसंप्रयच्छति ॥ सोमोसिसोमपंमाकुर्वितिपालाशं ॥ बैल्वदंडंचेत् ॥ ब्रह्मवर्चसमसिब्रह्मवर्चसायत्वेति ॥
दंडप्रमाणमाहव्यासः ॥ शिरोललाटनासाग्रप्रमाणंवर्णतःक्रमात् ॥ याज्ञिकस्यचवृक्षस्यदंडाअर्हंतिधर्मतः ॥ उक्तदंडा
भावेमनुः ॥ एतेषामप्यभावेतुसर्वेषांसर्वयाज्ञियाइति ॥ गौतमोपि ॥ याज्ञियोवासर्वेषामिति ॥ वार्क्ष्यंभितिबौधायनसूत्रं ॥

अहंवृक्षस्यरेरिवा ॥ कीर्तिःपृष्ठंगिरेरिवा ॥ ऊर्ध्वपवित्रोवाजिनीवस्वमृतमास्मि ॥ द्रविणगुँसवर्चसमितियाइयाद्वृक्षदंडं
त्रा ॥ ततोगुरुर्माणवकंपृच्छति ॥ कोनामासीति ॥ नारायणशर्मानामास्मीतिगुरुंप्रत्याह ॥ अथैनंदक्षिणेहस्तेगृण्हा
ति ॥ यस्मिन्भूतंचभव्यंच ॥ सर्वेलोकास्समाहिताः ॥ तेनगृण्हामित्वामहंमह्यंगृण्हामित्वामहंप्रजापतिनात्वामह्यंगृण्हा
मिनारायणशर्मन्निति ॥ अथैनंदेवताभ्यः परिददाति ॥ देवेभ्यस्त्वापरिददामि ॥ विश्वदेवेभ्यस्त्वापरिददामि ॥ विश्वे
भ्यस्त्वादेवेभ्यः परिददामि ॥ सर्वेभ्यस्त्वादेवेभ्यः परिददामि ॥ सर्वाभ्यस्त्वादेवताभ्यः परिददामिनारायणशर्मन् ॥
अथैनंज्योतिर्विदुक्तेसुलग्नेकृपादृष्ट्यानुगृहीतमात्मनोंकंसंमुखमानयति ॥ देवस्यत्वा ॰॰ हस्ताभ्यामुपनयेनारायणशर्म
न्निति॥ अथकिंचित्कालंसमदृष्ट्यासम्यङ्नेरीक्षेत ॥ (उपसमीपेनयनमुपनयनमित्युपनयनशब्दार्थः)॥ अथकुमारः स्वय
मेवपक्वाज्जुहोति ॥ ॐयच्छंदसामृषभोविश्वरूपश्छंदोभ्योध्यमृतात्संबभूव ॥ समेंद्रोमेधयास्पृणोत्वमृतस्यदेवधारणोभू
यासों यच्छंदसा ॰॰ धारणोभूयासगुँस्वाहा॥ मेधाकरेंद्रायेदं॥ उपरिष्टात्स्रुवाहुतिंहुत्वापुनर्दर्व्यामुपस्तीर्यास्विष्टकृतमुत्तरा
र्धात्सकृदवदायद्विरभिघार्यांतः परिधौनिधाय ॥ पंचावत्तिनांत्रिरभिघारणं ॥ अथाज्याहुतीरुपजुहोति ॥ ॐक्षोत्रियैत्वानि
र्ऋत्यैत्वा ॥ द्रुहोमुंचामित्रवरुणस्यपाशात् ॥ अनागसंब्रह्मणेत्वाकरोमि ॥ शिवेतेद्यावापृथिवीउभेइमेस्वाहा ॥ ब्रह्मणेद्या
वापृथिवीभ्यामिदं ॥ १ ॥ ॐशंतेअग्निस्सहाद्भिरस्तु ॥ शंद्यावापृथिवीसहौषधीभिः ॥ शमंतरिक्षगुँसहवातेनते ॥ शंते
चतस्रः प्रदिशोभवंतुस्वाहा ॥ अग्नयेद्यावापृथिवीभ्यामंतरिक्षायदिग्भ्यइदं ॥ २ ॥ ॐयादैवीश्चतस्रः प्रदिशः ॥ वात

पत्नीरभिसूर्योविचष्टे ॥ तासांत्वाजरसआदधामि ॥ प्रयक्ष्म ऋतुनिर्ऋतिंपराचैःस्वाहा ॥ दिग्भ्योवातपत्नीभ्यइदं ॥ ३ ॥
अमोचियक्ष्माद्दुरितादवर्त्यै ॥ द्रुहःपाशान्निर्ऋत्यैचोदमोचि ॥ अहाअवर्तिमविदत्स्योनं ॥ अप्यभूद्भद्रेसुकृतस्यलोके
स्वाहा ॥ निर्ऋत्याइदं ॥ ४ ॥ सूर्यमृतंतमसोग्राह्यायत् ॥ देवाअमुंचन्नसृजन्व्येनसः ॥ एवमहमिमंक्षेत्रियाज्जामिशगुं
सात् ॥ द्रुहोमुंचामिवरुणस्यपाशात्स्वाहा ॥ देवेभ्यइदं ॥ ५ ॥ ॐबृहस्पतेयुवमिंद्रश्चवस्वः ॥ दिव्यस्येशाथेउतपार्थि
वस्य ॥ धत्तगुंरयिगुंस्तुवतेकीरयेचित् ॥ यूयंपातस्वस्तिभिस्सदानःस्वाहा ॥ बृहस्पतयइंद्रायेदं ॥ ६ ॥ अथब्रह्मसूक्तं ॥
ॐब्रह्मजज्ञानंप्रथमंपुरस्तात् ॥ विसीमतस्सुरुचोवेनआवः ॥ सबुध्नियाउपमाअस्यविष्ठाः ॥ सतश्चयोनिमसतश्चविवः
स्वाहा ॥ ब्रह्मणइदं ॥ १ ॥ ॐपिताविराजामृषभोरयीणां ॥ अंतरिक्षंविश्वरूपआविवेश ॥ तमर्कैरभ्यर्चंतिवत्सं ॥ ब्रह्मसं
तंब्रह्मणावर्धयंतःस्वाहा ॥ ब्रह्मणइदं ॥ २ ॥ ब्रह्मदेवानजनयत् ॥ ब्रह्मविश्वमिदंजगत् ॥ ब्रह्मणःक्षत्रंनिर्मितं ॥ ब्रह्मब्राह्मण
आत्मनास्वाहा ॥ ब्रह्मणइदं ॥ ३ ॥ ॐअंतरस्मिन्निमेलोकाः ॥ अंतर्विश्वमिदंजगत् ॥ ब्रह्मैवभूतानांज्येष्ठं ॥ तेनको
र्हतिस्पर्धितुगुंस्वाहा ॥ ब्रह्मणइदं ॥ ४ ॥ ॐब्रह्मन्देवास्त्रयस्त्रिगुंशत् ॥ ब्रह्मन्निंद्रप्रजापती ॥ ब्रह्मन्हविश्वाभूतानि ॥
नावीवांतस्समाहिताःस्वाहा ॥ ब्रह्मणइदं ॥ ५ ॥ ॐचतस्रआशाःप्रचरंत्वग्नयः ॥ इमन्नोयज्ञन्नयतुप्रजानन् ॥ घृतंपिन्व
न्नजरगुंसुवीरं ॥ ब्रह्मसमिद्भवत्याहुतीनागुंस्वाहा ॥ घृतंपिन्वतेग्नयेजिरायब्रह्मणइदं ॥ ६ ॥ अथस्विष्टकृदादिपरिधिप्र
हरणांतंकृत्वाग्रेणाग्निंपालाशपर्णेपुहुतशेषंनिदधाति ॥ ॐनमोअस्तुनीलग्रीवायसहस्राक्षायमीढुषे ॥ अथोयेअस्यसत्वा

नोहंतेभ्योकरन्नमः॥ इतिबलिंदत्वोत्तरपरिषेकप्रणीताविमोकवरदानांतंकृत्वाथकुमारःप्राणानायम्यदेशकालौसंकीर्त्यममगायत्र्युपदेशांगतयाविहितंसावित्रीव्रतोपक्रमहोमंकरिष्ये॥ सावित्रीव्रतोपहोमःकर्मेआपूर्वतंत्रंसमुद्भवोनामाग्निःअग्निवाय्वा॥दित्यव्रतपतयोदेवताआज्योक्तपालाशसमिधोहविःसद्योयक्ष्ये॥तदंगमन्वाधानंकरिष्ये॥ इतिसंकल्प्यान्वाधानादिकंकृत्वास्त्रुक्स्त्रुवमाज्यस्थालींप्रोक्षणींचतस्त्रस्समिधइत्यासाद्याज्यसंस्कारांतंकृत्वा परिषिच्यालंकृत्यार्द्रास्सपलाशास्सप्ररोहाःप्रादेशमात्रास्प्रतिशुक्राग्राघृतान्वक्ताअभ्याधापयन्वाचयति॥ याज्ञीवृक्षसमिधोवा॥ ॐअग्नेव्रतपतेसावित्रंव्रतंचरिष्यामि॥ तच्छकेयंतन्मेराध्यतागुँस्वाहा॥ अग्नयेव्रतपतयइदं॥ ॐवायोव्रतपतेसावित्रं *॥* वायवेव्रतपतयइदं॥ ॐआदित्यव्रतपतेसावित्रंव्रतं *॥* आदित्य.यव्रतपतयइदं॥ ॐव्रतानांव्रतपतेसावित्रंव्रतंचरिष्यामि॥ तच्छकेयंतन्मेराध्यतागुँस्वाहा॥ व्रतानांव्रतपतयइदं॥ व्याहृतीर्हुत्वोत्तरपरिषेकादिकंकुर्यात्॥ अथाग्नेःपश्चाद्दर्भेषूदगग्रंकूर्चंनिधायतस्मिन्प्राङ्मुखआचार्यउपविशति॥ राष्ट्रभृतस्याचार्यासंदीमात्वद्दोषमितितस्याग्रेणकुमारोदर्भेषुप्रत्यङ्मुखउपविश्यस्वदक्षिणेनहस्तेनगुरोर्दक्षिणंपादंवामेनवामपादमन्वारभ्यजानुभ्यामवनींगत्वा सावित्रींभोअनुब्रूहीतिगुरुंसंप्रार्थ्याथगुरुःओमित्युक्त्वागायत्रीमुपदिशति॥ यथा॥ गायत्रींव्याहृतीश्चत्रेधाविभज्यप्रथमंतिस्त्रोव्याहृतीस्त्रयाणांपादानामादौक्त्वातत्रद्वयोरर्धर्चयोरादौचेव्याहृतिस्ततः॥कृत्स्नायामादौतृतीयांव्याहृतिंसंयोज्यसर्वास्ताव्याहृतयःप्रणवपूर्वकाः॥यथा॥ ॐभुःतत्सवितुर्वरेण्यं॥ ॐभुवःभर्गोदेवस्यधीमहि॥ ओगुँसुवःधियोयोनःप्रचोदयात्॥ ॐभूःतत्सवितुर्वरेण्यंभर्गो

देवस्यधीमहि ॥ ॐभुवःधियोयोनःप्रचोदयात् ॥ ओगुँसुवःतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदया
त् ॥ इतिगायत्रीमुपदिश्याथशिष्टाचारप्राप्तत्वादष्टाक्षरींपंचाक्षरींचोपदिश्यततोबटुराचार्यस्योत्तरतउपविशति ॥ तत्र
मनुः ॥ यावद्ब्रह्मोपदेशःस्यात्तावद्दक्षिणतोबटुः ॥औपनायनिकेशेषेकर्मण्युत्तरतोबटुः॥ इति॥अथकुमारःपक्वादुपादायप्रा
श्नातिबटुहस्तमभिघार्यपक्वशेषमन्नंनिधायाभिघार्य॥ॐशरीरम्मेविचर्षणं॥ जिव्हामेमधुमत्तमा॥ कर्णाभ्यांभूरिविश्रुवं ॥
ब्रह्मणःकोशोसिमेधयापिहितः॥श्रुतम्मेगोपाय ॥ इतिप्राश्यापउपस्पृश्यापआचम्यादित्यमुपतिष्ठते॥ उद्वयंतमसस्परिप
श्यंतोज्योतिरुत्तरं॥ देवंदेवत्रासूर्यमगन्मज्योतिरुत्तममिति ॥अथैनंगुँसगुँशास्ति ॥ ब्रह्मचार्यसीतिगुरुराह॥अस्मीतिप्रति
वचनं॥आपोशानइतिगुरुः॥ अस्यार्थःप्रायश्चित्तार्थमापोशनंभोजनस्यादावंतेचोपस्तरणपिधानार्थमिति॥ अश्नामीतिप्र
तिवचनं॥ कर्मकुरुइतिगुरुः॥गुरुशुश्रूषादिकमित्यर्थः॥करिष्यामीतिप्रतिवचनं॥मादिवासुषुप्थाःइतिगुरुः॥ दिवानिद्रा
माकार्षीरित्यर्थः॥नस्वप्स्यामीतिप्रतिवचनं ॥ समिधआधेहिइतिगुरुः॥अग्नावित्यर्थः॥आधास्यामीतिप्रतिवचनं॥भैक्ष्या
चर्यंचरइतिगुरुः॥ भिक्षान्नमाहृत्यभोजनंकुरुष्वेत्यर्थः॥चरिष्यामीतिप्रतिवचनं ॥सदारण्यात्समिधआहरइतिगुरुः॥अग्नि
कार्यार्थमित्यर्थः॥आहरिष्यामीतिप्रतिवचनं ॥ उदकुंभंचाहरइतिगुरुः ॥ गुरुगृहंप्रतीत्यर्थः॥ आहरिष्यामीतिप्रतिवचनं
॥ आचार्याधीनोवेदमधीष्वइतिगुरुः॥अध्येष्यइतिप्रतिवचनं॥ अथास्मैगुरुस्तंडुलपूर्णपात्रंप्रयच्छन्नाह॥ मातरमेवाग्रे
भिक्षस्वेति॥ततोबटुर्मातरमेवाग्रेभिक्षते॥भवतिभिक्षांदेहीतिमातरंभिक्षयित्वाअथान्यानपिभिक्षयित्वासर्वंसमाहृत्याचार्या

यप्रयच्छतिभैक्षमिदमिति॥तत्सु भैक्षमित्याचार्यःप्रतिगृह्याथोत्तरेणाग्निंद्वस्त्रीप्रतिकृतीकृत्यगंधैर्माल्येनचालंकृत्यमसोपनय
नांगतयाविहितांश्रद्धामेधापूजांकरिष्यइतिसंकल्प्य ॥ ॐभूः श्रद्धामावाहयामि ॥ ॐभुवः श्रद्धामावाहयामि ॥ ॐगुं
सुवः श्रद्धामावाहयामि ॥ ॐभूर्भुवस्सुवः श्रद्धामावाहयामि ॥ ॐभूः मेधामावाहयामि ॥ ॐभुवः मेधामावाहयामि ॥
ॐगुंसुवः मेधामावाहयामि ॥ ॐभूर्भुवस्सुवः मेधामावाहयामिइत्यावाह्यश्रद्धायैनमः ॥ मेधायैनमः ॥ इतिषोडशोपचा
रान्कृत्वाब्राह्मणान्संपूज्यास्यश्रद्धामेधापूजाकर्मणः पुंण्याहंस्वस्तिऋद्धिमितिवाचयित्वाश्रद्धामेधेप्रियेतामितिवाचयित्वा
॥ अनेनश्रद्धामेधापूजाकर्मणाश्रीपरमेश्वरः प्रीयतामित्युक्त्वाकृतस्यकर्मणः सांगतासिद्ध्यर्थंनानागोत्रेभ्योब्राह्मणेभ्यो
यथाशक्तिदक्षिणाः प्रतिपादयामि ॥ यथाशक्तिब्राह्मणान्भोजयिष्यइत्युक्त्वा ॥ यस्यस्मृत्येत्युक्त्वाअनेनोपनयनक
र्मणाश्रीपरमेश्वरः प्रीयतामितीश्वरार्पणंकुर्यात् ॥ अतःपरंयत्कर्तव्यंतदुच्यते ॥ कारिकायां ॥ यावद्ब्रह्मोपदेशःस्या
त्तावत्संध्यादिकंनच ॥ ततोमाध्यान्हसंध्यादिसर्वकर्मसमाचरेत् ॥ स्नानंचभोजनंतद्वत्संध्योपासनमेवच ॥ ब्रह्मयज्ञ
श्चनित्यानिसामान्यस्यापितानितु ॥ (उपासनमप्युपासनमग्निकार्यमित्यर्थः) ॥ सिंगाभट्टीये ॥ अथोपनयनात्क
र्मकुर्यादारभ्ययत्नतः ॥ स्नानंकालद्वयेसंध्यामग्निकार्यंचनैत्यकं ॥ ब्रह्मयज्ञंतर्पणंचदेवर्षिपितृणांतथा ॥ देवार्चनंजपं
भिक्षांप्रत्यहंब्रह्मचारिणः ॥ सेवांचगुरुवृद्धानांयज्ञसूत्रादिधारणमिति ॥ अनेनगायत्र्युपदेशानंतरंब्रह्मयज्ञंमाध्यान्हिकं
व्रतमध्येप्रतिदिनंस्नानमपिकर्तव्यमित्युक्तं ॥ अथाग्निकार्यं ॥ अथसायंसंध्यांविधायाचमनप्राणायामौकृत्वादेशकालौसं

कीर्त्यममसमस्तपापक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंसायमग्निकार्यंकरिष्य इतिसंकल्प्य ॥ जुषस्वनः ॥ ततनःसूर्यस्य ॥ अदितेनुमन्यस्वेत्यादिभिःपरिषिच्य ॥ अग्निंप्रज्वलितंवंदे ॥ विश्वतोमुखं ॥ अथचतस्त्रस्समिधोभ्यादधाति ॥ ॐभूः स्वाहा ॥ अग्नयइदं ॥ ॐभुवः स्वाहा ॥ वायवइदं ॥ ॐगुँसुवःस्वाहा ॥ सूर्यायेदं ॥ ॐभूर्भुवस्सुवः स्वाहा ॥ प्रजापतयइदं ॥ इतिहुत्वापुनर्जुषस्वनइत्यादिआदितेन्वमगुँस्थाइत्यादिभिः परिषिच्य यत्तेअग्नेतेजइतितिसृभिर्मयिमेधांमयिप्रजामितितिसृभिश्चोपस्थायाथोपविश्य ॥ मानस्तोके ॥ विधमते ॥ इत्युपस्थायओजोसीतिललाटे ॥ सहोसीतिकंठे ॥ वलमसीतिदक्षिणबाहुमूले ॥ भ्राजोसीतिकंठपृष्ठे ॥ देवानांधामनामसीतिनाभौ ॥ विश्वमसिविश्वायुरितिहृदये ॥ सर्वमसिसर्वायुरितिमूर्ध्नि ॥ इत्युपस्पृश्य ॥ श्रद्धांमेधांयशः प्रज्ञांविद्यांबुद्धिंश्रियंबलं ॥ आयुष्यंतेजआरोग्यंदेहिमेहव्यवाहन ॥ इत्याशिषः प्रार्थयित्वागोत्रप्रवरमुक्त्वाअमुकगोत्रअमुकशर्माअहमस्मिअहंभोअभिवादये ॥ इत्यग्निमभिवाद्याथगुरूनभिवादयते ॥ मातरंपितरंमातुलमाचार्यानन्यांश्चत्रिवर्षपूर्वानभिवाद्यानेनसायमग्निकार्यकर्मणाश्रीपरमेश्वरःप्रीयतां ॥ एवमेवप्रातः कालेप्रातरग्निकार्यंकरिष्यइतिसंकल्प्यप्रातरग्निकार्यंकुर्यात् ॥ इत्यग्निकार्यविधिः ॥ एवंत्रिरात्रंसावित्रव्रतंचरित्वाथचतुर्थेन्हिसंध्याद्यग्निकार्यंकृत्वैतमग्निमादाय पालाशवृक्षमूलंगत्वातंप्रदक्षिणंपरिसमूह्यासनप्राणायामौकृत्वादेशकालौसंकीर्त्यममोपनयनांगतयाविहितांसुश्रवः पूजांकरिष्ये ॥ सुश्रवःसुश्रवसंमाकुरु ॥ यथात्वगुँसुश्रवाअस्यैवमहगुँसुश्रवस्सुश्रवोभूयासं ॥ यथात्वगुँसुश्रवस्सुश्रवोदेवानांनिधिगोपोस्येवमहंब्राह्मणानांब्रह्मणो

निधिंगोपोभूयासं ॥ इतिपरिसमूह्याभ्यर्च्यतस्याग्रेणोत्तरेणवाग्निंप्रतिष्ठाप्यप्राणानायम्यममोपनयनांगतयाविहितंसा
वित्रीव्रतविसर्जनहोमंकरिष्ये ॥ व्रतविसर्जनहोमःकर्मआपूर्वंतत्रअग्निवाय्वादित्यव्रतपतयोदेवताआज्याक्तपालाशस
मिधोहविःसद्योयक्ष्ये ॥ तदंगमन्वाधानंकरिष्यइतिसंकल्प्यान्वाधायप्रोक्षणीमाज्यस्थालींस्रुक्स्रुवौचतस्रस्समिधश्चा
साद्याज्यसंस्कारांतंकृत्वाममोपनयनव्रतमध्येव्रतलोपप्रायश्चित्तार्थमवृत्यप्रायश्चित्तहोमंकरिष्ये॥यन्मआत्मनः ※ पुनर
ग्निरितिद्वाभ्यांस्रुवाहुतीर्हुत्वाव्याहृतीर्हुत्वाव्रतविसर्जनहोमंकुर्यात् ॥पूर्वासादितपालाशसमिधोभ्याधापयन्वाचयति॥ॐ
अग्नेव्रतपतेसावित्रंव्रतमचारिषंतदशकंतन्मेराधिस्वाहा॥अग्नयेव्रतपतयइदं ॥ ॐवायोव्रतपतेसावित्रं॰॥॰वायोव्रतपतयइ
दं॥आदित्यव्रतपतेसावित्रं॰॥॰आदित्यव्रतपतयइदं॥व्रतानांव्रतपतेसावित्रं॰॥॰व्रतानांव्रतपतयइदं ॥पुनस्तथैवसुश्रवसम
भ्यर्च्यषोडशोपचारान्कृत्वाचरुलाजापूपान्निवेद्यानेनपूजाकर्मणासुश्रवाःप्रीयतामितिवाचयित्वादंडमाजिनंमेखलांवासश्च
पुण्यवृक्षमूलेविसृज्यापउपस्पृश्यपूर्ववन्मंत्रेणान्यान्यादायाचम्याथोत्सृष्टपूर्वंधूतवस्त्रमाचार्यआदत्ते॥यस्यतेप्रथमवास्यंगुं
हरामस्तंत्वाविश्वेअवंतुदेवास्तंत्वाभ्रातरस्सुहृदोवर्धमानमनुजायंतांबहवस्सुजातं ॥इत्यादायमिंदाहुतीर्व्याहृतीर्हुत्वापूर्णा
हुतिंहुत्वोत्तरपरिषेकादिकंकृत्वाअनेनव्रतविसर्जनहोमकर्मणाश्रीपरमेश्वरःप्रीयतामित्युक्त्वाग्निमात्मनिसमारोपयति ॥
ॐयातेअग्नेयज्ञियातनूस्तयेह्यारोहात्मात्मानं ॥ अच्छावसूनिकृण्वन्नस्मेनर्यापुरूणि॥यज्ञोभूत्वायज्ञमासीदस्वांयोनिं॥
जातवेदोभुवआजायमानस्सक्षयएहि ॥ इतिदक्षिणपाणिंनिष्टप्यात्मनिसमारोपयेत् ॥ पुनरग्निकार्यकाले ॥ ॐउपाव

रोहजातवेदःपुनस्त्वंदेवेभ्योहव्यंवहनःप्रजानन् ॥ आयुःप्रजाग्ँरयिमस्मासुधेहि ॥ अजस्त्रोदीदिहिनोदुरोणे ॥ ॐभूर्भुवस्सुवरोंअग्निंप्रातिष्ठापयामि ॥ इत्यात्मनिसमारोपितमग्निंलौकिकाग्नौप्रतिष्ठाप्यप्राणायामादिकंकृत्वाप्रतिदिनंसायंप्रातरग्निकार्यंकुर्यात् ॥ इतःप्रभृतिश्राद्धभोजनसूतकसंगममधुमांसानिचवर्जयेत् ॥ इत्युपनयनविधिः ॥ ॥ ७ ॥

॥ अथयदिचतुर्थदिनमध्येग्निरुद्वातश्चेत्तत्रप्रायश्चित्तं ॥ अपहताअसुरारक्षाग्ँसिपिशाचायेक्षियंतिपृथिवीमनु ॥ अन्यत्रैतोगच्छंतुयत्रैषांगतंमनइति ॥ तत्सर्वंभस्मप्रोक्ष्यायंतेयोनिर्ऋत्वियइतिक्षिप्रंभस्मसामिधिसमारोप्य स्थंडिलोल्लेखनादिलौकिकाग्निंप्रतिष्ठाप्याजुव्हानउद्बुध्यस्वाग्नइतिद्वाभ्यांसामिधमग्नौप्रक्षिप्य ॥ प्राणानायम्यदेशकालौसंकीर्त्यास्यकुमारस्यउपनयनव्रतमध्येग्न्युद्वातप्रायश्चित्तहोमंकरिष्ये ॥ प्रायश्चित्तहोमःकर्माग्निहोत्रिकंतंत्रंचित्तिर्नामाग्निःअग्न्यादयोदेवताआज्यंहविः इत्यादिसंकल्प्याज्यसंस्कारांतंकृत्वाव्याहृतिर्हुत्वाथप्रायश्चित्ताहुतीर्जुहोति ॥ ॐअयाश्चाग्नेः ॥ अग्नयेअयसइदं ॥ १ ॥ ॐअग्निर्होता ॥ अश्विनाध्वर्यू ॥ त्वष्टाग्नीत् ॥ मित्रउपवक्ता ॥ सोमःसोमस्यपुरोगाः ॥ शुक्रश्शुक्रस्यपुरोगाः ॥ श्रातास्तइंद्रसोमाः ॥ वातापेर्हवनश्रुतःस्वाहा ॥ अग्नयेश्विभ्यांत्वष्ट्रेमित्रायसोमायशुक्रायेंद्रायेदं ॥ २ ॥ ॐब्राह्मणएकहोता ॥ सयज्ञः ॥ समेददातुप्रजांपशून्पुष्टिंयशः ॥ यज्ञश्चमेभूयात्स्वाहा ॥ ब्रह्मणइदं ॥ ३ ॥ ॐअग्निर्द्विहोता ॥ सभर्ता ॥ समे ॰॰॰ भर्ताचमेभूयात्स्वाहा ॥ अग्नयइदं ॥ ४ ॥ पृथिवीत्रिहोता ॥ सप्रतिष्ठा ॥ समे ॰॰॰ प्रतिष्ठाचमेभूयात्स्वाहा ॥ पृथिव्याइदं ॥ ५ ॥ अंतरिक्षंचतुर्होता ॥ सविष्ठा ॥ समे ॰॰॰ विष्ठःश्चमेभूयात्स्वाहा ॥ अंतरिक्षायेदं

॥ ६ ॥ ॐवायुःपंचहोता ॥ सप्राणः ॥ समे ॐ प्राणश्चमेभूयात्स्वाहा ॥ वायवइदं ॥ ७ ॥ चंद्रमाःषड्ढोता ॥ सऋतू
न्कल्पयाति ॥ समे ॐ ऋतवश्चमेकल्पंतागुँस्वाहा ॥ चंद्रमसइदं ॥ ८ ॥ अन्नगुँसप्तहोता ॥ सप्राणस्यप्राणः ॥ समे ॐ
प्राणस्यचमेप्राणोभूयात्स्वाहा ॥ अन्नायेदं ॥ ९ ॥ द्यौरष्टहोता ॥ सोनाधृष्यः ॥ समे ॐ अनाधृष्यश्चभूयासगुँस्वाहा ॥
दिवइदं ॥ १० ॥ आदित्योनवहोता ॥ सतेजस्वी ॥ समे ॐ तेजस्वीचभूयासगुँस्वाहा ॥ आदित्यायेदं ॥ ११ ॥ प्रजाप
तिर्दशहोता ॥ सइदगुँसर्वं ॥ समेददातुप्रजांपशूंन्पुष्टिंयशः ॥ सर्वंचमेभूयात्स्वाहा ॥ प्रजापतयइदं ॥ १२ ॥ मनो
ज्योतिः ॥ मिंदाहुतिमहाव्याहृतीर्व्याहृतीश्चहुत्वाहोमशेषंसमापयेत् ॥ इत्यग्न्युद्वातप्रायश्चित्तं ॥ इतिव्यंकटेशकृतौप्र
योगमालायामुपनयनप्रयोगस्समाप्तः ॥ ॥ ७ ॥ ॥ अथजडबधिरांधमूकानामुपन
यनप्रयोगोलिख्यते ॥ नात्रवर्षाणांनियमः ॥ देवनक्षत्रेनांदीश्राद्धादिकंपूर्ववत्कृत्वास्नातंशुचिर्वाससंबद्धशिखंपूर्ववन्मंडपवे
दिकायामुपवेश्यतूष्णींयज्ञोपवीतंप्रतिमुच्यतूष्णीमेवयाज्ञियंदंडंदत्वानामप्रश्नाद्युपनयनांतंनामग्रहणंवर्जयेत् ॥ मिंदाहु
तीर्हुत्वाआचार्यएवसाविव्यापक्वंहुत्वाक्षेत्रियैत्वाब्रह्मजज्ञानमितिद्वादशाज्याहुतीर्हुत्वावरदानांतेयाज्ञियेषुपर्णेषुहुतशेषंमं
त्रवन्निधायाथकुमारः पक्वादुपादायतूष्णींप्राश्याथवाआचार्यएवसर्वान्मंत्रान्वदेत् ॥ एवमेवतूष्णीमुन्मत्तहीनांगाधिकां
गव्यसनिव्याधितकुष्ठदीर्घरोग्यपस्मारिणश्चयथाशक्तिकिंचित्कार्यमथतेभ्यस्तृतीयेहनितूष्णींमधुपर्कंदत्वातमग्निमुत्सृ
जति ॥ आयुर्दाअग्नइतिपिताभ्रातावात्मनिसमारोपयेदित्येके ॥ इतिजडाद्युपनयनविधिः ॥ ७ ॥ अथपुनरुपनयनं ॥

[illegible] ॥ [illegible]स्यानुत्या निभवतीपितुर्ज्येष्ठव्यतिरिक्तस्योच्छिष्टभोजनंनस्त्रियासहभुंजीतमधुमांस
[illegible]क्षणंगणान्नंगणिकान्नंनिषिद्धसिंधुसौवीरसौराष्ट्रांगवंगकलिंगादिदेशग
[illegible]मूत्रभक्षणंसप्तरात्रसंध्यातिक्रमणमुन्मत्तइत्येतैर्दुष्टेपुनःसंस्कारमर्हति ॥ तत्रैव ॥ सं
[illegible]भिष्यति ॥ उन्मत्तदोषयुक्तस्तुपुनस्संस्कारमर्हति ॥ वपनंमेखलांदंडंभैक्षाचर्यंचयस्त्यजे
त् ॥ पुनस्संस्कारमाप्नोति[illegible]कर्मणेति ॥ अथवर्ज्यानि ॥ मेखलांदंडमजिनंभैक्षाचर्यंव्रतानिच ॥ निवर्तंतेद्विजा
[illegible] ॥ [illegible] ॥ विष्णुः ॥ वपनदंडमेखलाभैक्षाचार्यव्रतानिपुनस्संस्कारकर्माणिवर्जनीयानी
ति ॥ [illegible] ॥ [illegible]दिनित्यकर्मकृत्वापुनरुपनयनांगतयाविहितंनांदीसमाराधनंहिरण्येनकरिष्यइति
[illegible]पुनरुपनयनांगपुण्याहंवाचयित्वा॥अग्निर्व्रतपतिरग्निर्व्रतभृदग्निस्सप्तवांश्चप्रीयंतामिति
[illegible]त्यादिप्रायाश्चित्तानिमित्तमुक्त्वातत्प्रायाश्चित्तार्थंपुनरुपनयनंकरिष्यइतिसंकल्प्य॥
[illegible]ग्निमित्यादिजातवेदोनामाग्निः अग्निर्व्रतपतिरग्निर्व्रतभृदग्निस्सप्तवान्देवताचरुर्हविराज्य
[illegible]दिसंकल्प्याग्निमुखांतंकृत्वापालाशीर्गुंसमिधमाज्येनोङ्क्त्वाभ्याधापयन्वाचयति॥ॐपुनस्त्वा
[illegible]हुत्वा ॥ आदित्येभ्योरुद्रेभ्योवसुभ्योब्रह्मणेवसुनीथायेदं ॥ पुनरेतयैवाज्याहुतिंहुत्वाथाष्ट
[illegible] ॥ [illegible]आत्मनः ॥ पुनरग्निरितिद्वाभ्यांहुत्वापक्वाज्जुहोति ॥ ॐत्वमग्नेव्रतपाअसिदेवआमर्त्येष्वा ॥

त्वंयज्ञेष्वीड्यों यद्वोवयंप्रमिनामव्रतानिविदुषांदेवाअविदुष्टरासः ॥ अग्निष्टद्विश्वमापृणातिविद्वान्येभिर्देवाँगुँऋतुभिः कल्प
यातिस्वाहा ॥ अग्नयेव्रतपतयइदं ॥ १ ॥ पुनरवदाय ॥ ॐत्वमग्नेव्रतभृच्छुचिः ॥ देवाँगुँआसादयाइह ॥ अग्नेहव्यायवोढवों
व्रतानुबिभ्रद्व्रतपाअदाभ्यः ॥ यजानोदेवाँगुँअजरःसुवीरः ॥ दधद्रत्नानिसुविदानोअग्ने ॥ गोपायनोजीवसेजातवेदस्वा
हा॥ अग्नयेव्रतभृतइदं ॥२॥ पुनरवदाय॥ ॐसप्ततेअग्ने ॰॰ घृतेनों॥ जनस्यगोपाअजनिष्टजागृविरग्निस्सुदक्षस्सुवितायन
व्यसे॥घृतप्रतीकोबृहतादिविस्पृशाद्युमद्विभातिभरतेभ्यःशुचिःस्वाहा॥ अग्नयेसप्तवतइदं॥३॥ इतिपक्षत्रयंहुत्वाथस्विष्टकृ
तमवदायांतःपरिधौनिधायाथाज्याहुतीरुपजुहोति॥ॐयेनदेवाःपवित्रेण॰॥॰देवेभ्यःपावमानीभ्यइदं॥१॥ॐप्राजापत्यं॰॥॰
ब्रह्मणइदं॥२॥ॐइंद्रस्सुनीतीसह॰॥॰इंद्रायसुनीत्यैसोमायवरुणाययमायराज्ञेजातवेदसइदं॥३॥ इतितिस्रः॥ यद्देवादेवहे
डनमितिसौत्रामणिपठितानुवाकस्यषड्भिरनुच्छंदसं॥ यथा॥ ॐयद्देवादेवहेडनं॥ देवासश्चकृमावयं॥ अग्निर्मातस्मादेन
सः॥विश्वान्मुंचत्वँगुँहसस्स्वाहा॥देवेभ्योग्नयेँगुँहोमुचइदं॥१॥ ॐयदिदिवायदिनक्तं॥ एनाँगुँसिचकृमावयं॥ वायुर्मातस्मा
देनसः॥विश्वान्मुंचत्वँगुँहसःस्वाहा॥वायवेँगुँहोमुचइदं॥२॥ ॐयदिजाग्रद्यदिस्वप्ने॥एनाँगुँसिचकृमावयं॥सूर्योमातस्मादे
नसः ॥ विश्वान्मुंचत्वँगुँहसस्स्वाहा ॥ सूर्यायाँगुँहोमुचइदं ॥ ३ ॥ यद्ग्रामेयदरण्ये ॥ यत्सभायांयदिंद्रिये ॥ यच्छूद्रे
यदर्ये ॥ येनश्चकृमावयगुँस्वाहा ॥ सूर्यायाँगुँहोमुचइदं ॥ ४ ॥ ॐयदेकस्याधिधर्मणि ॥ तस्यावयजनमसि ॥ यदा
पोअघ्नियावरुणेतिशपामहे ॥ ततोवरुणनोमुंचस्वाहा ॥ अद्भ्योवरुणायेदं ॥ ५ ॥ ॐअवभृथनिचंकुणनिचेरुरसिनिचं

कुण ॥ अवदेवैर्देवकृतमेनोयाट् ॥ अवमर्त्यैर्मर्त्यकृतं ॥ उरोरानोदेवरिषस्पाहिस्वाहा ॥ देवेभ्यइदं ॥ ६ ॥ इतिषट् ॥
अथनक्तंजातानुवाकं ॥ ॐनक्तंजातास्योषधे ॥ रामेकृष्णेआसिक्निच ॥ इदगुँरजनिराजय ॥ कीलासंपलितंयत्स्वाहा
॥ ओषधयेराजन्याइदं ॥ १ ॥ ॐकीलासंचपलितंच ॥ निरितोनाशयापृशत् ॥ अनस्वोअश्नुतांवर्णः ॥ पराश्वेतानि
पातयस्वाहा ॥ ओषधेरजन्याइदं ॥ २ ॥ ॐअसितंतेनिलयनं ॥ आस्थानमसितंतव ॥ असिक्न्यास्योषधे ॥ निरतो
नाशयापृषत्स्वाहा ॥ ओषधयइदं ॥ ३ ॥ ॐअस्थिजस्यकिलालस्य॥ तनूजस्यचयत्वचि ॥ कृत्ययाकृतस्यब्रह्मणा ॥ ल
क्ष्मश्वेतमनीनशगुँस्वाहा ॥ ब्रह्मणइदं ॥ ४ ॥ ॐसरूपानामतेमाता ॥ सरूपोनामतेपिता ॥ सरूपास्योषधेसा ॥ स
रूपमिदंकृधिस्वाहा ॥ ओषधयइदं ॥ ५ ॥ ॐशुनगुँहुवेममघवानमिंद्रं ॥ अस्मिन्भरेनृतमवाजसातौ ॥ शृण्वंतमुग्र
मूतयेसमत्सुस्वाहा ॥ मघवतइंद्रायेदं ॥६॥ ॐभ्रंतंवृत्राणिसंजितंधनानां ॥ धूनथद्यांपर्वतांदाशुषेवसु ॥ निवोवनाजिह
तेयामनोभिया ॥ कोपयथपृथिवींपृश्निमातरगुँस्वाहा ॥ पृथिव्याइदं ॥७॥ ॐयुधेयमुग्रापृषतीरयुध्वं ॥ प्रवेपयंतिप
र्वतान् ॥ विविचंतिवनस्पतीन् ॥ प्रावारतमरुतोदुर्मदाइवस्वाहा ॥ मरुद्भ्यइदं ॥ ८ ॥ ॐदेवासस्सर्वयादृशा ॥ पुरु
त्राहिसदृङ्ङसि ॥ विशोविश्वाअनुप्रभूस्वाहा ॥ देवेभ्यइदं॥ ९॥ ॐसमत्सुत्वाहवामहे ॥ समत्स्वग्निमवसे ॥ वाजयं
तोहवामहे ॥ वाजेषुचित्रराधसगुँस्वाहा ॥ अग्नयइदं ॥१०॥ ॐसंगच्छध्वगुँसंवदध्वं ॥ संवोमनागुँसिजानतां ॥ देवा
भागंयथापूर्वे ॥ संजानानाउपासतस्वाहा ॥ देवेभ्यइदं ॥११॥ ॐसमानोमंत्रस्समितिस्समानी ॥ समानंमनस्सहचि

त्तमेषां ॥ समानंकेतोअभिसगुँरभध्वं ॥ संज्ञानेनवोहविषायजामस्वाहा ॥ समानायेदं ॥ १२ ॥ ॐसमानीवआकूतिः
॥ समानाहृदयानिवः ॥ समानमस्तुवोमनः ॥ यथावस्सुसहासतिस्वाहा ॥ समानायेदं ॥ १३ ॥ ॐसंज्ञानन्नस्त्रैः ॥
संज्ञानमरणैः ॥ संज्ञानमश्विनायुवं ॥ इहास्मासुनियच्छतगुँस्वाहा ॥ अश्विभ्यामिदं ॥ १४ ॥ ॐसंज्ञानमेबृहस्पतिः॥
संज्ञाहगुँसविताकरत् ॥ संज्ञानमश्विनायुवं ॥ इहमह्यन्नियच्छतगुँस्वाहा ॥ अश्विभ्यामिदं ॥ १५ ॥ ॐउपच्छायामि
वपृन्नैः ॥ अगन्मशर्मतेवयं ॥ अग्नेहिरण्यसंदृशःस्वाहा ॥ अग्नयइदं ॥ १६ ॥ ॐअदब्धेभिस्सवितःपाहिभिष्ट्वं ॥ शि
वेभिरद्यपरिपाहिनोगयं ॥ हिरण्यजिव्हःसुवितायनव्यसे ॥ रक्षामाकिर्नोअघशगुँसईशतस्वाहा ॥ सवित्रइदं ॥ १७ ॥
ॐमदेमदेहिनोददुः ॥ यूथागवामृजुक्रतुः ॥ संग्रभायपुरूशतास्वाहा ॥ गोयूथेभ्यइदं ॥ १८ ॥ ॐउभयाहस्त्यावसू ॥
शिशीहिरायआभर ॥ शिप्रिन्वाजानांपते ॥ शचिवस्तवदगुँसनास्वाहा ॥ वाजानांपत्येशिप्रिणइदं ॥ १९ ॥ ॐआतू
नइंद्रभ्राजय ॥ गोष्वश्वेषुशुभ्रिषु ॥ सहस्त्रेषुतुवीमघस्वाहा ॥ इंद्रायेदं ॥ २० ॥ ॐयदेवादेवहेडनं ॥ देवासश्चकृमाव
यं ॥ आदित्यास्तस्मान्मायूयं ॥ ऋतस्यर्तेनमुंचतस्वाहा ॥ देवेभ्यआदित्येभ्यइदं ॥ २१ ॥ ॐऋतस्यर्तेनादित्याः ॥
यजत्रामुंचतेहमा ॥ यज्ञैर्वोयज्ञवाहसः ॥ अशिक्षंतोनशेकिमस्वाहा ॥ आदित्येभ्यइदं ॥ २२ ॥ ॐमेदस्वतायजमानाः ॥
स्त्रुचाज्येनजुव्हतः ॥ अकामावोविश्वेदेवाः ॥ शिक्षंतोनोपशेकिमस्वाहा ॥ विश्वेभ्योदेवेभ्यइदं ॥ २३ ॥ ॐयदिदिवायदि
नक्तं ॥ एनएनस्याकरत् ॥ भूतंमातस्माद्भव्यंच ॥ द्रुपदादिवमुंचतुस्वाहा ॥ एनोमुंचइदं ॥ २४ ॥ द्रुपदादिवेन्मुमुचानः॥

स्विन्नःस्नात्वीमलादिवा ॥ पूतंपवित्रेणेवाज्यं ॥ विश्वेमुंचंतुमैनसःस्वाहा ॥ विश्वेभ्योदेवेभ्यइदं ॥ २५ ॥ उद्वयंतमस स्परिपश्यंतोज्योतिरुत्तरं ॥ देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमगुँस्वाहा ॥ सूर्यायज्योतिषइदं ॥ २६ ॥ ॐयद्देवादेवहेडनं ॥ देवाजीवनकाम्या॥*ऋतेनद्यावापृथिवी *॥* सजातशगुँसा *॥* यद्वाचा *॥* यद्धस्ताभ्यां *॥* इतिषड्भिर्हुत्वास्विष्टकृदादि कंकुर्यात् ॥ इतिपुनरुपनयनप्रयोगः ॥ ॥ ७ ॥ ॥ अथप्रकारांतरंनांदीपुंण्याहादिकंसर्वंपूर्ववत्कृत्वाग्निंप्रतिष्ठाप्यअग्निहो त्रिकंतंत्रंअग्न्यादयोदेवताआज्यंहविरित्यादिसंकल्प्यअन्वाधानाद्याज्यसंस्कारांतंकृत्वा पालाशीगुँसमिधमाज्येनाक्त्वा भ्याधापयन्वाचयति ॥ पुनस्त्वादित्याइत्यथावृत्यप्रायश्चित्तंजुहोति ॥ यन्मआत्मनः *॥* पुनरग्निरितिद्वाभ्यांहुत्वाथव्या हृतिचतुष्टयंपाहिनोअग्नएनसइतिपंचपुनर्व्याहृतिचतुष्टयमितिपाहित्रयोदशात्मकंप्रायश्चितंजुहुयात् ॥ अथापरोब्राह्म णानुज्ञांगृहीत्वासावित्र्याशतवारंघृतमभिमंत्र्यप्राश्नीयात् ॥ कृतप्रायश्चित्तोभवति ॥ गुरूच्छिष्टंवाभक्षयेत् ॥ कृतप्रा यश्चित्तोभवतीति ॥ एतान्यनुकल्पप्रायश्चित्तानितत्तद्दोषगुरुलाघववशाज्ज्ञेयानि ॥ इतिपुनरुपनयनप्रयोगस्समाप्तः ॥ ॥ ॥ ७ ॥ अथोपवीतनाशेतस्यप्रायश्चित्तमुक्तं ॥ पराशरे ॥ उपनयनानंतरंव्रतमध्येयज्ञोपवीतनाशेवस्त्रंवासूत्रांतरंवा धृत्वाग्निंप्रतिष्ठाप्यउपवीतनाशप्रायश्चित्तहोमंकरिष्यइतिसंकल्प्य ॥ तत्राग्निहोत्रिकंतंत्रंचित्तिर्नामाग्निःमनोज्योतिराद यो देवता आज्यंहविरित्यादिपात्रासादनाद्याज्यसंस्कारांतंकृत्वाथाज्याहुतीरुपजुहोति ॥ ॐमनोज्योतिर्जुषतामाज्यंवि च्छिन्नंयज्ञगुँसमिमंदधातु ॥ बृहस्पतिस्तनुतामिमंनोविश्वेदेवाइहमादयंतागुँस्वाहा ॥ मनसेज्योतिषेबृहस्पतयेविश्वे

भ्योदेवेभ्यइदं ॥ ॐत्रयस्त्रिगुँशत्तंतवोये ॥ अप्येतुस्वाहा ॥ देवेभ्यइदं ॥ ॐत्वमग्नेव्रतपाअसिदेवआमर्त्येष्वा ॥ त्वंयज्ञे
ष्वीड्यःस्वाहा ॥ अग्नयेव्रतपतयइदं ॥ ॐयद्वोवयंप्रमिनामव्रतानिविदुषांदेवाअविदुष्टरासः॥ अग्निष्टद्विश्वमापृणातिविद्वा
न्येभिर्देवागुँऋतुभिःकल्पयातिस्वाहा ॥ अग्नयेव्रतपतयइदं ॥ ४ ॥ इतिचतस्रआज्याहुतीर्हुत्वाहोमशेषंसमाप्य यज्ञोप
वीतंविधिवद्धारयेत् ॥ इत्युपवीतनाशप्रायश्चित्तं ॥ अथोपनयनकालातिक्रमप्रायश्चित्तमुक्तंपराशरे ॥ कपिलसंहिता
यां ॥ यदिकालोह्यतिक्रांतोनिमित्तैश्चदुरासदैः॥कालातिपत्तिजनितदोषनिष्कृतिमादितः ॥ (कुर्यादितिशेषः) ॥ पितावि
द्वदनुज्ञातोविधिवत्ब्रह्मकूर्चकं ॥ उपोष्यप्राशयेदादौततश्चाब्दव्रतंचरेत् ॥ गायत्रींचजपेल्लक्षमधिकारप्रसिद्धये ॥ इत्युप
नयनकालातिक्रमप्रायश्चित्तं॥ अथोपवीतलक्षणं ॥ शुचितंतुमादायचतसृषुसमास्वंगुलीषुषण्णवतीकृत्वागृहीत्वातावत्रिगु
णितंकृत्वापोहिष्ठादिभिः प्रक्षाल्य सावित्र्यातांत्रिवृत्कृत्वासर्जाविखादिरौदुंबराश्वत्थबिल्वपिप्पलपलाशयज्ञवृक्षाणामन्यतम
स्यशाखायांवापितृभ्योनमइतिबद्ध्वा सव्येनमृदंगृहीत्वातास्मिन्स्थापयति ॥ ॐभूःप्रतिष्ठापयामि ॥ ॐभुवःप्रतिष्ठाप
यामि ॥ ओगुँसुवःप्रतिष्ठापयामि ॥ ॐभूर्भुवस्सुवःप्रतिष्ठापयामीति ॥ अथपत्रफलदूर्वादीन्व्याहृतिभिःप्रक्षिप्यदेवर्षि
पितृणांतृप्तयइतिकरतलंत्रिस्ताडयित्वापितृणांतृप्तयइतिभ्रमन्नावेष्ट्य ॥ भूरग्निंचपृथिवींचमांच ॥ त्रीगुँश्चलोकान्त्संव
त्सरंच ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वध्रुवासीद ॥ भुवोवायुंचांतरिक्षंचमांच ॥ त्रीगुँश्चलोकान् *॥* सु
वरादित्यंचदिवंचमांच ॥ त्रीगुँश्चलोकान् *॥* भूर्भुवस्सुवश्चंद्रमसंचदिशंचमांच ॥ त्रीगुँश्चलोकान्त्संवत्सरंच ॥ प्रजापति

स्त्वासादयतु ॥ तयादैवतयांगिरस्वध्रुवासीद ॥ इतिचतसृभिरभिमंत्र्यब्रह्माविष्णुमहेश्वरान्प्रणम्यगायत्र्यादशवारम
भिमंत्रितजलेनाभ्युक्ष्य ॥ ॐकारोग्निश्चनागश्चसोमःपितरएवच॥ प्रजापतिश्चवायुश्चसूर्यस्सर्वाश्चदेवताः॥ इतिनव
तंतुदेवतान्ध्यात्वातत्तदात्मकंविभाव्य यज्ञोपवीतमंत्रेणधारयेत् ॥ ब्रह्मचारिणएकं ॥ स्नातकस्यद्वे ॥ आयुष्कामस्यब
हूनीति ॥ यज्ञोपवीतमजिनंमौंजींदंडंचधारयेत् ॥ नष्टभ्रष्टेनवंमंत्रैर्ग्राह्यंभ्रष्टंजलेक्षिपेत् ॥ हेमाद्रौ ॥ यज्ञोपवीतेद्वेधार्ये
श्रौतेस्मार्तेचकर्मणि ॥ तृतीयमुत्तरीयंस्याद्वस्त्राभावेचतुर्थकं ॥ वयोधर्मार्थमेकंस्यात्प्रायश्चित्तार्थमेककमिति ॥ इतित्र्यं
कटेशीयेपुनरुपनयनादिप्रयोगस्समाप्तः ॥ ॥ ७ ॥ ॥ अथोपाकर्मकालनिर्णयः ॥ गृह्यसू
त्रे ॥ श्रावण्यांपौर्णमास्यांक्रियेतापिवाषाढ्यामिति ॥ तत्रैव ॥ पर्वण्यौदयिकेकुर्युःश्रावण्यांतैत्तिरीयकाः ॥ बव्हृचाश्र
वणेकुर्युर्हस्तर्क्षेसामवेदिनः ॥ गुरौशुक्रेथवामूढेराष्ट्रक्षोभेमलिम्लुचे ॥ उपाकर्मनकुर्वीतकर्कटस्थेदिवाकरे ॥ एतत्प्रारंभ
विषयंगृहस्थानांनचैवतु ॥ श्रावणस्यतुनित्यत्वान्नैवनित्यानिलोपयेदिति ॥ व्यासः ॥ धनिष्ठासंयुतेकुर्याच्छ्रावणंकर्म
यद्भवेत् ॥ तत्कर्मसफलंज्ञेयमुपाकरणसंज्ञितं ॥ श्रवणेनतुयत्कर्मउत्तराषाढसंयुतं ॥ संवत्सरकृतोध्यायस्तत्क्षणादेवनश्य
ति ॥ वृद्धमनुः ॥ अत्रार्धरात्रादर्वाक्चेद्ग्रहसंक्रमएववा ॥ नोपाकर्मतदाकुर्याच्छ्रावण्यांश्रवणेनवा ॥ कात्यायनः ॥ अर्धरा
त्रादधस्ताच्चेत्संक्रांतिर्ग्रहणंतथा ॥ उपाकर्मनकुर्वीतपरतश्चेन्नदोषकृत्॥ अत्रार्धरात्रादर्वाग्ग्रहस्संक्रमोवायदिभवेत्तदाप
र्वण्युपाकर्मनकुर्यादित्युक्तत्वात्परतश्चेन्नदोषकृदित्युक्तत्वाच्चार्धरात्रादर्वाक्चेत्तद्दिनएवनिषेधः ॥ परतश्चेत्पूर्वदिननिषे

धः॥ किंतुपरदिनएवनिषेधः ॥ अतएवचतुर्दश्यामर्धरात्रात्परतो॰दिसंक्रमस्तदापरदिनस्यनिषेधात्पर्वण्युपाकर्मनकुर्या
दिति ॥ वेदोपकरणेप्राप्तेकुलीरस्थेदिवाकरे ॥ उपाकर्मनकर्तव्यंकर्तव्यंसिंव्हयुक्तके ॥एतद्देशांतरविषयं॥तत्रगुरुः ॥ नर्म
दोत्तरभागेतुकर्तव्यंसिंव्हयुक्तके ॥कर्कटेसंस्थितेभानावुपाकुर्यात्तुदक्षिणे ॥ व्यासः ॥ मासद्वयेदोषयुक्तेप्रौष्ठपद्यांकुर्यात्॥
तदुक्तंसंग्रहे ॥ श्रावणस्यतुमासस्यपौर्णमास्यांद्विजन्मनां ॥ आषाढ्यांप्रौष्ठपद्यांवावेदोपाकरणंस्मृतमिति ॥ पुनश्चसंग्र
हे ॥ गुरुभार्गवयोर्मौढ्येबाल्येवावार्धिकेपिवा ॥ तथाधिमाससंसर्पमलमासादिषुद्विजे ॥ प्रथमोपाकृतिर्नस्यात्कृतंकर्म
विनाशकृत् ॥ स्मृतिसारे ॥ यज्ञोपवीतंकर्तव्यंश्रावणेगुरुशुक्रयोः ॥ मौढ्येपिवार्धकेबाल्येनित्यवत्कर्मचोदितं ॥ स्मृति
भास्करे ॥ नित्येनैमित्तिकेजप्येहोमयज्ञक्रियासुच ॥ उपाकर्मणिचोत्सर्गेग्रहवेधोनविद्यते ॥ गोभिलः ॥ अध्यायाना
मुपाकर्मकुर्यात्कालेपराण्हके ॥ पूर्वाण्हेतुविसर्गःस्यादितिवेदविदोविदुरिति ॥ वस्तुतस्तु ॥ भवेदुपाकृतिःपौर्णमास्यां
पूर्वाण्हएवतु ॥ इतिप्रचेतसोवचनादपराण्हविधिवाक्यंसामगविषयं ॥ तेषामपराण्हएवोक्तेरित्यनुपदंवक्ष्यते ॥ दीपि
कायामपि ॥ अस्यतुविधेः पूर्वाण्हकालःस्मृतइति ॥ आश्वलायनः ॥ शरत्सुस्यात्सामगानांसदैवोपाकृतिःखलु ॥ अ
ध्वर्यूणांबव्हृचानांवर्षास्वेवविधीयते॥मलमासादिदोषाणामुत्पत्तौतुशरत्स्वपि॥अध्वर्युभिर्बव्हृचैश्चकार्यैवस्यात्युपाकृतिः॥
आश्वलायनधर्मे ॥ ग्रहदोषादुपाकर्मप्रथमंनभवेद्यदि ॥ उक्तकालेथवाषाढेकुर्याच्छरदिवापिचेति ॥ मासत्रयेपिदोषश्चे
च्छ्रावणेमासितद्भवेत् ॥ इत्युक्त्वाकर्मनत्याज्यंगुर्वस्तादिनदोषकृत् ॥ अस्तादिदोषःप्रथमोपाकृतावेव ॥ नद्वितीयादौ॥

तत्रापिस्वशाखाधिपस्यशक्त्याभावविषयः ॥ तस्यशक्तियोगेतुअन्यस्यमौढ्यादावपितत्कार्यं ॥ तथाचात्रेयः ॥ ऋग्य
जुस्सामाथर्वेशाजीवशुक्रकुजेंदुजाः ॥ शाखाधीशेशक्तियुतेतच्छाखाध्ययनंशुभं ॥ संग्रहेपि ॥ एकोमूढोभवेदन्यः स्वोच्च
मित्रांशगोयदि ॥ अन्यस्यास्तमयेकालेकुर्याच्छ्रावणिमंजसा ॥ प्रथमोपाकृतिंचापिकुर्यादेवाविचारयन् ॥ कालप्रकाशि
कायां ॥ प्राधान्येनविधानाच्चमनुनाध्यायकर्मणि ॥ प्रथमोपाकृतिश्चापिकर्तव्येत्याहगौतमः ॥ यदाचास्तंगतेशुक्रेश्राव
णेकुर्युरंजसा ॥ श्रावणस्यचनित्यत्त्वात्कर्तव्यंनित्यकर्मच ॥ एतदाषाढादिमासत्रयेपिदोषसद्भावविषयं॥अत्रशांतिरुक्ता॥
सोमोधेनुमितिद्वाभ्यांहुत्वैवोपाकृतिंचरेत् ॥ शांतिंकृत्वातयोर्वापिशुक्रेदेवेंद्रमंत्रिणोः ॥ होमदानजपैर्वापितयोरुदितमंत्रकैः ॥
कर्तव्यंश्रावणंविप्रैरितिजीवेनभाषितं॥अथपर्वनिर्णयः॥दिनकरोद्योते गोभिलः॥पर्वण्यौदयिकेकुर्युःश्रावणंतैत्तिरीयकाः ॥
बव्हृचाःश्रवणर्क्षेतुहस्तर्क्षेसामवेदिनः ॥ श्रवणेभंश्रावणं ॥ अत्रौदयिकंपर्वसंगवादधिकमेवग्राह्यं ॥ श्रावणीपौर्णमासीतु
संगवात्परतोयदि ॥ तदैवौदयिकीग्राह्यानान्याऔदयिकीभवेदितिमाधवीयेगार्ग्योक्तेश्च ॥ यत्तुकालदर्शे ॥ श्रावण्यांप्रोष्ठ
पद्यांवाप्रतिपत्क्षणमुहूर्तकैः॥विद्धास्याच्छंदसांतत्रोपाकर्मोत्सर्जनंभवेत्॥इति॥सिंगाभट्टीये॥श्रावणेश्रावणेपर्वसंगवस्पृग्य
दाभवेत् ॥ तत्रैवौदयिकंकार्यंनान्यदौदयिकंभवेदित्युक्तं ॥ तत्पर्वणस्संगवाधिक्यविषयं ॥ पूर्ववचनेनोपसंहारात् ॥
गर्ग्यः ॥ पर्वण्यौदयिकेकुर्युः श्रावणंतैत्तिरीयकाः॥बव्हृचाःश्रवणेकुर्युर्ग्रहसंक्रांतिवर्जितइति॥संप्राप्तवांच्छुतीर्ब्रह्मापर्वण्यौ
दयिकेपुनः॥अतोभूतदिनेतस्मिन्नोपाकरणमिष्यतइतिकालिकापुराणे ॥ निगमेपि ॥ परेन्हिसंगवादूर्ध्वंपूर्णिमाश्रावणे

व्रते ॥ संगवस्पर्शिनीवापिहीनापूर्वाशुभावहा ॥ शंखः ॥ उदयादुदयव्याप्तात्रिमुहूर्तायदाभवेत् ॥ उपाकरणकार्येतुश्रो
णाग्राह्यावसोर्युता ॥ हीनापूर्वातुकर्तव्याउत्तराषाढसंयुतेति ॥ यत्तुकात्यायनवचनं ॥ उदयव्यापिनीचैवत्रिषणऋक्षंघटिका
द्वयं ॥ तत्कर्मसफलंज्ञेयंतस्यपुण्यमनंतकं ॥ इत्येतदुत्तराषाढयुक्तनिषेधपरं ॥ नतद्घटिकाद्वयस्वीकारपरं ॥ शंखशौनका
दिभिस्त्रिमुहूर्तप्रयोगपर्याप्तिमुक्तत्वात् ॥ वैष्णवे ॥ धनिष्ठासंयुतांशस्तामुपाकरणकर्मणि ॥ उदयेत्रिमुहूर्तातुनोचेत्पूर्वा
शुभावहेति ॥ संग्रहे ॥ मासफलमाह ॥ उपाकृतिःश्रावणेतुब्रह्मवीर्योभवेद्द्विजः ॥ भाद्रेतुक्षत्रवीर्यःस्यात्कृषिवृद्धिःशुचौभवे
दितियाज्ञवल्क्योक्तेः ॥ उत्तमाश्रावणेमासिमध्याभाद्रपदेभवेत् ॥ आषाढेलघमाज्ञेयानान्यमासेत्वुपाकृतिः ॥ स्मृतिभ
रत्यां ॥ बृहत्प्रचेताः ॥ भवेदुपाकृतिः पूर्णमास्यांपूर्वाण्हएवतु ॥ ब्राह्मणान्भोजयेत्तत्रपितॄनुद्दिश्यदेवताः ॥ इतिनांदी
श्राद्धविधानंप्रथमोपाकृतिविषयं ॥ अत्रैवंव्यवस्था ॥ यजुर्वेदिनांपरेद्युः पूर्णिमासंगवात्परतोवासंगवस्पृगितिसार्धद्वाद
शघटिकापरिमितसंगवकालपर्यंतंवास्तिचेत्परेद्युरेव ॥ सार्धद्वादशघटिकान्यूनाचेत्पूर्वेद्युरेवोपाकर्मकुर्यात् ॥ चतुर्दशी
युतनिषेधस्तुपरदिनेसंगवात्परतोभावविषयः ॥ तथा ॥ बव्हृचानांचपरदिनेविष्णवृक्षेत्रिमुहूर्तेन्यूनेउत्तराषाढयुतस्यस्वी
कारात्तुहीनापूर्वाशुभावहेत्युक्तत्वाच्च ॥ प्रतिपत्षणमुहूर्तकैरित्युक्त्वाषणमुहूर्तसद्भावस्यकर्मकालपर्याप्तत्वात्ततोन्यूनेकर्त
व्यत्वाविधानात्पूर्वेद्युरेवेति ॥ तत्रापिपूर्वाण्हएव ॥ नूतनब्रह्मचारिणांतुअस्तमलमासादिवर्जितश्रावणभाद्रपदयोर्वाशु
द्धमासेपूर्वरात्रादर्वाक्पूर्वदिनापररात्रात्परतोवाग्रहसंक्रांतिवर्जितनांदीश्राद्धंकृत्वोपाकर्मकुर्यात् ॥ तयोरपिदोषसद्भावेवा

धायनानामाषाढस्यविहितत्त्वात्तत्रैवकार्यं ॥त्रिष्वपिमासेषुदोषयुक्तेषुपूर्वोक्तप्रायश्चित्तंकृत्वाश्रावणेकुर्यात् ॥ शरत्स्वपीति वचनाच्छरत्कालेवाकर्तव्यं ॥ नूतनब्रह्मचारिणामुपाकर्ममात्रं ॥ अन्येतूत्सर्जनपूर्वकमुपाकर्मकुर्युः ॥ इत्युपाकर्मकालनिर्णयः ॥ ७ ॥ अथोत्सर्जनकालः ॥ सिंगाभट्टीये ॥ श्रावण्यांप्रौष्ठपद्यांवापौर्णमास्यामुपक्रमः ॥ प्रादुर्भावेत्वोषधीनां यदास्यात्तैत्तिरीयकाः ॥ तैष्यांतुपौर्णमास्यांवामाघ्यांवोत्सर्जनंभवेत् ॥ गृह्यसूत्रे॥ उत्सर्गबलिस्तैष्यांपौर्णमास्यांक्रियेतापि वामाघ्यामिति ॥ कारिकायां ॥ यद्याषाढ्यामुपाकर्मतैष्यांस्वाध्यायमुत्सृजेत् ॥ श्रावण्यांचतथामाघ्यांतैष्यांवेत्यपरंमतं ॥ प्रौष्ठपद्यामुपाकृत्यमाघ्यांवापितमुत्सृजेदिति॥ अथवोपाकर्मदिनएवकार्यं॥ पुष्येतूत्सर्जनंकुर्यादुपाकर्मदिनेथवेतिहेमाद्रौ॥ खादिरगृह्योक्तेः॥ परिशिष्टेपि॥मासेप्रौष्ठपदेहस्तात्पुष्यःपूर्वोभवेद्यदा॥तदावाश्रावणेकुर्यादुत्सर्गंछंदसांद्विजइति॥ निर्णयामृतेमनुः ॥ श्रावणेप्रौष्ठपद्यांवाह्युपाकृत्ययथाविधि ॥ युक्तंछंदांस्यधीयीतमासान्विप्रोर्धपंचमान् ॥अर्धपंचमोयेषांत अर्धपंचमाः॥ (उपाकर्मप्रभृतिसार्धांश्चतुरोमासान्स्वाध्यायदिनेष्वधीयीतेत्यर्थः)॥ विष्णुभट्टः ॥ तच्चश्रावण्यांपौर्णमास्यांग्रहसंक्रांतिवर्जितायांक्रियेतापिवाषाढ्यामेवंविधायांप्रौष्ठपद्यांवान्यस्यांवातिथावावश्यकत्वात्॥अथयातयामदोषाः॥ आस्थानोच्छ्वासविच्छेदघोषणाध्यापनादिकं॥ प्रामादिकंश्रुतौयत्स्याद्यातयामत्वकारितदिति ॥ अथोत्सर्जनोपाकर्मसमानतंत्रप्रयोगः॥ अथाचार्यस्सशिष्यः प्रातर्नद्यादौस्नात्वाशुक्लेवाससीपरिधायनित्यकर्मकृत्वानदीतीरेदेवालयेवाशुचौदेशेदेवर्षिपितृमंडलानिलिखेत् ॥ यथा ॥ मध्येप्रागग्राःषड्रेखाःउदगग्राअष्टौएवंकृतेपंचत्रिंशत्कोष्ठानिभवंति ॥ तद्दक्षिणतअगस्त्यायैकं ॥ एवं

षट्त्रिंशत् ॥ तदुत्तरप्रागग्राउदगग्राश्चाष्टावष्टौरेखालिखेत्॥ एवंकृतेएकोनपंचाशत्कोष्ठानिभवंति ॥ तद्दक्षिणेप्रागग्राश्चत
स्रउदगग्राअष्टौएवंकृतेएकविंशतिकोष्ठानिभवंति ॥ तद्दक्षिणेस्वस्वपितॄणांप्रागग्राःपंचउदगग्राश्चतस्रएवंकृतेद्वादशको
ष्ठानिभवंति ॥ एवंमंडलचतुष्टयंविलिख्य ॥ तंडुलैःपूरयित्वादेवमंडलेदर्भद्वयकृतान्कूर्चान्प्रागग्रान्निधाय ॥ अथर्षिमंडलेद
र्भद्वयकृतान्कूर्चानुदगग्रान् ॥ पितृमंडलेदर्भत्रयकृतान्कूर्चान्दक्षिणाग्रानासनार्थंकल्पयित्वाततस्सर्वैष्याचमनप्राणायामौ
कृत्वादेशकालौसंकीर्त्यउत्सर्जनोपाकर्माख्यकर्मकर्तुंममशरीरशुद्ध्यर्थंस्नानपवनमंत्राचमनमंत्रप्रोक्षणानिकरिष्य इतिसं
कल्प्य॥ तत्कृत्वागणपतिंसंपूज्यउत्सर्जनोपाकर्माख्यकर्मकर्तुंशांत्यर्थंतुष्ट्यर्थंवृद्ध्यर्थंचब्राह्मणैस्सहस्वस्तिपुंण्याहवाचना
ख्यंकर्मकरिष्यइतिसंकल्प्यानयोरुत्सर्जनउपाकर्माख्यकर्मणोःपुंण्याहंभवंतोब्रुवंतु ॥ अनयोरुत्सर्जनोपाकर्माख्यकर्मणोर्ऋद्धिंभवंतोब्रुवंतु ॥ आभ्यामुत्सर्जनोपाकर्माख्यकर्म
भ्यांस्वस्तिभवंतोब्रुवंतु ॥ अनयोरुत्सर्जनोपाकर्माख्यकर्मणोर्ऋद्धिंभवंतोब्रुवंतु ॥ देवर्षिपितरःप्रीयंतां ॥ सविताप्रीयता
मित्यादिमार्जनांतंकृत्वा ॥ ततस्सशिष्यआचार्योदर्भेष्वासीनोदर्भान्धारयमाणःपवित्रपाणिःप्राणानायम्यदेशकालौसंकी
र्त्यममसर्वेषांचाधीतानांछंदसांगुँसवीर्यत्वायश्रीपरमेश्वरप्रीत्यर्थमुत्सर्जनाख्यंकर्मकरिष्ये ॥ तदंगत्वेनदेवर्षिपितॄन्पूजयि
ष्ये ॥ इत्युक्त्वाथमध्येदेवमंडलेनैर्ऋत्यकोणादारभ्यप्रागपवर्गंयज्ञोपवीतीअक्षतान्गृहीत्वादक्षिणभागस्थप्रथमपंक्तौ ॥
ॐब्रह्मणेकल्पयामि ॥१॥ प्रजापतये ॥ २ ॥ बृहस्पतये ॥ ३ ॥ अग्नये ॥४॥ वायवे ॥ ५ ॥ सूर्याय ॥ ६ ॥ चंद्रमसे ॥ ७ ॥
तदुत्तरेद्वितीयपंक्तौ ॥ नक्षत्रेभ्यः ॥ ८ ॥ ऋतुभ्यः ॥ ९ ॥ संवत्सराय ॥१०॥ इंद्रायराज्ञे ॥११॥ सोमायराज्ञे ॥१२॥ यमा

यराज्ञे ॥१३॥ वरुणायराज्ञे ॥१४॥ तदुत्तरेतृतीयपंक्तौ ॥ वैश्रवणायराज्ञे ॥१५॥ वसुभ्यः ॥१६॥ रुद्रेभ्यः ॥१७॥ आदित्येभ्यः ॥१८॥ विश्वेभ्योदेवेभ्यः ॥१९॥ साध्येभ्योदेवेभ्यः ॥२०॥ सर्वेभ्योदेवताभ्यः ॥२१॥ तदुत्तरेचतुर्थपंक्तौ ॥ सर्वाभ्योदेवताभ्यः ॥२२॥ मरुद्भ्यः ॥२३॥ ऋभुभ्यः ॥२४॥ भृगुभ्यः ॥२५॥ अथर्वभ्यः ॥२६॥ अंगिरोभ्यः ॥२७॥ विश्वामित्राय ॥२८॥ तदुत्तरेपंचमपंक्तौ ॥ जमदग्नये ॥२९॥ भरद्वाजाय ॥३०॥ गौतमाय ॥३१॥ अत्रये ॥३२॥ वसिष्ठाय ॥३३॥ कश्यपाय ॥३४॥ अरुंधत्यै ॥३५॥ तद्दक्षिणेकोष्ठे ॥ अगस्त्यायकल्पयामि ॥ १ ॥ ३६ ॥ एतैरेवनामधेयैश्चतुर्थ्यंतैर्नमोंतैरावाहनादिसर्वोपचारान्कुर्यात् ॥ अथनिवीतिनस्तदुत्तरेऋषिमंडलेनैर्ऋत्यकोणादारभ्योदगपवर्गं ॥ प्रथमपंक्तौ ॥ कृष्णद्वैपायनायकल्पयामि ॥ १ ॥ जातूकर्ण्याय ॥ २ ॥ तरुक्षाय ॥ ३ ॥ तृणबिंदवे ॥ ४ ॥ सोमशुष्मिणे ॥ ५ ॥ सोमशुष्मायणाय ॥ ६ ॥ वाजिने ॥ ७ ॥ तत्पूर्वेद्वितीयपंक्तौ ॥ वाजश्रवसे ॥ ८ ॥ बृहदुक्थाय ॥ ९ ॥ वर्मिणे ॥१०॥ सनत्कुमाराय ॥११॥ भरद्वाजाय ॥१२॥ वामदेवाय ॥१३॥ वाजरत्नाय ॥१४॥ तत्पूर्वेतृतीयपंक्तौ ॥ हर्यश्वाय ॥१५॥ उदमाय ॥१६॥ ऋणंजयाय ॥१७॥ तृणंजयाय ॥१८॥ कृतंजयाय ॥१९॥ धनंजयाय ॥२०॥ सत्यंजयाय ॥२१॥ तत्पूर्वेचतुर्थपंक्तौ ॥ बभ्रुवे ॥२२॥ त्रियऋणाय ॥२३॥ त्रियऋषये ॥२४॥ त्रिधातवे ॥२५॥ अश्वज्ञाय ॥२६॥ पराशराय ॥२७॥ इंद्राय ॥२८॥ तत्पूर्वेपंचमपंक्तौ ॥ मृत्यवे ॥२९॥ कर्त्रे ॥३०॥ विकर्त्रे ॥३१॥ सुकर्त्रे ॥३२॥ त्वष्ट्रे ॥३३॥ धात्रे ॥३४॥ विधात्रे ॥ ३५ ॥ तत्पूर्वेषष्ठपंक्तौ ॥ सुधात्रे ॥ ३६ ॥ सुश्रवसे ॥३७॥ सत्यश्रवसे ॥३८॥ सवित्रे ॥ ३९ ॥ सावि

र्व्यै ॥४०॥ छंदोभ्यः॥४१॥ ऋग्वेदाय ॥४२॥ तत्पूर्वेसप्तमपंक्तौ॥ यजुर्वेदाय ॥४३॥ सामवेदाय॥४४॥ अथर्ववेदाय॥४५॥ अथर्वांगिरोभ्यः॥४६॥ इतिहासपुराणेभ्यः ॥४७॥ सर्पदेवजनेभ्यः ॥४८॥ सर्वभूतेभ्यःकल्पयामि ॥४९॥ कृष्णद्वैपाय नायनमइत्यादिभिश्चतुर्थ्यंतैर्नमोंतैर्नाममंत्रैरावाहनाद्युपचारान्कुर्यात् ॥ अथतद्दक्षिणेपितृमंडलेप्राचीनावीतीवायव्यको णादारभ्यदक्षिणापवर्गं॥ प्रथमपंक्तौ ॥ वैशंपायनाय ॥१॥ फलिंगवे ॥२॥ तित्तिरये ॥ ३ ॥ तत्पूर्वेद्वितीये ॥ उखाय ॥ ४ ॥ उख्याय ॥ ५ ॥ आत्रेयाय ॥ ६ ॥ तत्पूर्वेतृतीये ॥ पदकाराय ॥७॥ कौंडिण्याय ॥८॥ वृत्तिकाराय ॥ ९ ॥ चतु र्थ्यां ॥ कण्वाय ॥१०॥ बोधायनाय ॥११॥ प्रवचनकाराय ॥१२॥ पंचम्यां ॥ आपस्तंबाय ॥१३॥ सूत्रकाराय ॥१४॥ सत्याषाढाय ॥ १५ ॥ षष्ठ्यां ॥ हिरण्यकेशाय ॥१६॥ आचार्येभ्यः ॥१७॥ ऊर्ध्वरेतोभ्यः ॥१८॥ सप्तम्यां ॥ वानप्रस्थे भ्यः ॥१९॥ वंशस्थेभ्यः ॥२०॥ एकपत्निभ्यःकल्पयामि ॥ २१ ॥ इत्यासनंकल्पयित्वा॥वैशंपायनायनमइत्यादिभिर्ना ममंत्रैश्चतुर्थ्यंतैर्नमोंतैरावाहनाद्युपचारान्कुर्यात्॥ तद्दक्षिणे ॥ पितृभ्यःपितामहेभ्यःप्रपितामहेभ्यः ॥ मातृभ्यःपितामही भ्यःप्रपितामहीभ्यः ॥ मातामहेभ्यः मातुः पितामहेभ्यः मातुःप्रपितामहेभ्यः ॥ मातामहीभ्यः मातुः पितामहीभ्यः मा तुःप्रपितामहीभ्यःकल्पयामि ॥ इत्यासनंकल्पयित्वापितृभ्योनमइत्यादिभिरावाहनादिपूजांकुर्यात् ॥ अथ ॥ ॐब्रह्मणे स्वाहा ॥ प्रजापतयेस्वाहा ॥ इत्यादिभिःस्वाहांतैर्नामभिरन्नेनबलिंदत्वाथयज्ञोपवीतीहस्तेफलोदकंगृहीत्वातर्पयति ॥ ब्रह्माणंतर्पयामि ॥ प्रजापतिंतर्पयामि ॥ बृहस्पतिंतर्पयामि ॥ अग्निं ।वायुं ॥ सूर्यं ॥ चंद्रमसं ॥ नक्षत्राणि ॥ ऋतूंस्तर्प

यामि ॥ संवत्सरं ॥ इंद्रंराजानं ॥ यमंराजानं ॥ वरुणंराजानं ॥ वैश्रवणंराजानं ॥ वसूंस्त ॥ रुद्रांस्त ॥ आदित्यांस्त ॥
विश्वान्देवांस्त ॥ साध्यान्देवांस्त ॥ सर्वान्देवतांस्त ॥ मरुतस्त ॥ ऋभूंस्त ॥ भृगूंस्त ॥ अथर्वणस्त ॥ अंगिरसस्त ॥ वि
श्वामित्रं ॥ जमदग्निं ॥ भरद्वाजं ॥ गौतमं ॥ अत्रिं ॥ वसिष्ठं ॥ कश्यपं ॥ अरुंधतीं ॥ अगस्त्यं ॥ अथनिवीतिनऋषीन्द्विर्द्वि
स्तर्पयंति ॥ कृष्णद्वैपायनंतर्पयामितर्पयामि ॥ जातूकर्ण्यं ॥ तरुक्षं ॥ तृणबिंदुं ॥ सोमशुष्मिणं ॥ सोमच्छुष्मायणं ॥ वाजि
नं ॥ वाजश्रवसं ॥ बृहदुक्थं ॥ वर्मिणं ॥ सनत्कुमारं ॥ भरद्वाजं ॥ वामदेवं ॥ वाजरत्नं ॥ हर्यश्वं ॥ उदमयं ॥ ऋणंजयं ॥ अऋणं
जयं ॥ कृतंजयं ॥ धनंजयं ॥ सत्यंजयं ॥ बभ्रुं ॥ त्रियऋणं ॥ त्रियऋषिं ॥ त्रिधातुं ॥ अश्वज्ञं ॥ पराशरं ॥ इंद्रं ॥ मृत्युं ॥ कर्तारं ॥
विकर्तारं ॥ सुकर्तारं ॥ त्वष्टारं ॥ धातारं ॥ विधातारं ॥ सुधातारं ॥ सुश्रवसं ॥ सत्यश्रवसं ॥ सवितारं ॥ सत्यं ॥ छंदाँगुँसि ॥ ऋ
ग्वेदं ॥ यजुर्वेदं ॥ सामवेदं ॥ अथर्ववेदं ॥ अथर्वांगिरसस्त ॥ इतिहासपुराणानि ॥ सर्पदेवजनांस्तर्पयामि ॥ सर्वभूतानितर्प
यामितर्पयामीतिद्विर्द्विस्तर्पयित्वाथप्राचीनावीतीपितॄन्त्रिस्त्रिस्तर्पयति ॥ वैशंपायनंतर्पयामितर्पयामितर्पयामि ॥ फलिंगुं ॥
तित्तिरिं ॥ उखं ॥ उख्यं ॥ आत्रेयं ॥ पदकारं ॥ कौंडिण्यं ॥ वृत्तिकारं ॥ कण्वं ॥ बोधायनं ॥ प्रवचनकारं ॥ आपस्तंबं ॥ सूत्रका
रं ॥ सत्याषाढं ॥ पराशरं ॥ हिरण्यकेशं ॥ आचार्यांस्त ॥ उर्ध्वरेतसस्त ॥ वानप्रस्थांस्त ॥ वंशस्थांस्त ॥ एकपत्नींस्तर्प
यामीतित्रिस्त्रिः ॥ अथस्वस्वपितरः ॥ पितॄंस्तर्पयामि ॥ पितामहांस्तर्पयामि ॥ प्रपितामहांस्तर्पयामि ॥ मातॄस्तर्पयामि ॥
पितामहीस्तर्प ॥ प्रपितामहीस्त ॥ मातामहांस्त ॥ मातुःपितामहांस्त ॥ मातुःप्रपितामहांस्त ॥ मातामहीस्तर्पयामि ॥

मातुःपितामहीस्त॥मातुःप्रपितामहीस्त॥अत्रपित्रादिनवानांत्रिस्त्रिस्तर्पणंमातामह्यादितिसृणांसकृत्सकृत्॥ अथोपवीति
नआचम्यब्रह्मयज्ञंकुर्युः॥ अथाचम्यदर्भेष्वासीनोदर्भान्धारयमाणःपवित्रपाणिःप्राणानायम्यममाधीतानांछंदसांगुँसवी
र्यत्वायउत्सर्जनांगत्वेनश्रीपरमेश्वरप्रीत्यर्थंब्रह्मयज्ञेनयक्ष्ये॥ चतुरोदर्भान्गृहीत्वावामपादोपरिदक्षिणपादंप्रतिष्ठाप्याथद
क्षिणजानुनिदक्षिणोत्तरौपाणीनिधाय॥ ॐभूर्भुवस्सुवःतत्सवितुर्वरेण्यं ॥ भर्गोदेवस्यधीमहि॥ धियोयोनःप्रचोदयात्।
ॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि॥ धियोयोनःप्रचोदयात्॥ ॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहिधियोयोनःप्रचोद
यात्॥ ॐअग्निमीळेपुरोहितं॥ इषेत्वोर्जेत्वा॥ यज्ञस्यशुंधध्वमितित्रिरनुवाकान्॥ आपउंदंतु॥ उद्धन्यमानं॥ अनुम
त्यैपुरोडाशमित्यष्टमप्रश्नानुवाकं॥ब्रह्मसंधत्तं॥ भद्रंकर्णेभिः॥ सहैवदेवानां॥ संज्ञानंविज्ञानं॥ इत्येताननुवाकान्प्र
तीकान्वाधीत्यतत्तत्कांडादींश्चाधीत्य॥ अग्नआयाहि॥ शन्नोदेवी॥ अथशिक्षांप्रवक्ष्यामि॥अमावास्येनवापौर्णमास्येन
वाहविषायक्ष्यमाणोभवति॥वृद्धिरादैच्॥समाम्नायस्समाम्नातः॥मयरसतजभनलगसंमितं॥ पंचसंवत्सरमयं॥गौः॥ग्मा॥
ज्मा॥ योगीश्वरंयाज्ञवल्क्यं॥ नारायणंनमस्कृत्य॥ अथातोधर्मजिज्ञासा॥ अथातोब्रह्मजिज्ञासा॥ ॐनमोब्रह्मणेनमो
अस्त्वग्नयेनमः पृथिव्यैनमओषधीभ्यः॥ नमोवाचेनमोवाचस्पतयेनमोविष्णवेबृहतेकरोमि॥ इतित्रिरुक्त्वा॥ वृष्टिरसि
वृश्चमेपाप्मानमृतात्सत्यमुपागां॥ हस्तावविनिज्यशिरश्चक्षुषीनासिकेश्रोत्रेहृदयमालभते॥इतिसकृदुपस्पृश्य॥कांडात्कां
डात्प्ररोहंतीपरुषःपरुषःपरि॥एवानोदूर्वेप्रतनुसहस्रेणशतेनच॥ याशतेनप्रतनोषिसहस्रेणविरोहसितस्यास्तेदेवीष्टकेवि

धेमहविषावयं॥ इतिद्वाभ्यांजलसमीपेदूर्वारोपयित्वाथनिवीती॥प्रजापतिंकांडऋषींस्तर्पयामितर्पयामि॥सोमंकांडऋषीं॥
अग्निंकांडऋषीं ॥ विश्वान्देवान्कांडऋषीं ॥ स्वयंभुवंकांडऋषींस्तर्पयामीतिद्विर्द्विस्तर्पयित्वाथयज्ञोपवीतीत्यपआचम्य॥
ॐकामोकार्षीन्नमोनमः ॥ कामोकार्षीत्कामःकरोतिनाहंकरोमिकामःकर्तानाहंकर्ताकामः कारयितानाहंकारयिताएषते
कामकामायस्वाहा॥ मन्युरकार्षीन्नमोनमः ॥ मन्युरकार्षीन्मन्युः करोतिनाहंकरोमिमन्युःकर्तानाहंकर्तामन्युःकारयि
तानाहंकारयिताएषतेमन्योमन्यवेस्वाहा॥ उत्सृष्टावैवेदाः॥ ततोदेवर्षिपितृनुद्वास्यानेनोत्सर्जनकर्मणाश्रीपरमेश्वरःप्रीय
तां॥इत्युत्सर्जनप्रयोगः ॥७॥अथोपाकर्मप्रयोगः॥उत्सर्जनानंतरंस्नानंवापुण्याहजलप्रोक्षणंवाकृत्वाशिष्यैस्सहमन्वारब्ध
आचार्यः ॥ आचम्यप्राणानायम्यस्थंडिलोल्लेखनादिलौकिकाग्निंप्रतिष्ठाप्यप्राणानायम्यदेशकालौसंकीर्त्याध्येष्यमाणा
नांछंदसांसुवीर्यत्वायउपाकर्माख्यंकर्मकरिष्ये ॥ उपाकर्महोमः कर्मआघारवत्तंत्रंपंचदशदारुरिध्मः अग्नीषोमावाज्य
भागौबलवर्धनोनामाग्निस्सवितादेवताचरुर्हविराज्यस्यमांत्रवर्णिक्योदेवताइत्यादिसंकल्प्यान्वाधानाद्याप्रणीताभ्यः कु
शाग्रेणाग्निंपंचकोष्ठेषुतंडुलपुंजेषूदगग्रंकूर्चन्निधायनिवीतिनोभूत्वाउपाकर्मांगत्वेनपंचकांडर्षीन्पूजयिष्ये॥ ॐसप्ततेअग्नेस
मिधस्सप्तजिह्वास्सप्तर्षयस्सप्तधामप्रियाणि ॥ सप्तहोत्रास्सप्तधात्वायजंतिसप्तयोनीरापृणस्वाघृतेन॥ ॐभूःप्रजापतिं
कांडर्षीमावाहयामि ॥ ॐभुवः प्रजापतिंकांडर्षीं ॥ ॐसुवः प्रजापतिं ॥ ॐभूर्भुवस्सुवः प्रजापतिंकांडर्षीं ॥ ॐभूःसो
मंकांडर्षीं ॥ ॐभुवः सोमंकांडर्षीं ॥ ॐसुवःसोमंकांडर्षीं ॥ ॐभूर्भुवस्सुवःसोमंकांडर्षीं ॥ ॐभूः अग्निंकां ॥ ॐभूः

विश्वान्देवान्काडर्षीनावाहयामि ॥ ॐभूः स्वयंभुवंकांड ॥ ॐभूर्भुवस्सुवः स्वयंभुवंकांडर्षीभ्योनमइतिगंधपुष्पादिभिर
भ्यर्च्य ॥ प्रजापतिंकाडर्षींस्तर्पयामितर्पयामीतिद्विर्द्विस्तर्पयित्वापरिधानप्रभृत्याग्निमुखांतंकृत्वापक्वाज्जुहोति ॥ ॐभूर्भु
वस्सुवरों तत्सवितुः ॥ प्रचोदयात्स्वाहा ॥ सवित्रइदं ॥ ततःस्विष्टकृदवदानात्पूर्वमेकोनविंशत्याज्याहुतीर्जुहोति ॥
ॐयाज्ञिकीभ्योदेवताभ्यःस्वाहा॥ याज्ञिकीभ्योदेवताभ्यइदं॥ ॐसाँहिकीभ्योदेवताभ्यःस्वाहा॥ साँहिकीभ्योदेवता
भ्यइदं ॥ ॐवारुणीभ्योदेवताभ्यः स्वाहा ॥ वारुणीभ्योदेवताभ्यइदं॥ ॐसर्वाभ्योदेवताभ्यःस्वाहा॥सर्वाभ्योदेवताभ्यइदं
॥ अथनिवीती ॥ ॐप्रजापतयेकांडऋषयेस्वाहा ॥ प्रजापतयेकांडऋषयइदं ॥ ॐसोमायकांडऋषयेस्वाहा ॥ सोमायकां
डऋषयइदं ॥ ॐअग्नयेकांडऋषयेस्वाहा ॥ अग्नयेकांडऋषयइदं ॥ ॐविश्वेभ्योदेवेभ्यः कांडऋषिभ्यःस्वाहा ॥ विश्वे
भ्योदेवेभ्यः कांडऋषिभ्यइदं ॥ ॐस्वयंभुवेकांडऋषयेस्वाहा ॥ स्वयंभुवेकांडऋषयइदं ॥ उपवीती ॥ ॐसदसस्प
तिमद्भुतंप्रियमिंद्रस्यकाम्यं ॥ सनिंमेधामयासिषँस्वाहा ॥ सदसस्पतयइदं ॥ ॐतत्सवितुः ॥ प्रचोदयात्स्वाहा ॥
सवित्रइदं ॥ ऋग्वेदायस्वाहा ॥ ऋग्वेदायेदं ॥ यजुर्वेदायस्वाहा ॥ यजुर्वेदायेदं ॥ सामवेदायस्वाहा ॥ सामवेदायेदं ॥
अथर्ववेदायस्वाहा ॥ अथर्ववेदायेदं ॥ अथर्वांगिरोभ्यःस्वाहा ॥ अथर्वांगिरोभ्यइदं ॥ इतिहासपुराणेभ्यःस्वाहा ॥ इति
हासपुराणेभ्यइदं ॥ सर्पदेवजनेभ्यःस्वाहा ॥ सर्पदेवजनेभ्यइदं ॥ सर्वभूतेभ्यःस्वाहा ॥ सर्वभूतेभ्यइदं ॥ १९ ॥ इत्येकोन
विंशत्याज्याहुतीर्हुत्वा ॥ अवदानधर्मेणयज्ञोपवीतंजुहोतीतिसूत्रेउक्तत्वात् ॥ दर्व्यामुपस्तीर्ययज्ञोपवीतमवदायाभिघा

र्यं ॥ ॐयज्ञोपवीतं ≑ तेजःस्वाहा ॥ प्रजापतयइदं ॥ इतिहुत्वागुरुभ्योयज्ञोपवीतंदत्वापितृभ्योब्राह्मणेभ्यश्चदत्वाप्रा
णानायम्यममश्रौतस्मार्तनित्यकर्मानुष्ठानयोग्यतासिद्ध्यर्थमुपाकर्मांगत्वेनउपवीतधारणंकरिष्यइतिसंकल्प्य॥ ॐॐका
रोग्निश्चनागश्चसोमःपितृप्रजापती ॥ वायुःसूर्योविश्वेदेवाइत्येतेतंतुदेवताः ॥ इतितत्तद्देवतात्मकंध्यात्वागंधपुष्पाक्षताद्यैर
भ्यर्च्यदेवस्यत्वेत्यादायस्योनापृथिवीतिभूमौनिधायउद्वयंतमसस्परीत्यादित्यंदर्शयित्वा॥यज्ञोपवीतमंत्रेणोपवीतंधृत्वाच
म्यएवमेवपुनर्मंत्रमुक्त्वाधृत्वापुनरप्याचमेत् ॥ ब्रह्मचारीत्वेकमेवधृत्वाचम्यइयंदुरुक्तादितिमेखलांधृत्वाऋतस्यगोप्त्रीति
परिवीयप्रमाणानांग्रंथिरसीतिग्रंथिंकृत्वा मित्रस्यचक्षुरितिकृष्णाजिनंधृत्वासोमोसीतिपालाशदंडंबैल्वंचेद्ब्रह्मवर्चसमासिब्र
ह्मवर्चसायत्वेतिधृत्वाचम्याथदर्भेष्वासीनोदर्भान्धारयमाणः पवित्रपाणिः प्राणानायम्यउत्सृष्टानांछंदसामुपाकरणार्थम
ध्येष्यमाणानांछंदसाग्ँसुवीर्यत्वायोपाकर्मांगत्वेनब्रह्मयज्ञेनयक्ष्ये ॥ विद्युदसिविद्यमेपाप्मानमृतात्सत्यमुपैमीत्यपस्पृष्ट्वा
त्रिराचम्याद्भिःपरिमृज्यसकृदुपस्पृश्यशिरश्चक्षुषीनासिकेश्रोत्रेहृदयमालभ्यवामपादोपरिदक्षिणपादंप्रतिष्ठाप्यदक्षिणजा
नूपरिदक्षिणोत्तरंवामहस्तंप्रतिष्ठाप्य॥ ॐभूर्भुवःसुवःतत्सवितुर्वरेण्यं ≑ प्रचोदयात्॥इतिपादोर्धर्चशःत्रिरुक्त्वा॥ ॐअग्नि
मीळेपुरोहितंयज्ञस्यदेवमृत्विजं॥ होतारग्ँरत्नधातमं॥ॐइषेत्वोर्जेत्वावायवस्थोपायवस्थदेवोवस्सविताप्रार्पयतुश्रेष्ठतमा
यकर्मणे ॥ ॐअग्नआयाहिवीतयेगृणानोहव्यदातये॥ निहोतासत्सिबर्हिषि॥ शन्नोदेवीरभिष्टयआपोभवंतुपीतये॥ शंयो
रभिस्रवंतुनः॥ इतिचतुरोवेदादीन्जपित्वा ॥ पुनः॥ इषेत्वा॰॥॰यज्ञस्य॰॥॰शुंधध्वमितित्रिरनुवाकान् ॥ आपउंदंतुजीवसे

दीर्घायुत्वायवर्चसओषधेत्रायस्वैनगुँस्वधितेमैनगुँहिगुँसीर्देवश्रूरेतानिप्रवपेस्वस्त्युत्तराण्यशीयापोअस्मान्मातरःशुंधंतु
घृतेननोघृतपुवः पुनंतुविश्वमस्मत्प्रवहंतुरिप्रमुदाभ्य : शुचिरापूतएमिसोमस्यतनूरसितनुवंमेपाहिमहीनांपयोसिवर्चोधा
असिवर्चः ॥ १ ॥ मयिधेहिवृतस्यकनीनिकासिचक्षुष्पाअसिचक्षुर्मेपाहिचित्पतिस्त्वापुनातुवाक्पतिस्त्वापुनातुदेवस्त्वास
वितापुनात्वच्छिद्रेणपवित्रेणवसोस्सूर्यस्यरश्मिभिस्तस्यतेपवित्रपतेपवित्रेणयस्मैकंपुनेतच्छकेयमावोदेवासईमहेसत्य
धर्माणोअध्वरेयद्वोदेवासआगुरेयज्ञियासोहवामहइंद्राग्नीद्यावापृथिवीआपओषधीस्त्वंदीक्षाणामधिपतिरसीहमासंतंपा
हि ॥ २ ॥उद्धन्यमानमस्याअमेध्यं ॥ अपपाप्मानंयजमानस्यहंतु ॥ शिवानस्संतुप्रदिशश्चतस्रः ॥ शन्नोमातापृथिवीतोक
साता ॥ शन्नोदेवीरभिष्टये ॥ आपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ वैश्वानरस्यरूपं ॥ पृथिव्यांपरिस्रसा ॥ स्योनमावि
शंतुनः ॥ १ ॥ यदिदंदिवोयदिदःपृथिव्याः ॥ संजज्ञानेरोदसीसंबभूवतुः ॥ ऊषान्कृष्णमवतुकृष्णमूषाः ॥ इह्योभयोर्यज्ञि
यमागमिष्ठाः ॥ ऊतीःकुर्वाणोयत्पृथिवीमचरः ॥ गुहाकारमाखुरूपंप्रतीत्य ॥ तत्तेन्यक्तमिहसंभरंतः॥ शतंजीवेमशरदःसवी
राः॥ऊर्जंपृथिव्यारसमाभरंतः॥ शतंजीवंतुशरदःपुरूचीः॥२॥ वम्रीभिरनुवित्तंगुहासु ॥ श्रोत्रंतउर्व्यबधिराभवामः ॥ प्रजा
पतिसृष्टानांप्रजानां॥ क्षुधोपहत्यैसुवितन्नोअस्तु ॥ उपप्रभिन्नमिषमूर्जंप्रजाभ्यः ॥ सूदंग्रहेभ्योरसमाभरामि ॥ यस्यरूपं
बिभ्रतिमामविंदत् ॥ गुहाप्रविष्टगुँसरिरस्यमध्ये ॥ तस्येदंविहतमाभरंतः ॥ अच्छंबट्कारमस्यांविधेम ॥३॥ ॐअनुमत्यै
पुरोडाशमष्टाकपालन्निर्वपतिधेनुर्दक्षिणायेप्रत्यंचःशम्यायाअवशीयंतेतन्नैर्ऋतमेककपालंकृष्णंवासःकृष्णतुषंदक्षिणाविहि

स्वाहाहुतिंजुषाणएषतेनिर्ऋतेभागोभूतेहविष्मत्यसिमुंचेममगुँहसस्वाहानमोयइदंचकारादित्यंचरुन्निर्वपतिवरोदक्षिणा
ग्नावैष्णवमेकादशकपालंवामनोवहीदक्षिणाग्नीषोमीयं ॥१॥ एकादशकपालगुँहिरण्यंदक्षिणैंद्रमेकादशकपालमृषभोवही
दक्षिणाग्नेयमष्टाकपालमैंद्रंदध्यृषभोवहीदक्षिणैंद्राग्नंद्वादशकपालं वैश्वदेवंचरुंप्रथमजोवत्सोदक्षिणासौम्यगुँश्यामाकंचरुं
वासोदक्षिणासरस्वत्यैचरुगुँसरस्वतेचरुंमिथुनौगावौदक्षिणा ॥२॥ इत्येताननुवाकान् ॥ तत्तदादीन्वायथाशक्त्याधीत्य॥
अथकांडादीन्वायव्यगुँश्वेतमालभेतभूतिकामोवायुर्वैक्षेपिष्ठादेवतावायुमेवस्वेनभागधेयेनोपधावतिसएवैनंभूतिंगमयति
भवत्येवातिक्षिप्रादेवतेत्याहुस्सैनमीश्वराप्रदहइत्येतमेवसंतंवायवेनियुत्वतआलभेत नियुद्वाअस्यधृतिर्धृतएवभूतिमुपैत्य
प्रदाहायभवत्येव ॥ १ ॥ प्रजापतिरकामयतप्रजास्सृजेयेतिसतपोतप्यतससर्पानसृजतसोकामयतप्रजास्सृजेयेतिसद्वि
तीयमतप्यतसवयागुँस्यसृजतसोकामयत प्रजास्सृजेयेतिसतृतीयमतप्यतसएतंदीक्षितवादमपश्यत्तमवदत्ततोवैसप्रजा
असृजतयत्तपस्तप्त्वादीक्षितवादंवदातिप्रजाएवतद्यजमानः ॥१॥ युंजानःप्रथमंमनस्तत्वायसविताधियः ॥ अग्निंज्योतिर्नि
चाय्यपृथिव्याअध्याभरत ॥ युक्त्वायमनसादेवान्त्सुवर्यतोधियादिवं ॥ बृहज्ज्योतिःकरिष्यतःसविताप्रसुवातितान् ॥ यु
क्तेनमनसावयंदेवस्यसवितुःसवे ॥ सुवर्गेयायशक्त्यै ॥ युंजतेमनउतयुंजतेधियोविप्राविप्रस्यबृहतोविपश्चितः ॥ विहो
त्रादधेवयुनाविदेकइत् ॥ १ ॥ सावित्राणिजुहोतिप्रसूत्यैचतुर्गृहीतेनजुहोतिचतुष्पादःपशवःपशूनेवावरुंधेचतस्रोदिशोदि
क्ष्वेवप्रतितिष्ठतिच्छंदांगुँसिदेवेभ्योपाक्रामन्नवोभागानिहव्यंवक्ष्यामइतितेभ्यएतच्चतुर्गृहीतमधारयन्पुरोनुवाक्यायैया

ज्यायैदेवतायैवषट्काराययच्चतुर्गृ॑हीतंजुहोतिछंदा॑गु॑स्येवतत्प्रीणातितान्यस्यप्रीतानिदेवेभ्योहव्यंवहंतियंकामयेत ॥ १॥
प्राचीनवगु॑ँशंकरोतिदेवमनुष्यादिशोव्यभजंतप्राचींदेवादक्षिणांपितरः प्रतीचींमनुष्याउदीचीगु॑ँरुद्रायत्प्राचीनवगु॑ँशंकरो
तिदेवलोकमेवतद्यजमानउपावर्ततेपरिश्रयत्यंतर्हितोहिदेवलोकोमनुष्यलोकानास्मांल्लोकान्स्वेतव्यामिवेत्याहुःकोहितद्वे
दयद्यमुष्मिंल्लोकेस्तिवानवेतिदिक्ष्वतीकाशान्करोति ॥१॥ प्रजननंज्योतिरग्निर्देवतानांज्योतिर्विराट्छंदसांज्योतिर्विराड्वा
चोग्नौसंतिष्ठतेविराजमभिसंपद्यतेतस्मात्तज्ज्योतिरुच्यतेद्वौस्तोमौप्रातस्सवनंवहतोयथाप्राणश्चापानश्चद्वौमाध्यंदिनगु॑ँस
वनंयथाचक्षुश्चश्रोत्रंचद्वौतृतीयसवनंयथावाक्चप्रतिष्ठाचपुरुषसंमितोवाएषयज्ञोस्थूरिः ॥१॥८॥ ॐब्रह्मसंधत्तंतन्मेजिन्व
तं ॥ क्षत्रगु॑ँसंधत्तंतन्मेजिन्वतं ॥ इषगु॑ँसंधत्तंताम्मेजिन्वतं ॥ ऊर्जगु॑ँसंधत्तंताम्मेजिन्वतं ॥ रयिगु॑ँसंधत्तंताम्मेजिन्वतं ॥ पुष्टि
गु॑ँसंधत्तंताम्मेजिन्वतं ॥ प्रजागु॑ँसंधत्तंताम्मेजिन्वतं ॥ पशून्त्संधत्तंताम्मेजिन्वतं ॥ स्तुतोसिजनधाः ॥ देवास्त्वाशुक्रपाःप्रण
यंतु ॥१॥ सुवीराःप्रजाःप्रजनयन्परीहि ॥ शुक्रश्शुक्रशोचिषा ॥ स्तुतोसिजनधाः॥ देवास्त्वामंथिपाःप्रणयंतु॥सुप्रजाःप्रजाः
प्रजनयन्परीहि ॥ मंथीमंथिशोचिषा ॥ संजग्मानौदिवआपृथिव्यायुः ॥ संधत्तंतन्मेजिन्वतं ॥ प्राणगु॑ँसंधत्तंतन्मेजिन्वतं ॥
अपानगु॑ँसंधत्तंतन्मेजिन्वतं ॥ २ ॥ व्यानगु॑ँसंधत्तंतन्मेजिन्वतं ॥ चक्षुस्संधत्तंतन्मेजिन्वतं ॥ श्रोत्रगु॑ँसंधत्तंतन्मेजिन्व
तं ॥ मनस्संधत्तंतन्मेजिन्वतं॥ वाचगु॑ँसंधत्तंताम्मेजिन्वतं ॥ आयुस्थआयुर्मेधत्तं ॥ आयुर्यज्ञायधत्तं ॥ आयुर्यज्ञपतयेधत्तं॥
प्राणस्थप्राणंमेधत्तं ॥ प्राणंयज्ञायधत्तं ॥३॥प्राणंयज्ञपतयेधत्तं ॥ चक्षुस्थश्चक्षुर्मेधत्तं ॥ चक्षुर्यज्ञायधत्तं ॥चक्षुर्यज्ञपतयेधत्तं॥

॥ श्रोत्रगुँस्थश्रोत्रंमेधत्तं ॥ श्रोत्रंयज्ञायधत्तं ॥ श्रोत्रंयज्ञपतयेधत्तं ॥ तौदेवौशुक्रामंथिनौ ॥ कल्पयतंदैवीर्विशःकल्पयतं मानुषीः ॥ ४ ॥ इषमूर्जमस्मासुधत्तं ॥ प्राणान्पशुषु ॥ प्रजांमयियजमानेच ॥ निरस्तःषंडः ॥ निरस्तोमर्कः ॥ अपनुत्तौशं डामर्कौसहामुना ॥ शुक्रस्यसमिदसि ॥ मंथिनस्समिदसि ॥ सप्रथमस्संकृतिर्विश्वकर्मा ॥ सप्रथमोमित्रोवरुणोअग्निः॥ सप्रथमोबृहस्पतिश्चिकित्वान् ॥ तस्माइंद्रायसुतमाजुहोमि ॥ ४ ॥ ॐअंगिरसोवैसत्रमासत ॥ तेषांपृश्निर्घर्मधुगा सीत् ॥ सर्जीषेणाजीवत् ॥ तेब्रुवन् ॥ कस्मैनुसत्रमास्महे ॥ येस्याओषधीर्नजनयामइति ॥ तेदिवोवृष्टिमसृजंत ॥ या वंतस्तोकाअवापद्यंत ॥ तावतीरोषधयोजायंत ॥ ताजाताःपितरोविषेणालिंपन् ॥ १ ॥ तासांजग्ध्वारुप्यंत्यैत् ॥ तेब्रुव न् ॥ कइदमित्थमकरिति ॥ वयंभागधेयमिच्छमानाइतिपितरोब्रुवन् ॥ किंवोभागधेयमिति ॥ अग्निहोत्रएवनोप्यास्त्वि त्यब्रुवन् ॥ तेभ्यएतद्भागधेयंप्रायच्छन् ॥ यद्धुत्वानिमार्ष्टि ॥ ततोवैतओषधीरस्वदयन् ॥ यएवंवेद ॥ २ ॥ स्वदंतेस्मा ओषधयः ॥ तेवत्समुपावासृजन् ॥ इदन्नोहव्यंप्रदापयेति ॥ सोब्रवीद्वरंवृणै ॥ दशमारात्रीर्जातंनदोहन् ॥ आसंगवं मात्रासहचराणीति ॥ तस्माद्वत्संजातंदशरात्रीर्नदुहंति ॥ आसंगवंमात्रासहचरति ॥ वारेव्रतगुँह्यस्य ॥ तस्माद्वत्स गुँसगुँसृष्टधयगुँरुद्रोघातुकः ॥ अतीहिसंधान्धयति ॥३॥ अग्निर्नःपातु ॥ भद्रंकर्णेभिः ॥ ॐसहवैदेवानांचासुराणांचय ज्ञौप्रततावास्तांवयगुँस्वर्गंलोकमेष्यामोवयमेष्यामइति तेसुरास्सन्नह्यसहसैवाचरन्ब्रह्मचर्येणतपसैवदेवास्तेसुराअमुह्य गुँस्तेनप्राजानगुँस्तेपराभवंतेन स्वर्गंल्लोकमायन्प्रसृतेनवैयज्ञेनदेवास्स्वर्गंल्लोकमायन्नप्रसृतेनासुरान्पराभावयन्प्रसृताह

वैयज्ञोपवीतिनोयज्ञोप्रसृतोनुपवीतिनोयत्किंचब्राह्मणोयज्ञोपवीत्यधीते यजतएवतत्तस्माद्यज्ञोपवीत्येवाधीयीतयाजयेद्य
जेतवायज्ञस्यप्रसृत्याअजिनंवासोवादक्षिणतउपवीयदक्षिणंबाहुमुद्धरतेवधत्तेसव्यमिति यज्ञोपवीतमेतदेवविपरीतंप्राची
नावीतगुँसंवीतंमानुषं॥१॥संज्ञानंविज्ञानंप्रज्ञानं *॥* इत्येताननुवाकान्तत्तदादीन्वायथाशक्त्याधीत्यअमावास्येनवापौर्ण
मास्येनवाहविषायक्ष्यमाणोभवति॥वृद्धिरादैच् ॥ समाम्नायस्समाम्नातः॥मयरसतजभनलगसंमितं॥पंचसंवत्सरमयं॥
गौः॥ ग्मा॥योगीश्वरंयाज्ञवल्क्यं ॥ नारायणंनमस्कृत्य॥ अथातोधर्मजिज्ञासा ॥ अथातोब्रह्मजिज्ञासा॥नमोब्रह्मणइति
त्रिःपठित्वा॥ ॐवृष्टिरसिवृश्चमेपाप्मानमृतात्सत्यमुपागांइत्यपस्पृष्ट्वा हस्ताववनिज्याशिरश्चक्षुषीनासिकेश्रोत्रेहृदयमा
लभते ॥ ॐकामोकार्षीन्नमोनमः ॥ कामोकार्षीत्कामःकरोतिनाहंकरोमिकामःकर्तानाहंकर्ताकामःकारयितानाहंकार
यिताएषतेकामकामायस्वाहा ॥ मन्युरकार्षीन्नमोनमः ॥ मन्युरकार्षीन्मन्युःकरोतिनाहंकरोमिमन्युःकर्तानाहंकर्ता
मन्युःकरयितानाहंकारयिताएषतेमन्योमन्यवेस्वाहा ॥ इतिपठित्वा ॥ उपाकृतानिच्छंदांगुँसि ॥ उपाकृतावैवेदाः ॥ इ
त्युक्त्वाचम्यदेवर्षिपितृमहातर्पणंकृत्वास्विष्टकृतमवदायांतःपरिधौनिधाय ॥ ॐश्रावण्यैपौर्णमास्यैस्वाहा ॥ श्रावण्यै
पौर्णमास्याइदं ॥ इतिस्रुवाहुतीर्हुत्वाथस्विष्टकृदाद्युत्तरपरिषेकादिकंकृत्वा ॥ ऋषयश्छंदांगुँस्याचार्यावेदायज्ञाश्चप्रीयं
तामितिवाचयित्वाअनेनोपाकर्मकर्मणाश्रीपरमेश्वरःप्रीयतां॥इतीश्वरार्पणंकुर्यात्॥इत्युपाकर्मप्रयोगः॥ ॥ ७ ॥ अथ
नूतनब्रह्मचारिणांतुनांदीश्राद्धंकृत्वाउपाकर्मकुर्यात्॥नतूत्सर्जनं ॥ ममवेदग्रहणाधिकारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थं

मुपाकर्मकरिष्यइतिसंकल्प्य॥अन्यत्सर्वपूर्ववत्॥इत्युपाकर्मप्रयोगः॥अथमहातर्पणं॥ नित्यतर्पणंतुमाध्यान्हिकस्नानानंत
रंकर्तव्यं॥एवंगुणेत्यादिउपाकर्मांगत्वेनदेवर्षिपितृमहातर्पणंकरिष्यइतिसंकल्प्य॥पूर्वाभिमुखोंगुल्यग्रेणदेवतीर्थेनदेवतां
स्तर्पयेत् ॥ ब्रह्मादयोयेदेवास्तान्देवांस्तर्पयामि ॥ भूर्देवांस्त ॥ भुवर्देवांस्त ॥ सुवर्देवांस्त ॥ भूर्भुवस्सुवर्देवांस्त ॥ देव
पत्नीस्त ॥ देवपुत्रांस्त ॥ देवपार्षदांस्त ॥ देवपार्षदीस्त ॥ अग्निःप्रजापतिस्सोमोरुद्रआदित्योबृहस्पतिस्सर्पाइत्येता
निप्राग्द्वाराणिसदैवतानिसनक्षत्राणिसग्रहाणिसाहोरात्राणिसमुहूर्तानितर्पयामि ॥ वसूंस्त ॥ पितरोर्यमाभगस्त्वष्टा
सवितावायुरिंद्राग्नीइत्येतानिदक्षिणद्वाराणिसदैवतानिसनक्षत्राणिसग्रहाणिसाहोरात्राणिसमुहूर्तानितर्पयामि ॥ रुद्रां
स्त ॥ मित्रइंद्रआपोविश्वेदेवाब्रह्मविष्णुरुद्राइत्येतानि पश्चिमद्वाराणिसदैवतानिसनक्षत्राणिसग्रहाणिसाहोरात्राणिस
मुहूर्तानितर्पयामि ॥ आदित्यांस्त ॥ वसवोवरुणअजएकपादहिर्बुध्न्यः पूषाश्विनौयमइत्येतान्युदग्द्वाराणिसदैवतानि
सनक्षत्राणिसग्रहाणिसाहोरात्राणिसमुहूर्तानितर्पयामि ॥ विश्वान्देवांस्त ॥ साध्यान्देवांस्त ॥ ब्रह्माणं ॥ प्रजापतिं ॥ प
रमेष्ठिनं ॥ चतुर्मुखं ॥ हिरण्यगर्भं ॥ स्वयंभुवं ॥ अग्निं ॥ वायुं ॥ सूर्यं ॥ चंद्रमसं ॥ नक्षत्राणि ॥ भूस्त ॥ भुवस्त ॥ सुवस्त ॥
महस्त ॥ जनस्त ॥ तपस्त ॥ सत्यंस्त ॥ भूःपुरुषं ॥ भुवःपुरुषं ॥ सुवःपुरुषं ॥ भूर्भुवस्सुवःपुरुषंत ॥ सद्योजातं ॥ वाम
देवं ॥ अघोरं ॥ तत्पुरुषं ॥ ईशानं ॥ भवंदेवं ॥ शर्वंदेवं ॥ ईशानंदेवं ॥ पशुपतयेदेवं ॥ रुद्रंदेवं ॥ उग्रंदेवं ॥ भीमंदे
वं ॥ महांतंदेवंत ॥ भवस्यदेवस्यपत्नींत ॥ शर्वस्यदेवस्यपत्नींत ॥ ईशानस्यदेवस्यपत्नींत ॥ पशुपतेर्देवस्यपत्नींत ॥

रुद्रस्यदेवस्यपत्नींत ॥ उग्रस्यदेवस्यपत्नींत ॥ भीमस्यदेवस्यपत्नींत ॥ महतोदेवस्यपत्नींत ॥ भवस्यदेवस्यसुतं ॥
शर्वस्यदेवस्यसुतं ॥ ईशानस्यदेवस्यसुतं ॥ पशुपतेर्देवस्यसुतं ॥ रुद्रस्यदेवस्यसुतं ॥ उग्रस्यदेवस्यसुतं ॥ भीमस्य
देवस्यसुतं ॥ महतोदेवस्यसुतं ॥ रुद्रपार्षदांस्त ॥ रुद्रपार्षदीस्त ॥ स्कंदं ॥ इंद्रं ॥ सुकुमारं ॥ महासेनं ॥ षण्मुखं ॥
कार्तिकेयं ॥ वन्हिगर्भं ॥ विशाखं ॥ षष्टिं ॥ अग्निभुवं ॥ सुब्रह्मण्यं ॥ गुहंत ॥१२॥ स्कंदपार्षदांस्त ॥ स्कंदपार्षदी
स्त ॥ विघ्नं ॥ विनायकं ॥ वीरं ॥ शूरं ॥ सद्यःप्रसादकं ॥ लंबोदरं ॥ वरदं ॥ एकदंष्ट्रं ॥ गजाननं ॥ विघ्ननाशं ॥ ग
णपतिं ॥ हेरंबं ॥१२॥ विघ्नपार्षदांस्त ॥ विघ्नपार्षदीस्त ॥ केशवं ॥ नारायणं ॥ माधवं ॥ गोविंदं ॥ विष्णुं ॥ मधु
सूदनं ॥ त्रिविक्रमं ॥ वामनं ॥ श्रीधरं ॥ हृषीकेशं ॥ पद्मनाभं ॥ दामोदरं ॥ दामोदरपार्षदांस्त ॥ दामोदरपार्षदी
स्त ॥ वासुदेवं ॥ संकर्षणं ॥ प्रद्युम्नं ॥ अनिरुद्धं ॥ परमात्मानं ॥ वासुदेवपार्षदांस्त ॥ वासुदेवपार्षदीस्त ॥ श्रियंदे
वीं ॥ भूमिंदेवीं ॥ सरस्वतींदेवींत ॥ विद्यां ॥ तुष्टिं ॥ पुष्टिं ॥ गरुत्मंतं ॥ विष्णुपार्षदांस्त ॥ विष्णुपार्षदीस्त ॥ यमं ॥
धर्मराजं ॥ मृत्युं ॥ अंतकं ॥ वैवस्वतं ॥ कालं ॥ सर्वभूतक्षयं ॥ औदुंबरं ॥ दध्नं ॥ नीलं ॥ परमेष्ठिनं ॥ वृकोदरं ॥
चित्रं ॥ चित्रगुप्तं ॥ यमपार्षदांस्त ॥ यमपार्षदीस्त ॥ सर्वान्देवांस्त ॥ अथनिवीत्युदङ्मुखोंगुलिवामपार्श्वेनऋषितो
र्थेनऋषीन्द्विर्द्विस्तर्पयेत् ॥ भूर्ऋषींस्त ॥ भुवर्ऋषींस्त ॥ सुवर्ऋषींस्त ॥ महर्ऋषींस्त ॥ जनर्ऋषींस्त ॥ तपर्ऋषींस्त ॥ सत्यमृ
षीं ॥ परमर्षींस्त ॥ ब्रह्मर्षींस्त ॥ देवर्षींस्त ॥ श्रुतर्षींस्त ॥ सप्तर्षींस्त ॥ ऋषिपत्नीस्त ॥ ऋषिपुत्रांस्त ॥ ऋषिपार्षदांस्त ॥

ऋषिपार्षदीस्त ॥ प्रजापतिंकांडऋषिंत ॥ सोमंकांडऋषिंत ॥ अग्निंकांडऋषिंत ॥ विश्वान्देवान्कांडऋषिंत ॥ स्वयंभु
वंकांडऋषित ॥ अत्रिं ॥ भारद्वाजं ॥ धान्वंतरं ॥ कांडं ॥ बोधायनं ॥ आपस्तंबं ॥ सूत्रकारं ॥ सत्याषाढं ॥ पराशरं ॥ हिर
ण्यकेशं ॥ वासिष्ठं ॥ विश्वामित्रं ॥ गौतमं ॥ आंगिरसं ॥ व्यासं ॥ प्रणवं ॥ व्याहृतीस्त ॥ गायत्रीं ॥ छंदाग़ुँसि ॥ ऋग्वेदं ॥
यजुर्वेदं ॥ सामवेदं ॥ अथर्ववेदं ॥ अथर्वांगिरसस्त॥इतिहासपुराणानि ॥ सर्वभूतानितर्पयामितर्पयामीतिद्विर्द्विस्तर्पयित्वा
थप्राचीनावीतीदक्षिणामुखस्तर्जनीमूलेन।पितृतीर्थेनपितृंस्त्रिस्त्रिस्तर्पयेत्॥अस्मत्पितृनूशर्मण:गोत्रान्रूपान्स्वधानमस्त
र्पयामितर्पयामिस्वधानमस्तर्पयामि॥पितामहानूरुद्ररूपान् ॥ प्रपितामहानूआदित्यरूपान् ॥एवंमातृ:॥देवकिदायी: ॥
गोत्रा:वसुरूपा:स्वधानमस्त ॥ ३ ॥ पितामही:दायी:रुद्ररूपा: ॥ प्रपितामही:आदित्यरूपा:स्व॥सपत्नींमातरंदायींगो
त्रांवसुरूपांस्वधानमस्त ॥ इतिद्विर्द्विस्तर्पयति॥मातामहान्मातु:पितामहान्॥मातु:प्रपितामहान्॥तर्पयामीतित्रि:॥माता
मही:॥मातु:पितामही: ॥ मातु:प्रपितामही: ॥ तर्पयामीतिसकृत् ॥ गुरुंस्त॥३॥गुरुपत्नीस्त ॥१॥ आचार्यांस्त ॥३॥ आ
चार्यपत्नीस्त ॥१ ॥ सखींस्त ॥ ३ ॥ सखिपत्नीस्त ॥ १ ॥ ज्ञातींस्त ॥ ३ ॥ ज्ञातिपत्नीस्त ॥ १ ॥ अमात्यांस्त ॥ ३ ॥ अ
मात्यपत्नीस्त ॥ १ ॥ अंतेवासिनस्त ॥ ३ ॥ अंतेवासिपत्नीस्त ॥ १ ॥एवंसतिलदूर्वाभिरद्भिस्तर्पयित्वा ॥ ऊर्जंवहंतीरमृतं
घृतंदधिमधुपय:कीलालंमधुश्रुतग़ुँस्वधास्तर्पयतुमेपितृन्स्वधानमस्तृप्यतु॥इतिस्थलेजलंनिषिच्याथयज्ञोपवीत्यपआच
म्य ॥ अनेनमहातर्पणकर्मणाश्रीपरमेश्वर:प्रीयतां ॥ इतिमहातर्पणं ॥ अथानध्याया: ॥ उपाकर्मणिकृतेत्र्यहमेकाहंवान

ध्यायइतिगृह्यसूत्रं ॥ कारिकायां ॥ मनुः ॥ अयनेविषुवेचैवशयनेबोधनेतथा ॥ अनध्यायंप्रकुर्वीतमन्वादिषुयुगादिषु ॥
अनध्यायस्यपूर्वेद्युरनध्यायोभवेन्निशि ॥ निशामुखेचतुर्थीतुसप्तमीयदिदृश्यते ॥ निशीथिनीमुखेतस्मिन्नवक्तव्याकचि
त्रयी ॥ अन्यत्र ॥ षष्ठीचद्वादशीचैवअर्धरात्रोननाडिका ॥ प्रदोषेनत्वधीयीततृतीयानवनाडिका ॥ (ऊननाडिकाएक
घटिकान्यूनेत्यर्थः) ॥ अष्टमीचतुर्दशीपूर्णिमामावास्याप्रातिपत्सुप्रतिदिनंसंध्यासुचअनध्यायः ॥ ग्रहाणादूर्ध्वंत्रिरात्रम
नध्यायः ॥ भाद्रपदकृष्णद्वितीयायांतत्रमहाभरणीमार्गशिरपुष्यमाघफाल्गुनमासेषुकृष्णपक्षस्यसप्तम्यष्टमीनवमीतिति
स्त्रोष्टकाश्चानध्यायाः ॥ अथनिर्णयः ॥ उदयास्तमयेवापिमुहूर्तत्रयगामियत् ॥ तद्दिनंतदहोरात्रमनध्यायंविदुर्बुधाः ॥
इति ॥ अथमन्वादयः ॥ आश्वयुक्शुक्लनवमीकार्तिकीद्वादशीसिता ॥ तृतीयाचैत्रमासस्यसितेभाद्रपदेतथा ॥ फाल्गु
नस्यत्वमावास्यापौषस्यैकादशीसिता ॥ आषाढस्यापिदशमीमाघमासस्यसप्तमी ॥ श्रावणस्याष्टमीकृष्णाआषाढस्या
पिपूर्णिमा ॥ कार्तिकीफाल्गुनीचैत्रीज्येष्ठीपंचदशीसिता ॥ एतामन्वादयःप्रोक्तादत्तस्याक्षयकारकाः ॥ वैशाखमासस्यच
यातृतीयानवम्यसौकार्तिकशुक्लपक्षे ॥ नभस्यमासस्यचकृष्णपक्षेत्रयोदशीपंचदशीचमाघे ॥ इत्येतेयुगादयः ॥ अन
ध्यायेष्वध्ययनंप्रज्ञामायुःप्रजांश्रियं ॥ ब्रह्मबीजंस्वकंतेजोनिकृंततियमःस्वयं ॥ इत्येतेअनध्यायाः ॥ अथप्रदोषमहानि
शाकालः ॥ धर्मप्रवृत्तौ ॥ त्रिमुहूर्तप्रदोषःस्याद्रवावस्तंगतेसति ॥ महानिशानिशीथस्यमध्यस्थघटिकाद्वयं ॥इति ॥ अथां
तरागमनप्रायश्चित्तं ॥ मृगस्यसर्पमार्जारनकुलाद्यश्वदंतिनां ॥ अंतरागमनेचोष्ट्रखराणांचत्र्यहंस्मृतं ॥ नारीणामपि

वाळानांगवांचैवांतरागमे ॥ अहोरात्रमनध्यांयोगर्जनेरात्रिसंभवे॥पक्षिमंडूकगोधाखुनराणांचांतरागमे ॥ दिनेदिवसशे
पःस्याद्रात्र्यांरात्रेश्चतद्भवेत् ॥ अंतरागमनेसद्यःप्रायश्चित्तमिदंशृणु ॥ त्रिरात्रमुपवासश्चत्रिरात्रंचाभिषेचनं ॥ ग्रामांत
रंवागंतव्यंजानुभ्यांनात्रसंशयः ॥ इति ॥ पारिजातोक्तेः ॥ मनुः ॥ वेदोपकरणेचैवस्वाध्यायेचैवनैत्यके ॥ ननिरोध
स्त्वनध्यायेहोममंत्रजपेषुच ॥ वेदोपाकरणान्यंगानि ॥ नित्येजपेचचांगेचक्रतौपारायणेपिच ॥ नानध्यायोऽस्तिवेदानां
ग्रहणेग्राहणेस्मृतः ॥ देवतार्चनमंत्राणांनानध्यायःस्मृतस्तथा ॥ नानध्यायेजपेद्वेदान्रुद्रांश्चैवविशेषतः ॥ पौरुषंपावमा
नंचगृहीतनियमाद्रतइति ॥ विष्णुभट्टीये ॥ मानसेध्ययनेब्रह्मयज्ञेजपहोमादौवेदांगेषुचनदोषोनैमित्तिकेष्वनध्यायेष्वध्य
ताथंकोधीयीत ॥ अष्टमीचतुर्दशीपर्वसुनित्यमनध्यायः ॥ इत्यनध्यायप्रकरणं ॥ ॥ ७ ॥ ॥ अथवेदारंभः ॥ उद
गयनेस्तमलमासादिवर्जितेद्वितीयातृतीयापंचमीदशम्येकादशीद्वादशीषु शुक्लपक्षेबुधगुरुशुक्रवारेषुभानुवारपूर्वाण्हेचंद्र
वारेपराण्हे ॥ अश्विनीमृगशिरआर्द्रापुनर्वसुपुष्यहस्तचित्रास्वात्यनूराधश्रवणेषुश्रेष्ठः ॥ रोहिण्युत्तरात्रयरेवत्योमध्य
माइतिपंचदशनक्षत्रेषुमिथुनकन्यामीनमुख्याः ॥ कर्कटकोमध्यःअन्येराशयोवर्ज्याएषुलग्नेषुशुभयोगदृष्टियुतेषुवृषसिंह
कुंभलग्नेषुवासप्तमाष्टमयोस्सर्वग्रहवर्जितेवेदारंभंकुर्यात् ॥ तथाचश्रीधरीये ॥ रिक्ताष्टमीपंचदशीनिषिद्धात्रयोदशीसप्त
मिकाचमध्या ॥ विद्यागमेवित्सितमंत्रिणांस्युर्वारोदयोमध्यमइंदुभान्वोः ॥ गुरुः ॥ प्रथमाचतृतीयाचद्वितीयापंचमीतथा ॥
दशमीद्वादशीचैवएकादश्यासुपूजिता॥त्रयोदशीसप्तमीचकदाचिच्छुभदातिथी॥यदाचंद्रोबुधांशस्थोबुधजीवसितेक्षितः॥

गुरुः ॥ वारवर्गोदयावर्ज्यादर्शनंचार्किभौमयोः ॥ मध्यमारविशीतांश्वोःशेषाणामुत्तमाःस्मृताः। रविवारेचपूर्वाण्हेवेदारं
भोविशिष्यते ॥ चंद्रवारेपराण्हेचविद्यागुर्वीविधीयते ॥ रात्रौचवर्जयेन्नित्यंसंध्ययोश्चविशेषतइति ॥ अथनक्षत्राणि ॥
हस्ताश्वयुक्श्रवणतिष्यसमीरमित्रचित्रादितित्रिपुरजिन्मृगलांछनेषु॥शस्तोत्तराकमलसंभवपौष्णभेषुमध्याश्रुतिःस्मृति
समावगतिर्द्विजानां ॥ अत्रहस्तादिदशतारासुशस्ता ॥ उत्तरादिपंचतारासुमध्यमा ॥ अत्रविद्याशब्दोवेदपरः ॥ अथराश
यः ॥ विद्यारंभेद्विस्वभावाविशिष्टामध्याःप्रोक्तायेचराराशयश्च ॥ शुद्धोराशिःसप्तमश्चंद्रवारेकुर्यात्प्राज्ञस्सर्वविद्यासमा
प्तिं ॥ गुरुः ॥ चरस्थिरद्विस्वभावा मध्यमाधमपूजिताः ॥ शुभयुक्तेषुद्दष्टेषुसर्वेपूज्यतमाग्रहाः ॥ लग्नस्यसप्तमोराशिः
पापैःशुभैश्चरहितःशुभदःस्यात् ॥ गुरुः ॥ त्रिषडायगताःपापास्त्रिकोणेकंटकेशुभाः ॥ विद्यारंभेसुपूज्याःस्युःपंचमेपापव
र्जिते ॥ (कंटकेकेंद्रइत्यर्थः) ॥ सप्तमस्थाःशुभास्सर्वेसुपूज्यावापिवर्जिताः॥ नकोपिसप्तमेपूज्यःशुभःक्रूरोपिवायदि ॥ लग्ना
त्सप्तमराशौतुवर्जनीयाविशेषतइति ॥ वसिष्ठः ॥ पूर्वाण्हेवाथमध्यान्हेविद्यारंभोविशिष्यते ॥ अपराण्हेचंद्रवारेविद्यामुक्ति
र्विधीयते ॥ अथाध्ययनलक्षणं ॥ स्मृतिमंजर्यां ॥ अध्येष्यमाणस्त्वाचांतोयथाशास्त्रमुदङ्मुखः ॥ ब्रह्मारंभावसानेचप्र
णमेद्विधिवद्गुरुं ॥ कुशानास्तीर्यपूर्वाग्रानासीतप्राङ्मुखोगुरुः ॥ तस्यदक्षिणतःशिष्यउपविश्यउदङ्मुखः ॥ अनध्याये
ष्वधीतंयद्यच्चशूद्रस्यसन्निधौ ॥ प्रतिग्रहनिमित्तंचनरकायतदुच्यतइति ॥ यमः ॥ ॐकारंप्रथमंकृत्वाततोब्रह्मप्रवर्तयेत्॥
ॐकारंचपुनःकृत्वाभूमिंस्पृष्ट्वाविरामयेत् ॥ अन्यथाविपरीतंस्याद्ब्रह्महानात्रसंशयः ॥ अथश्राद्धविषये ॥ धर्मोद्यते॥

फलान्यपस्तिलान्भक्ष्यान्यच्चान्यच्छ्राद्धिकंभवेत् ॥ प्रतिग्रहेप्यनध्यायइतिबोधायनोब्रवीदिति ॥ अथाशक्तविषये ॥ पराशरः ॥ अग्निकार्यात्परिभ्रष्टास्संध्योपासनवर्जिताः ॥ वेदांश्चैवानधीयानास्सर्वेतेवृषलाःस्मृताः ॥ तस्माद्वृषलभीतेनब्राह्मणेनविशेषतः ॥ अध्येतव्योप्येकदेशोयदिसर्वोनशक्यते ॥ इति ॥ अथप्रयोगः ॥ पारिजाते ॥ मुहूर्तसंग्रहे ॥ सरस्वतींचसंपूज्यगणनाथंतथैवच ॥ गुरुपूजांततःकृत्वाविद्यास्सर्वास्समारभेत् ॥ अथाचार्यस्सशिष्यःस्नानादिनित्यकर्मकृत्वासनप्राणायामौकृत्वादेशकालौसंकीर्त्यममसमस्तविद्याप्राप्त्यर्थंश्रीपरमेश्वरप्रीत्यर्थंवेदारंभंकरिष्यइतिसंकल्प्य ॥ पूर्वाण्हेगणेशंसरस्वतींचसंपूज्यतथैवगुरुमंतमिष्टदेवतांगुरुंचसंपूज्यब्रह्मचारिब्राह्मणसुवासिनीश्चाभ्यर्च्याशिषोगृहीत्वाब्रह्मयज्ञवद्दर्भान्धारयमाणःप्रणवव्याहृतिसहितांसावित्रीमुक्त्वाप्रणवपूर्वकंस्वाध्यायमुपक्रम्यकिंचिदधीत्यप्रणवेनभूमिंस्पृष्ट्वाविरम्यगुरून्वृद्धांश्चनमस्कुर्यात् ॥ ततःपरेद्युःप्रभृतिगणेशादीन्नत्वागुरून्नत्वाप्रणवमुक्त्वारंभंसमाप्तिंचकुर्यात् ॥ इति सर्वसाधारणवेदारंभप्रयोगः ॥ ॥ ७ ॥ ॥ अथबोधायनोक्तवेदारंभउच्यते ॥ तत्रकारिका ॥ कालेवेदमुपाकृत्यविद्यारंभंचकारयेत् ॥ शुभेपरीक्षितेकालेप्रबुद्धेचजनार्दने ॥ १ ॥ शश्यक्षबलसंपूर्णेखेचरानिधनाश्रिते ॥ स्थंडिलेग्निंसमिध्याथकृत्वाब्रह्मार्चनांतकं ॥ २ ॥ पुरतःस्थंडिलेवन्हेर्निदध्यात्कलशंशुभं ॥ तिरःपवित्रंसावित्र्यापूरयेत्संविपाचितं ॥ ३ ॥ वनौषधिजलंयद्वागालितंविमलोदकं ॥ व्याहृतिप्रणवैःप्रास्येद्यवानक्षततंडुलान् ॥ ४ ॥ दूर्वादर्भफलैस्तीर्णंदूर्वादर्भैश्चिनोतितं ॥ वर्णरूपांचवाग्देवींश्रद्धामेधासमन्वितां ॥ ५ ॥ तस्मिन्नावाहयेद्देवींवाचंमंत्रद्वयेनच ॥ तत्सूक्तात्रितयेनैवस्पृशन्नष्टशतंजपे

त् ॥ ६ ॥ गंधाक्षतप्रसूनाद्यैर्विधिवत्तांसमर्चयेत् ॥ अर्चयित्वाथदुग्धान्नंप्रसाद्याग्निमुखांतकं ॥ ७ ॥ कृत्वापक्वंहुनेत्पंचव
र्गमंत्रमितिस्वयं ॥ तत्सूक्तस्यादिमर्ग्भ्यांतुशिष्टर्ग्भिरुपहूत्यच ॥ ८ ॥ श्रद्धामेधाख्यसूक्ताभ्यामष्टपंचाहुतिर्हुनेत् ॥ ततः
स्विष्टकृदाद्यंतुकुर्यादावरदानतः ॥ ९ ॥ कलशस्थांततोदेवींप्रार्थयेद्यतमानसः ॥ उपविश्यततःशिष्यंदेवीमावाहयेद्गु
रुः ॥ १० ॥ यजुःपवित्रैरब्लिंगैस्तत्सूक्तत्रितयेनच ॥ अभिषिंचेत्तदुदकंकुंभस्थंदेवतात्मकं ॥ ११ ॥ अभ्यर्च्यगंधपुष्पा
द्यैर्वनौषधिरसान्वितं ॥ घृतंसंपातितःकालेतत्सूक्तेनाभिमंत्रितं ॥ १२ ॥ शिरोमेश्रीःप्रमुखतःस्वाहांताद्यनुवाककं ॥
प्राशयेद्व्याहृतीभिस्तुस्वाहांताभिश्चतुर्थशः ॥ १३ ॥ देवींवाचंप्रणोजुष्टश्चोदयित्रीचपावका ॥ उत्तनोजुषतांमेचप्रतेमहि
यदप्सुच ॥ १४ ॥ इयंयस्तेस्तनइतिसूक्तंसारस्वतंस्मृतं ॥ देवींवाचंवदत्यंतंसप्तर्चाःपरिकीर्तिताः ॥ १५ ॥ प्रणोदेवीयद
प्स्वंतंद्वौद्वौमंत्रौप्रकीर्तितौ ॥ श्रद्धयाग्निःषडृचस्तुश्रद्धायदेवइत्यृचौ ॥ १६ ॥ श्रद्धासूक्तमितिप्रोक्तंसूक्तेविद्याप्रदेशुभे ॥
ततोगुरुस्सशिष्यस्तुवाग्यतोनियतःशुचिः ॥ १७ ॥ पूजयित्वाहरिंलक्ष्मींवाग्देवींचविनायकं ॥ स्वःविद्यासूत्रकारांश्चद्विजा
नभ्यर्च्यशक्तितः ॥ १८ ॥ उपस्थायततस्सूर्यंसावित्रींचततोजपेत् ॥ सम्यगष्टशतंवाल्ढकृतब्रह्मांजलिंतथा ॥ १९ ॥ प्रो
क्त्वावेदादीन्त्सावित्रींपच्छोविहरणक्रमात् ॥ वेदमध्यापयेत्किंचित्तदहश्चविसर्जयेत् ॥ २० ॥ उपाकर्मणिकेचित्तुविधिमेवं
सुकुर्वते ॥ उपाकर्मैवकेचित्तुएवंविधिरिहश्रुतिः ॥ २१ ॥ अथप्रयोगः ॥ पूर्वोक्तशुभेमुहूर्तेविद्यारंभकर्तुंनिर्विघ्नतासिद्ध्यर्थं
गणपतिपूजांकरिष्यइतिसंकल्प्य तत्कृत्वावाग्देवीश्रद्धामेधाःप्रीयंतामितिपुंण्याहंवाचयित्वाचस्यप्राणानायम्यअस्यकुमा

रस्यनिर्विघ्नसमस्तविद्याप्राप्त्यर्थंवेदारंभंकरिष्यइतिसंकल्प्य स्थंडिलोल्लेखनादिलौकिकाग्निंप्रतिष्ठाप्य वेदारंभहोमं करिष्ये ॥ वेदारंभहोम : कर्माधारवत्तंत्रमित्यादिवलवर्धनोनामाग्निः वाग्देवीश्रद्धामेधादेवताचर्वाज्येहविषीअग्निःस्वि ष्टकृदित्याद्याप्रणीताभ्यःकृत्वातत्पूर्वभागेस्थंडिलोपरिकलशंप्रतिष्ठाप्यतिरःपवित्रंसर्वौषधीःक्वाथजलंसावित्र्यापूरयित्वाशो धितशुद्धजलंवायवाक्षततंडुलदूर्वादर्भफलानिप्रणवव्याहृतीभिर्निक्षिप्य दूर्वादर्भैःप्रतिच्छाद्यश्रद्धामेधासहितांवाग्देवीमा वाहयति ॥ देवींवाच •॥• यद्वाग्वदंतीतिद्वाभ्यांसरस्वतीमावाह्य ॥ श्रद्धयाग्निःसमिध्यतइतिश्रद्धां ॥ मेधादेवीजुषमाण इतिमेधांचावाह्यगंधाक्षतपुष्पादिभिरभ्यर्च्यक्षीरान्नंनिवेद्याग्निमुखांतंकृत्वापक्वाज्जुहोति॥ ॐदेवींवाचमजनयंतदेवास्तांवि श्वरूपाः पशवोवदंति ॥ सानोमंद्रेषमूर्जंदुहानाधेनुर्वागस्मानुपसुष्टुतैतो यद्वाग्वदंत्यविचेतनानिराष्ट्रीदेवानांनिषसादमं द्रा ॥ चतस्रऊर्जंदुदुहेपयांगुँसिक्कस्विदस्याः परमंजगामस्वाहा ॥ वाग्देव्याइदं ॥ अथस्विष्टकृतमवदायांतःपरिधौनि धायाथाज्याहुतीरुपजुहोति ॥ ॐदेवींवाचमजनयंत •॥• वाग्देव्याइदं ॥ १ ॥ ॐप्रणोदेवीसरस्वतीवाजेभिर्वाजिनीव ती ॥ धीनामवित्र्यवतुस्वाहा ॥ सरस्वत्यैदेव्याइदं ॥ २ ॥ ॐजुष्टोवाचोभूयासंजुष्टोवाचस्पतयेदेविवाक् ॥ यद्वाचोमधु मत्तस्मिन्माधाः स्वाहासरस्वत्यैस्वाहा ॥ सरस्वत्यैदेव्याइदं ॥ ३ ॥ चोदयित्रीसूनृतानांचेतंतीसुमतीनां ॥ यज्ञंदधेस रस्वतीस्वाहा ॥ सरस्वत्याइदं ॥ ४ ॥ ॐपावकानस्सरस्वतीवाजेभिर्वाजिनीवती ॥ यज्ञंवष्टुधियावसुःस्वाहा ॥ सर स्वत्याइदं ॥ ५ ॥ ॐउतनोदेवदेवागुँअच्छावोचोविदुष्टरः ॥ श्रद्विश्वावार्याकृधिस्वाहा ॥ देवेभ्यइदं ॥ ६ ॥ जुषतांमेवा

गिदगुँहविः ॥ विराट्देवीपुरोहिता ॥ हव्यवाडनपायिनीस्वाहा ॥ वाचइदं ॥ ७ ॥ ॐप्रतेमहिसरस्वति ॥ सुभगेवा
जिनीवति ॥ सत्यवाचेभरेमतिगुँस्वाहा ॥ सरस्वत्याइदं ॥ ८ ॥ यदप्सुतेसरस्वति ॥ गोष्वश्वेषुयन्मधु ॥ तेनमेवाजि
नीवति ॥ मुखमङ्धिसरस्वतीस्वाहा ॥ सरस्वत्याइदं ॥ ९ ॥ इयमेवसायाप्रथमाव्यौच्छदंतरस्यांचरतिप्रविष्टा ॥ व
धूर्जजाननवगज्जानित्रीत्रयएनांमहिमानःसचंतेस्वाहा ॥ वध्वाइदं ॥१०॥ यस्तेस्तनःशशयोयोमयोभूर्येनविश्वापुष्यसि
वार्याणि ॥ योरत्नधावसुविद्यस्सुदत्रस्सरस्वतितामिहधातवेकःस्वाहा ॥ सरस्वत्याइदं ॥११॥ ॐदेवींवाचमजनयंत॰॥॰
वाग्देव्याइदं ॥ प्रणोदेवी ॰॥॰ सरस्वत्यैदेव्याइदं ॥ २ ॥ जुष्टोवाचः ॰॥॰ सरस्वत्याइदं ॥ ३ ॥ चोदयित्री ॰॥॰ सरस्व
त्याइदं ॥ ४ ॥ पावकानस्सरस्वती ॰॥॰ सरस्वत्याइदं ॥ ५ ॥ उतनोदेवदेवा ॰॥॰ देवेभ्यइदं ॥ ६ ॥ जुषतांमेवाक् ॥
सरस्वत्याइदं ॥७॥ प्रणोदेवी ॰॥॰ सरस्-त्यैदेव्याइदं ॥८॥ १९ ॥ ॐआनोदिवोबृहतः ॥ पर्वतादासरस्वती ॥ यजता
गंतुयज्ञगुँस्वाहा ॥ सरस्वत्याइदं ॥२०॥ ॐजुष्टोवाचोभूयासं ॰॥॰ सरस्वत्यैदेव्याइदं ॥२१॥ ॐऋचास्तोमगुँसमर्धय
गायत्रेणरथंतरं ॥ बृहद्गायत्रवर्तनीस्वाहा ॥ सरस्वत्याइदं ॥२२॥ चोदयित्री ॰॥॰ सरस्वत्याइदं ॥२३॥ ॐपावीरवीक
न्याचित्रायुःसरस्वतीवीरपत्नीधियंधात् ॥ ग्नाभिरच्छिद्रगुँशरणगुँसजोषादुराधर्षंगृणतेशर्मयगुँसतुस्वाहा ॥ सरस्वत्या
इदं ॥२४॥ पावकानः ॰॥॰ सरस्वत्याइदं ॥२५॥ उतनःप्रियाःप्रियासु ॥ सप्तस्वसासुजुष्टा ॥ सरस्वतीस्तोम्याभूत् ॥
इमाजुव्हानायुष्मदानमोभिःस्वाहा ॥ सरस्वत्याइदं ॥२६॥ प्रतिस्तोमगुँसरस्वतिजुषस्व ॥ तवशर्मन्प्रियतमेदधानाः॥

उपस्थेयामशरणंनवृक्षगुँस्वाहा ॥ सरस्वत्याइदं ॥२७॥ ॐजुषतांमेवाक् *॥* वाचइदं ॥२८॥ ॐययारूपाणिबहुधाव
दंति ॥ पेशागुँसिदेवाःपरमेजनित्रे ॥ सानोविराडनपस्फुरंतीस्वाहा ॥ वाचइदं ॥ २९ ॥ ॐप्रतेमहि *॥* सरस्वत्याइ
दं ॥३०॥ ॐइदंतेहव्यंघृतवत्सरस्वती ॥ सत्यवाचेप्रभरेमाहवींगुँषि ॥ इमानितेदुरितेसौभगानि ॥ तेभिर्वयगुँसुभगा
सःस्यामस्वाहा ॥ सरस्वत्याइदं ॥३१॥ यदप्सुते *॥* सरस्वत्याइदं ॥३२॥ यासरस्वतीवैशंभल्या ॥ तस्यांमेरास्व ॥ त
स्यास्तेभक्षिय ॥ तस्यास्तेभूइष्ठभाजोभूयास्मस्वाहा ॥ सरस्वत्याइदं ॥३३॥ ॐइयमेवसाया *॥* वध्वाइदं ॥३४॥ य
स्तेरुतनः *॥* सरस्वत्याइदं ॥३५॥ इतिसरस्वतीसूक्तं ॥ अथश्रद्धासूक्तं ॥ ॐश्रद्धयाग्निःसमिध्यते ॥ श्रद्धयाविंदतेह
विः ॥ श्रद्धांभगस्यमूर्धनि ॥ वचसावेदयामासिस्वाहा ॥ श्रद्धायाइदं ॥ १ ॥ प्रियगुँश्रद्धेददतः ॥ प्रियगुँश्रद्धेदिदासतः ॥
प्रियंभोजेषुयज्वसु ॥ इदंमउदितंकृधिस्वाहा ॥ श्रद्धायाइदं ॥ २ ॥ यथादेवाअसुरेषु ॥ श्रद्धामुग्रेषुचक्रिरे ॥ एवंभोजेषु
यज्वसु ॥ अस्माकमुदितंकृधिस्वाहा ॥ श्रद्धायाइदं ॥ ३ ॥ श्रद्धांदेवायजमानाः ॥ वायुगोपाउपासते ॥ श्रद्धागुँहृदय्य
याकूत्या ॥ श्रद्धयाहूयतेहविःस्वाहा ॥ श्रद्धायाइदं ॥ ४ ॥ श्रद्धांप्रातर्हवामहे ॥ श्रद्धांमध्यंदिनंपरि ॥ श्रद्धागुँसूर्यस्य
निम्रुचि ॥ श्रद्धेश्रद्धापयेहमास्वाहा ॥ श्रद्धायाइदं ॥ ५ ॥ ॐश्रद्धादेवानिधिवस्ते ॥ श्रद्धाविश्वमिदंजगत् ॥ श्रद्धांकाम
स्यमातरं ॥ हविषावर्धयामसिस्वाहा ॥ श्रद्धायाइदं ॥ ६ ॥ श्रद्धयादेवोदेवत्वमश्नुते ॥ श्रद्धाप्रतिष्ठालोकस्यदेवी ॥ सा
नोजुपाणोपयज्ञभागात् ॥ कामवत्सामृतंदुहानास्वाहा ॥ श्रद्धायाइदं ॥ ७ ॥ श्रद्धादेवीप्रथमजाऋतस्य ॥ विश्वस्यभ

त्रींजगतःप्रतिष्ठा ॥ तागुँश्रद्धागुँहविषायजामहे ॥ सानोलोकममृतंदधातुस्वाहा ॥ श्रद्धायाइदं ॥ ८ ॥ ४३ ॥ इत्यष्टौश्र
द्धासूक्तं ॥ ॐमेधादेवीजुषमाणानआगाद्विश्वाचीभद्रासुमनस्यमाना ॥ त्वयाजुष्टानुदमानादुरुक्तान्बृहद्वदेमविदथेसुवीराः
स्वाहा ॥ मेधायाइदं ॥ ॐत्वयाजुष्टऋषिर्भवतिदेवित्वयाब्रह्मागतश्रीरुतत्वया ॥ त्वयाजुष्टश्चित्रंविंदतेवसुसानोजुषस्व
द्रविणोनमेधेस्वाहा ॥ मेधायाइदं ॥ २ ॥ ॐमेधाम्मइंद्रोददातुमेधांदेवीसरस्वती ॥ मेधाम्मेअश्विनावुभावाधत्तांपुष्क
रस्रजास्वाहा ॥ मेधायाइदं ॥ ३ ॥ ॐअप्सरासुचयामेधागंधर्वेषुचयन्मनः ॥ दैवींमेधासरस्वतीसामाम्मेधासुरभिर्जु
षतागुँस्वाहा ॥ मेधायाइदं ॥४॥ ॐआमाम्मेधासुरभिर्विश्वरूपाहिरण्यवर्णाजगतीजगम्या ॥ ऊर्जस्वतीपयसापिन्वमा
नासामाम्मेधासुप्रतीकाजुषतागुँस्वाहा ॥ मेधायाइदं ॥ ५ ॥ इतिपंचमेधासूक्तं ॥ मंत्र ॥४८॥ अत्रदेवींवाचमित्यादि
सप्तसुमंत्रेष्वादिममंत्रद्वयेनपक्वंहुत्वाअवशिष्टपंचमंत्रैस्सहसरस्वतीसूक्तश्रद्धासूक्तमेधासूक्तैश्चोपहुत्यस्विष्टकृदादिवरदा
नांतंकृत्वाकलशस्थांदेवींसंप्रार्थ्य ततः शिष्यमुपवेश्यतस्मिन्देवीमावाह्य आपोहिष्ठाहिरण्यवर्णाःपवमानस्सुवर्जनइत्येतै
स्सरस्वतीश्रद्धामेधासूक्तैश्चकलशोदकेनशिष्यमभिषिच्य गंधपुष्पादिभिरलंकृत्यनानाविधवनौषधिरसेनसंपातमाज्यंस
म्मिश्र्यशिरोमेश्रीरित्याद्यनुवाकेनस्वाहांतेनव्याहृतिचतुष्टयेनचतुर्वारंप्राशयेत् ॥ यथा ॥ शिरोमेश्रीः ॥ यशोमुखं ॥ त्विषिः
केशाश्चश्मश्रूणि ॥ राजामेप्राणोमृतं ॥ सम्राट्चक्षुः ॥ विराट्छ्रोत्रं ॥ जिव्हामेभद्रं ॥ वाङ्महः ॥ मनोमन्युः ॥ स्वराड्
भामः ॥ मोदाःप्रमोदाअंगुलीरंगानि ॥ चित्तंमेसहः ॥ बाहूमेबलमिंद्रियं ॥ हस्तौमेकर्मवीर्यं ॥ आत्माक्षत्रमुरोमम ॥

पृष्ठीमेंराष्ट्रमुदरमगुँसौ ॥ ग्रीवाश्चश्रोण्यौ ॥ ऊरूअरत्नीजानुनी ॥ विशोमेंगानिसर्वतः ॥ नाभिर्मेचित्तंविज्ञानं ॥ पा
युर्मेपचितिर्भसत् ॥ आनंदानंदावांडौमे ॥ भगस्सौभाग्यंपसः ॥ जंघाभ्यांपद्भ्यांधर्मोऽस्मि ॥ विशिराजाप्रतिष्ठितः ॥ प्र
तिक्षत्रेप्रतितिष्ठामिराष्ट्रे ॥ प्रत्यश्वेषुप्रतितिष्ठामिगोषु ॥ प्रत्यंगेषुप्रतितिष्ठाम्यात्मन् ॥ प्रतिप्राणेषुप्रतितिष्ठामिपृष्टे ॥
प्रतिद्यावापृथिव्योःप्रतितिष्ठामियज्ञे ॥ त्रयोदेवाएकादश ॥ त्रयस्त्रिंगुँशास्सुराधसः ॥ बृहस्पतिपुरोहिताः ॥ देवस्यस
वितुस्सवे ॥ देवादेवैरवंतुमा ॥ प्रथमाद्वितीयैः ॥ द्वितीयास्तृतीयैः ॥ तृतीयास्सत्येन ॥ सत्यंयज्ञेन ॥ यज्ञोयजुर्भिः ॥ यजूगुँ
षिसामभिः ॥ सामान्यृग्भिः ॥ ऋचोयाज्याभिः ॥ याज्यावषट्कारैः ॥ वषट्काराआहुतिभिः ॥ आहुतयोमेकामान्त्समर्ध
यंतु ॥ भूः स्वाहा ॥ भुवः स्वाहा ॥ सुवः स्वाहा ॥ भूर्भुवस्सुवः स्वाहा ॥ इतिचतुर्भिश्चतुर्वारंप्राश्याथहरिलक्ष्मींसरस्वतींवि
नायकंस्वविद्यासूत्रकारंचसंपूज्य ब्राह्मणान्दक्षिणादिभिस्संतोष्यसूर्यमुपस्थायगायत्रीमष्टोत्तरशतंजपित्वा ब्रह्मांजलिंकृ
त्वाप्रणवपूर्वकंगायत्रीपच्छोर्धर्चशोनवानमुक्त्वाकिंचिद्वेदमधीत्यविरमेत् ॥ अत्रविशेषस्तुपूर्वोक्तपारिजातप्रयोगेद्रष्टव्यः ॥
इतिव्यंकटेशीयेवेदारंभप्रयोगस्समाप्तः ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ अथव्रतसमावर्तनप्रयोगः ॥ व्रतसमावर्तनयोस्स
मानकालकर्तव्यतायाः शिष्टाचारप्राप्तत्वात्सहैवनिर्णयःकथ्यते ॥ पारिजाते ॥ तिथिनक्षत्रवारांशवर्गोदयनिरीक्षणं ॥
चौलवत्सर्वमाख्यातंसगोदानव्रतेषुचइति ॥ अथसमावर्तनं ॥ श्रीधरीये ॥ वागीशादितिसौम्यपौष्णादिनकृन्मित्रोत्तरा
रोहिणीगोविंदेपुशशांकभानुगुरुविच्छुक्रांशवारादिषु ॥ रिक्तांपर्वतथाष्टमींप्रतिपदंमेपंचकीटंहरींरहित्वाशुद्धियुतेष्टमेन्हिवि

मलेकुर्यात्समावर्तनं ॥ निर्णयसिंधौ ॥ सुरेश्वरः ॥ भानुभानुजयोर्वारेनक्षत्रेचव्रतोदिते ॥ ताराचंद्रविशुद्धौचस्यात्समाव
र्तनक्रियेति ॥ रोहिणीमृगशिरःपुनर्वसुपुष्योत्तरात्रयहस्तानूराधारेवतीश्रवणेषु ॥ सूत्रोक्तचित्राविशाखयोश्चभानुसोम
बुधगुरुशुक्रवारेषुद्वितीयातृतीयापंचमीसप्तमीदशम्येकादशीत्रयोदशीषुमेषसिंहवृश्चिकवर्जितराशिष्वष्टमेशुद्धेदिवैव स
मावर्तनंकुर्यात् ॥ अत्रव्रतानिप्रजासंस्कारकर्माणिभवंतिअध्ययनांगानिचेतिविष्णुभट्टः ॥ सूत्रेवेदोपकरणस्यवेदस्नात
कोव्रतस्नातकोवेदव्रतस्नातकोवेति ॥ एवमेवत्रयःस्नातकाभवंतिवेदमधीत्यव्रतमकृत्वायःस्नातिसवेदस्नातकः यस्तुवेदम
नधीत्यचीर्णव्रतःस्नातिसव्रतस्नातकः वेदमधीत्यव्रतंचकृत्वायःस्नातिसवेदव्रतस्नातक इति ॥ एवंस्नात्वाभार्यामुद्वहेदिति
विष्णुभट्टः ॥ कालातिक्रमप्रायश्चित्तहोमपूर्वकंपृथक्पृथक्तंत्रान्वावेदव्रतानिकृत्वासमावर्तनंकुर्यात् ॥ अतःपरंमाणवक
एवाचार्यानु [illegible]कर्माणिकरोतीति ॥ अत्रकुमारस्वामिकारिका ॥ होतृशुक्रियोपनिषद्गोदानंसांमितंतथा ॥ एषांव्रतानां
पंचानांकर्मतंत्रैक्यमुच्यते ॥ पुंण्याहवाचनंसद्योनांदींकृत्वाथमंत्रवत् ॥ मौंजीदंडोपवीतादिधृत्वापूर्वधृतंत्यजेत् ॥ उल्ले
खसरस्वत्याभिमुखांतेपूर्ववद्धुनेत् ॥ जयाभ्यातानहोमादिसावित्रीपक्वहोमके ॥ स्रुवेणाज्यस्यजुहुयाद्याज्ञिक्यादींश्चतं
ष्मिश्चर्याश्श्रोत्रादिव्रतनामानिसकृत्संहितयावदन् ॥ चतुर्थ्यंतंकांडर्षीन्तेप्रजापतिसोमकौ ॥ अग्निश्चविश्वेदेवाश्चस्वयंभू
केशाश्चश्मश्रू॥ तत्तद्व्रतंसमिद्धोमेकांडाधीतिसमाप्त्यपि ॥ इषेत्वेत्यापउंदंतुउद्धन्यानुमितिस्सह ॥ तंत्रेस्विष्टकृतःपूर्वंत
भामः ॥ मोदाः ॥ स्विष्टादिगोप्रदानैर्वासिध्यंत्येतद्व्रतानिचेति ॥ गृह्यसूत्रे ॥ व्रतैर्युक्तस्तुयोधीतेश्रोत्रियोभवतिद्विजः॥

व्रताचरणमात्रेणश्रोत्रियोभवतिध्रुवं ॥ व्रतैर्हीनस्त्रिवेदीस्याच्छ्रोत्रियत्वनलभ्यतइति ॥ कारिकायां ॥ व्रतान्यावश्यचर्या
णिचत्वार्युक्तानियानितु ॥ अशक्तोहोममात्रेणचर्यंतेत्वेकतंत्रतः ॥ कालायत्तमिदंज्ञेयंकालोहिदुरतिक्रमः ॥ तस्मात्तंनि
ष्कृतिंकृत्वातंत्रेकेणापिवाचरेत् ॥ त्वमग्नेव्रतपेत्येकस्सावित्रीचमनस्वती ॥ महाव्याहृतयश्चेतिप्रायश्चित्ताहुतिर्मता ॥ मौं
जीवंधोपवीतानिवासःकृष्णाजिनौतथा ॥ पूर्वोपयुक्तान्युत्सृज्यधार्याणिस्युर्व्रतेव्रते ॥ उपवीतपरित्यागोनकार्यइतिकेच
न ॥ मुहूर्तेमंत्रतोदत्तंनोत्सृजेद्धिकथंचनेति ॥ अथप्रयोगः ॥ विवाहदिनात्पूर्वेद्युःसद्योवावैश्वदेवांतंनित्यकर्मकृत्वानांदी
समाराधनंकर्तुंगणपतिपूजनंपुण्याहवाचनंचकरिष्यइतिसंकल्प्यतत्कृत्वानांदीमुखाःपितरःप्रीयंतामितिवाचयित्वाचम्य
प्राणानायम्यदेशकालौसंकीर्त्यममकुमारस्यश्वःकरिष्यमाणग्रहशांतिव्रतसमावर्तनविवाहांगतयाविहितं नांदीसमाराध
नंहिरण्येनकरिष्यइतिसंकल्प्यतत्कृत्वातस्यामेवरात्रावुदकशांतिप्रतिसरवंधौकृत्वाथापरेद्युः स्नानपवनादिपूर्वकंव्रतादी
निकुर्यात् ॥ सद्यश्चेत्प्रातर्मंगलस्नानादिनित्यकर्मकृत्वावैश्वदेवंहुत्वास्नानपवनादिकंकृत्वागणपतिंसंपूज्यनांद्यांगपुंण्या
हंवाचयित्वा ममकुमारस्याद्यकरिष्यमाणग्रहशांतिव्रतसमावर्तनांगतयाविहितं रात्रौकरिष्यमाणविवाहांगतयाविहितं
नांदीसमाराधनंहिरण्येनकरिष्यइतिसंकल्पः ॥ सद्यश्चेदद्यकरिष्यमाणविवाहांगतयाविहितामितिविशेषः ॥ तत्कृत्वाक
र्मांगपुंण्याहवाचनंकुर्यात् ॥ अद्यकरिष्यमाणग्रहशांतिहोतृशुक्रियोपनिषद्गोदानसंमितव्रतसमावर्तनकर्मणांपुंण्याहंभवं
तोब्रुवंतु ॥ एवंत्रिः ॥ पुनःग्रहशांतिहोतृशुक्रियोपनिषद्गोदानसंमितव्रतसमावर्तनकर्मभ्यःस्वस्तिभवंतोब्रुवंतु ॥ कर्मणां

ऋद्धिंभवंतोब्रुवंतु ॥ इतित्रिः ॥ आदित्यादिनवग्रहाःप्रीयंतां ॥ सविताप्रीयतां ॥ श्रीःप्रीयतामितिविशेषः ॥ एवंपुंण्या हंवाचयित्वाग्रहशांत्यर्थमाचार्यादीन्वरयेत् ॥ अस्मिन्नवग्रहहोमकर्मण्याचार्यंत्वांवृणे ॥ ब्रह्माणंत्वांवृणे ॥ ऋत्विजंत्वांवृण इतिवृत्वाप्रधानसंकल्पंकुर्यात् ॥ आचम्यप्राणानायम्य देशकालौसंकीर्त्यममाश्विनीनक्षत्रेमेषराशौजातस्यशिवशर्मणः जन्मराश्यपेक्षयायेयेग्रहाअरिष्टस्थानेषुस्थितास्तेषांग्रहाणांशुभैकादशस्थानफलावाप्त्यर्थं ममकांतायाअनूराधानक्षत्रेवृश्चिकराशौजातायाःतस्याजन्मराश्यपेक्षयायेयेग्रहाअरिष्टस्थानेषुस्थितास्तेषांग्रहाणांशुभैकादशस्थानफलावाप्त्यर्थं मम कुमारस्यनक्षत्रेराशौजातस्य येयेग्रहाइत्यादिकरिष्यमाणविवाहलग्नकालेआदित्यादीनांनवानांग्रहाणांशुभैकादशस्थानफलावाप्त्यर्थंसुलग्नसिद्ध्यर्थंनवग्रहप्रीत्यर्थंनवग्रहशांतिहोमंकरिष्ये ॥ इतिग्रहशांतिसंकल्पः॥ अथव्रतसंकल्पः ॥ देशकालौसंकीर्त्यममप्राजापत्यसौम्याग्नेयवैश्वदेवस्वयंभुकांडाध्ययनांगभूतानांहोतृशुक्रियोपनिषद्गोदानसंमितव्रतानामुपाकर्मोत्सर्जनहोमंमुख्यकालातिपत्तिप्रायाश्चित्तपूर्वकंसमानतंत्रेणकरिष्ये॥ इतिव्रतसंकल्पः ॥ ममस्नातकत्वसिद्ध्यर्थं समावर्तनाख्यंकर्मकरिष्ये ॥ इतिसमावर्तनसंकल्पः ॥ अथस्थंडिलोल्लेखनादिलौकिकाग्निंप्रतिष्ठाप्य ॥ उपावरोहजातवेदः ॥* पुनस्त्वमित्यात्मनिसमारोपितमग्निंस्थंडिलाग्नौसंयोज्यवक्ष्यमाणब्रह्मचर्यव्रतलोपप्रायाश्चित्तंकृत्वापूर्ववद्धृतमेखलाजिनदंडांश्चत्यक्त्वातत्तन्मंत्रैःपुनर्नवंधृत्वाचम्यप्राणानायम्यदेशकालौसंकीर्त्य श्रीपरमेश्वरप्रीत्यर्थंममप्राजापत्यसौम्याग्नेयवैश्वदेवस्वयंभुकांडाध्ययनांगभूतहोतृशुक्रियोपनिषद्गोदानसंमितव्रतानामुपाकर्मोत्सर्जनहोमं मुख्यकालातिप

त्तिप्रायश्चित्तपूर्वकंसमानतंत्रेणकरिष्ये ॥ होतृशुक्रियोपनिषद्गोदानसंमितव्रतानामुपाकर्मोत्सर्जनहोमःकर्माघारवत्तंत्रमि
त्यादिसमुद्भवोनामाग्निःसवितादेवताचरुर्हविःप्रधानहोमेयाज्ञिक्यादयोदेवताआज्यंहविः व्रतहोमेअग्निर्वाय्वादित्यव्रतप
तयोदेवताआज्योक्तपालाशसमिधोहविःअग्निःस्विष्टकृदाज्यस्यमांत्रवर्णिक्योदेवताइत्यादिसंकल्प्यान्वाधानाद्याप्रणीता
भ्यःकृत्वाग्रेणाग्निंपंचकोष्ठेषुतंडुलपुंजेषुपरिकूर्चन्निधाय ॥ प्राजापत्यसौम्याग्नेयवैश्वदेवस्वयंभुकांडाध्ययनांगभूतंपंचकां
डऋषीन्पूजयिष्ये ॥ ॐभूःप्रजापतिंकांडर्षिमावाहयामि ॥ ॐभुवःप्रजापतिं ॥ ॐसुवःप्रजापतिं ॥ ॐभूर्भुवस्सु
वःप्रजापतिंकांडर्षिमावाहयामि ॥ एवंसोमं ॥ अग्निं ॥ विश्वान्देवान्कांडर्षीनावाहयामि ॥ स्वयंभुवंकांडर्षिमावाहयामीत्या
वाह्यगंधपुष्पाक्षतादिभिरभ्यर्च्यप्रजापतिंकांडर्षितर्पयामितर्पयामि ॥ एवंसोमंकांडर्षिं ॥ अग्निंकांडर्षिं ॥ विश्वान्देवान्कां
डर्षींस्तर्पयामि ॥ स्वयंभुवंकांडर्षितर्पयामीतिद्विर्द्विस्तर्पयित्वासवित्रेजुष्टंनिर्वपामीतित्रिस्तूष्णींचतुर्थं ॥ पुनस्सवित्रेजु
ष्टंनिर्वपामीतिपूर्ववन्निरूप्य ॥ देवस्यत्वा ॰॰॰ हस्ताभ्यां॥सावित्रेवोजुष्टंप्रोक्ष्यामीतिसकृन्मंत्रेणाद्विस्तूष्णींप्रोक्ष्यपुनस्सवित्रे
वोजुष्टंप्रोक्ष्यामीतित्रिःपूर्ववत्प्रोक्ष्याग्निमुखांतंकृत्वाहोतृशुक्रियोपनिषद्गोदानसंमितव्रतानामुपाकर्ममुख्यकालातिपत्तिप्रा
यश्चित्तहोमंकरिष्य इतिसंकल्प्य ॥ चित्तंचस्वाहेत्यादिरुद्राहुत्यंतंहुत्वाततंमआपोयत्पाकत्रामनोज्योतिःयन्मआत्मनः
पुनराग्निःव्याहृतीश्चेतिप्रायश्चित्तंहुत्वा ॥ कारिकोक्तप्रायश्चित्तंकुर्यात् ॥ यथा ॥ ॐत्वमग्नेव्रतपाअसिदेवआमर्त्येष्वा ॥
त्वंयज्ञेष्वीड्यःस्वाहा ॥ अग्नयेव्रतपतयइदं ॥ ॐयद्वोवयंप्रमिनांमव्रतानिविदुषांदेवाअविदुष्टरासः ॥ अग्निष्टद्विश्वमापृणा

तिविद्वान्येभिर्देवागुँ॒ऋतुभिःकल्पयातिस्वाहा ॥ अग्नयेव्रतपतयइदं ॥ तत्सवितुः ॥ मनोज्योतिर्महाव्याहृतयश्चेतिप्रायश्चि
त्तंवाजुहुयात् ॥ एतयेअन्यतरेणहुत्वाथसवित्रेत्वासवित्रेत्वेतिविभागद्वयंकृत्वामिंदाहुतीव्याहृतीश्चहुत्वागायत्र्यापक्वंहुत्वाथा
ज्याहुतीरुपजुहोति ॥ ॐयाज्ञिकीभ्योदेवताभ्योहोतृशुक्रियोपनिषद्भ्योदानसंमितीभ्यःस्वाहा ॥ याज्ञिकीभ्योदेवताभ्यो
होतृशुक्रियोपनिषद्भ्योदानसंमितीभ्यइदं ॥ॐसागुँहिकीभ्योदेवताभ्योहोतृ ÷ मितीभ्यःस्वाहा॥ सागुँहिकीभ्योदेवताभ्यो
होतृ ÷ मितीभ्यइदं ॥ वारुणीभ्योदेवताभ्योहोतृ ÷ मितीभ्यःस्वाहा ॥ वारुणीभ्योदेवताभ्योहोतृ ÷ मितीभ्यइदं ॥
ॐसर्वाभ्योदेवताभ्योहोतृशु ÷ मितीभ्यःस्वाहा ॥ सर्वाभ्योदेवताभ्योहोतृशु ÷ मितीभ्यइदं ॥ अथनिवीती ॥ प्रजापतये
कांडऋषयेस्वाहा ॥ प्रजापतयेकांडऋषयइदं ॥ सोमायकांडऋषयेस्वाहा ॥ सोमायकांडऋषयइदं ॥ अग्नयेकांडऋ
षयेस्वाहा ॥ अग्नयेकांडऋषयइदं ॥ विश्वेभ्योदेवेभ्यःकांडऋषिभ्यःस्वाहा ॥ विश्वेभ्योदेवेभ्यःकांडऋषिभ्यइदं ॥ स्वयं
भुवेकांडऋषयेस्वाहा ॥ स्वयंभुवेकांडऋषयइदं ॥ अथोपवीती ॥ सदसस्पति *॥*सदसस्पतयइदं ॥ तत्सवितुः *॥*ऋ
ग्वेदायस्वाहा ॥ यजुर्वेदायस्वाहा ॥ सामवेदायस्वाहा ॥ अथर्ववेदायस्वाहा ॥ अथर्वांगिरोभ्यःस्वाहा ॥ अथर्वांगिरो
भ्यइदं ॥ ब्राह्मणेभ्यःस्वाहा ॥ ब्राह्मणेभ्यइदं ॥ इतिहासपुराणेभ्यःस्वाहा ॥ इतिहासपुराणेभ्यइदं ॥ कल्पेभ्यःस्वा
हा ॥ कल्पेभ्यइदं ॥ गाथाभ्यःस्वाहा ॥ गाथाभ्यइदं ॥ नाराशगुँसीभ्यःस्वाहा ॥ नाराशगुँसीभ्यइदं ॥ रैभीभ्यःस्वा
हा ॥ रैभीभ्यइदं ॥ सर्पदेवजनेभ्यःस्वाहा ॥ सर्पदेवजनेभ्यइदं ॥ सर्वभूतेभ्यःस्वाहा ॥ सर्वभूतेभ्यइदं ॥ एवंयाज्ञिक्या

दयश्चत्वारः ॥ पंचकांडऋषयः ॥ सदसस्पत्यादयः पंचदश इतिसूत्रोक्तप्रकारेणचतुर्विंशत्याज्याहुतीर्हुत्वाथगोत्रादि
व्रतपंचकस्यप्रतिव्रतंचतस्रःसमिधोभ्यादधातितत्तद्व्रतंसमिद्धोमइतिकुमारस्वामिः ॥ आर्द्रास्सपलाशास्सप्ररोहाःप्रादे
शमात्रारप्रतिशुष्काग्राघृतान्वक्ताअभ्याधापयन्वाचयति ॥ ॐअग्नेव्रतपतेहोतारंव्रतंचरिष्यामितच्छकेयंतन्मेराध्यतागुँ
स्वाहा ॥ अग्नयेव्रतपतयइदं ॥ ॐवायोव्रतपतेहोतारंव्रतंच ⁞ तागुँस्वाहा ॥ वायवेव्रतपतयइदं ॥ ॐआदित्यव्रतपतेहो
तारंव्रतंचरिष्यामि ⁞ राध्यतागुँस्वाहा ॥ आदित्यायव्रतपतयइदं ॥ ॐव्रतानांव्रतपतेहोतारंव्रतंचरिष्यामित ⁞ राध्य
तागुँस्वाहा ॥ व्रतानांव्रतपतयइदं ॥ एवमग्रेपि ॥ अग्नेव्रतपतेशुक्रियंव्रतंच ॥ वायोव्रतपतेशुक्रियंव्रतंच ॥ आदित्यव्र
तपतेशुक्रियंव्रतंच ॥ व्रतानांव्रतपतेशुक्रियंव्रतंच ॥ अग्नेव्रतपतेउपनिषद्व्रतंच ॥ वायोव्रतपतेउपनिषद्व्रतंच ॥ आ
दित्यव्रतपतेउपनिषद्व्रतंच ॥ व्रतानांव्रतपतेउपनिषद्व्रतंच ॥ अग्नेव्रतपतेगोदानंव्रतंच ॥ वायोव्रतपतेगोदानंव्रतंच ॥
आदित्यव्रतपतेगोदानंव्रतंच ॥ व्रतानांव्रतपतेगोदानंव्रतंच ॥ अग्नेव्रतपतेसंमितव्रतंचरिष्यामि ॥ वायोव्रतपतेसंमि
तं ॥ आदित्यव्रतपतेसंमितंव्रतं ॥ व्रतानांव्रतपतेसंमितव्रतंचरिष्यामितच्छकेयंतन्मेराध्यतागुँस्वाहा ॥ पूर्ववदुद्देशत्या
गः ॥ अथब्रह्मयज्ञधर्मेणप्राजापत्यादिकांडाध्ययनंकुर्यात् ॥ इषेत्वेत्यनुवाकंप्राजापत्यस्य ॥ आपउंदंत्वित्यनुवाकंसौम्यस्य ॥
उद्धन्यमानमित्यनुवाकमाग्निकांडस्य ॥ अनुमत्यैपुरोडाशमष्टाकपालमित्यनुवाकंवैश्वदेवकांडस्य ॥ संज्ञानंविज्ञानमनुवा
कंस्वयंभुकांडस्येतिसूत्रं ॥ सहवैदेवानामितिविष्णुभट्टः ॥ यथा ॥ श्रीपरमेश्वरप्रीत्यर्थंप्राजापत्यादिकांडाध्ययनंकरि

ष्ये ॥ विद्युदसिविद्यमेपाप्मानमृतात्सत्यमुपैमीत्यपःस्पृष्ट्वात्मानंप्रदक्षिणंपरिषिच्यत्रिराचमेद्भिःपरिमृज्यसकृदुपस्पृश्य शिरश्चक्षुषीनासिकेश्रोत्रेहृदयमालभ्यवामपादोपरिदाक्षिणपादंप्रतिष्ठाप्य दक्षिणोत्तरौपाणिपादौसपवित्रौकृत्वा ॥ ॐभूर्भुवस्सुवरित्युक्त्वागायत्रींपच्छोर्धर्चशोनवानमुक्त्वा वेदादीन्जपित्वाप्राजापत्यादिकांडादीनूजपेत् ॥ इषेत्वा ॥ आपउंदंतु ॥ उद्धन्यमानं ॥ अनुमत्यैपुरोडाशं ॥ संज्ञानंविज्ञानमितिपंचानुवाकान्क्रमेणाधीत्य नमोब्रह्मणइतित्रिरुक्त्वा वृष्टिरसिवृश्चमेपाप्मानमृतात्सत्यमुपागामित्यपःस्पृष्ट्वात्मानंप्रदक्षिणंपरिषिच्याचम्यामिंदाहुतीर्व्याहृतीश्चहुत्वाथ होतृशुक्रियोपनिषद्गोदानसंमितव्रतानामुत्सर्जनमुख्यकालातिपत्तिप्रायश्चित्तहोमंकरिष्ये ॥ चित्तंचेत्यादिरुद्रःपशूनामित्यंतंततमआपोयत्पाकत्रामनोज्योतिमिंदाहुतीर्व्याहृतीश्च हुत्वागायत्र्यापक्वंहुत्वाथस्रुवाहुतीर्जुहोति ॥ ॐयाज्ञिकीभ्यो देवताभ्योहोतृशुक्रियोपनिषद्गोदानसंमितीभ्यः स्वाहा ॥ याज्ञिकीभ्योदेवताभ्योहोतृशुक्रियोपनिषद्गोदानसंमितीभ्यइदं॥ ॐसाँहिकीभ्योदेवताभ्योहोतृ ॰॰॰ तीभ्यःस्वाहा॥साँहिकीभ्योदेवताभ्योहोतृ ॰॰॰ संमितीभ्यइदं ॥ ॐवारुणीभ्योदेवताभ्योहोतृ ॰॰॰ संमितीभ्यःस्वाहा॥वारुणीभ्योदेवताभ्योहोतृ ॰॰॰ संमितीभ्यइदं॥सर्वाभ्योदेवताभ्योहोतृ ॰॰॰ संमितीभ्यः स्वाहा ॥ सर्वाभ्योदेवताभ्योहोतृ ॰॰॰ संमितीभ्यइदं ॥ अथनिवीती ॥ ॐप्रजापतयेकांडऋषयेस्वाहा ॥ सोमायकांडऋषयेस्वाहा॥अग्नयेकांडऋषयेस्वाहा ॥ विश्वेभ्योदेवेभ्यःकांडऋषिभ्यः स्वाहा॥स्वयंभुवेकांडऋषयेस्वाहा ॥उपवीती॥सदसस्पति॥तत्सवितुः॥ऋग्वेदायस्वाहा॥यजुर्वेदायस्वाहा॥सामवेदायस्वाहा॥अथर्ववेदायस्वाहा॥अथर्वांगिरोभ्यःस्वाहा॥

ब्राह्मणेभ्यःस्वाहा ॥ इतिहासपुराणेभ्यःस्वाहा ॥ कल्पेभ्यःस्वाहा॥गाथाभ्यःस्वाहा ॥ नाराशगुँसीभ्यःस्वाहा॥रैभीभ्यः
स्वाहा॥सर्पदेवजनेभ्यःस्वाहा ॥ सर्वभूतेभ्यःस्वाहा ॥ तत्तन्मंत्रैरुद्देशत्यागः ॥ ततःपूर्ववदाज्याक्तपालाशसमिधोदधाति ॥
ॐअग्नेव्रतपतेहोतारंव्रतमचारिषंतदशकंतन्मेराधिस्वाहा ॥वायोव्रतपतेहोतारंव्रतम*॥*आदित्यव्रतपतेहोतारंव्रतम *॥*व्र
तानांव्रतपतेहोतारंव्रतम*॥*अग्नेव्रतपतेशुक्रियंव्रतम*॥*वायोव्रतपतेशुक्रियंव्रतम*॥*आदित्यव्रतपतेशुक्रियंव्रतम *॥*व्रता
नांव्रतपतेशुक्रियंव्रतमचारि*॥*अग्नेव्रतपतेउपनिषद्व्रतम*॥* वायोव्रतपतेउपनिषद्व्रतम*॥*आदित्यव्रतपतेउपनिषद्व्रतम*॥
व्रतानांव्रतपतेउपनिषद्व्रतम *॥*अग्नेव्रतपतेगोदानंव्रतम*॥*वायोव्रतपतेगोदानंव्रतम*॥* आदित्यव्रतपतेगोदानंव्रतम*॥*
व्रतानांव्रतपतेगोदानंव्रतम*॥*अग्नेव्रतपतेसंमितंव्रतम*॥*वायोव्रतपतेसंमितंव्रतम*॥* आदित्यव्रतपतेसंमितंव्रतम *॥* व्र
तानांव्रतपतेसंमितंव्रतमचारिषंतदशकंतन्मेराधिस्वाहा ॥पूर्ववदुद्देशत्यागः॥ अथस्विष्टकृतमवदायांतःपरिधौनिधायव्या
हृतिभिरुपहुत्य स्विष्टकृदाद्युत्तरपरिषेकात्प्राक्कृत्वाग्रेणाग्निंसव्याहृतिगायत्र्यापलाशपर्णेषुहुतशेषंनिधायतथैवहुतशेषंपक्वा
दुपादायतत्सवितुरितिप्राश्योत्तरपरिषेकप्रणीताविमोकब्रह्मोद्वासनानिचकृत्वा ॥ अनेनहोतृशुक्रियोपनिषद्गोदानसंमित
व्रतानामुपाकर्मोत्सर्जनकर्मणाश्रीपरमेश्वरःप्रीयतां ॥ यद्वा ॥ ऋग्वेदादीनांमंत्रवद्धोमःकार्यः ॥ यथा ॥ याज्ञिक्यादिसावि
त्र्यंतंहुत्वा॥ॐअग्निमीळे ॥ धातमगुँस्वाहा ॥ ऋग्वेदायेदं ॥ इतिऋग्वेदस्य॥इषेत्वोर्जेत्वा ॥ पशून्पाहिस्वाहा॥यजुर्वेदा
येदं ॥ इतियजुर्वेदस्य ॥ अग्नआयाहि ॥ बर्हिषिस्वाहा ॥ सामवेदायेदं ॥ इतिसामवेदस्य ॥ शन्नोदवी ॥ स्त्रवंतुनः

स्वाहा ॥ अथर्ववेदायेदं ॥ इत्यथर्ववेदस्य ॥ ऋचोयजूँषिसामानि ॥ अथर्वांगिरसश्चयेस्वाहा ॥ अथर्वांगिरोभ्यइ
दं ॥ इत्यथर्वांगिरसां ॥ ॐइतिहासपुराणानिस्वाहा ॥ इतिहासपुराणेभ्यइदं॥इतिइतिहासपुराणानां ॥ ॐसर्पदेवज
नोश्चयेभ्यःस्वाहा ॥ सर्पदेवजनेभ्यइदं ॥ इतिसर्पदेवजनानां ॥ येचलोकायेचालोकाः ॥ अंतर्भूतंप्रतिष्ठितगुँस्वाहा ॥
सर्वभूतेभ्यइदं ॥ इतिसर्वभूतानां ॥ शेषंसमानं ॥ सूत्रेएवमभिधाय ॥ यद्वा ॥ नाममंत्रैरित्युक्तत्वान्नाममंत्रैर्वाहोमः ॥
इतिव्यंकटेशीयेप्रयोगमालायांहोत्रादिव्रतप्रयोगः ॥ ॥ ७ ॥ ॥ अथसमावर्तनं ॥ तत्रादौब्रह्म
चारिव्रतलोपप्रायश्चित्तं ॥ तथाआसनप्राणायामौकृत्वादेशकालौसंकीर्त्यममशौचाचारस्नानसंध्यावंदनदर्भभिक्षाग्निकार्य
राहित्यशूद्रादिस्पर्शनकौपीनकटिसूत्रयज्ञोपवीतमेखलादंडाजिनत्यागदिवास्वापनछत्रधारणपादुकाध्यारोहण माला
धारणोद्वर्तनानुलेपनांजनजलक्रीडाद्यूतनृत्यगीतवाद्यादिभिरतिपाषंडादिसंभाषणपर्युषितभोजनादि सर्वब्रह्मचर्यानियम
लोपप्रायश्चित्तार्थंकृच्छ्राचरणपूर्वकंप्रायश्चित्तहोमंकरिष्यइतिसंकल्प्य ॥ ममब्रह्मचारिव्रतलोपप्रायश्चित्तार्थंप्राजापत्यकृ
च्छ्रप्रत्याम्नायत्वेनगोनिष्क्रयीभूतयथाशक्तिहिरण्यदानंकरिष्यइतिसंकल्प्य तद्दत्वाथप्रायश्चित्तहोमःकर्मांपूर्विकंतंत्रंचत
स्रस्सामिधेन्यःसवितादेवताचरुर्हविरित्यादिसंकल्प्यगायत्र्यापक्वंहुत्वाथस्रुवेणाज्यमादायव्याहृतिचतुष्टयंपाहिनोअग्नइ
तिपंचपुनर्व्याहृतिचतुष्टयमितिपाहित्रयोदशहोमंकृत्वास्विष्टकृदादिहोमशेषंसमापयेत् ॥ अथवाकेवलाज्येनहोममेवकुर्या
त्॥तत्रप्रोक्षण्याज्यस्थालीस्रुक्स्रुवावित्यासाद्याज्यसंस्कारांतंकृत्वापाहित्रयोदशहोमंकुर्यात् ॥ इतिब्रह्मचारीव्रतलोपप्रा

यश्चित्तं ॥ ७ ॥ ७ ॥ अथसमावर्तनं ॥ विद्यांतेगुरुमर्थदानेनसंतोष्यसमावर्तनंकुर्यादित्याश्वलायनप्रयोगरत्ने ॥ विष्णुभ
ट्टोपि॥ एवंगुरुकुलेवसन्वेदंवाव्रतंवोभयंवापारंनीत्वागुरवेधनंदत्वातदनुज्ञयास्नायादिति ॥ पूर्वोक्तस्वानुकूलदिनेपूर्वपक्षे
सूर्योदयात्पूर्वमेवगृहंप्रविश्यांतर्लोम्नाचर्मणाद्वारंपिधाय ॥ यथानेतदहरेनमादित्योभितपन्मध्यंदिनेभिक्षांदद्यादिति ॥
अथमध्यंदिनआगतेसमावर्तनंकुर्यात् ॥ यदिव्रतांतेग्निसमारोपणंनकृतंचेत्तत्रैवसमावर्तनंकुर्यात् ॥ समारोपणेकृतेस्थं
डिलोल्लेखनादिकंकृत्वापूर्ववदात्मसमारोपितमग्निंप्रतिष्ठाप्यासनप्राणायामौकृत्वादेशकालौसंकीर्त्य ममस्नातकत्वसिद्ध्य
र्थंसमावर्तनाख्यंकर्मकरिष्ये ॥ समावर्तनहोमःकर्माघारवत्तत्रपंचदशदारुरिध्मः अग्नीषोमावाज्यभागौपरिवर्तनोनामा
ग्निः श्रीर्देवताचरुर्हविरग्निःस्विष्टकृदित्यादिसंकल्प्यान्वाधानंकृत्वा प्राकृतपात्राण्यासाद्यएरकांचोपबर्हणंनापितंक्षुरंवैत
संदंतधावनमुष्णाचापःसिताश्चसर्वसुरभिपिष्टंअंजनंपुष्पमालांदर्पणमहतंवासः प्रावर्णवसनानंतरंसुवर्णोपधानंवादरम
णिंसूत्रंचप्रवृत्तौचदंडमुपानहौछत्रमित्येतानिसकृदेवासाद्य ॥ अस्यार्थः ॥ एरकाशय्याविशेषः ॥ उपबर्हणन्नामतस्यो
परिशिरःप्रदेशयोग्यवस्त्रबंधविशेषः ॥ अहतंवासःतल्लक्षणंपूर्वमेवोक्तं ॥ प्रावर्णंनामशीतादिनिवारणाच्छादनवस्त्रं ॥ बा
दरमणिंप्रवालमणिं ॥ प्रवृत्तौकुंडले ॥ इत्येतानिसकृदेवासाद्याप्रणीताभ्यः कृत्वाश्रियैजुष्टंनिर्वपामीतिचरुंनिरूप्याज्यं
संस्कृत्याग्निमुखांतंकृत्वापालाशीगुंँसमिधमाज्येनाक्त्वाभ्याधापयन्वाचयति ॥ इमगुँस्तोममर्हतेजातवेदसेरथमिवसंम
हेमामनीषया ॥ भद्राहिनःप्रमतिरस्यसगुँसृज्याग्नेसख्येमारिषामावयंतवस्वाहा ॥ जातवेदसेग्नयइदं ॥ अथशय्यायामु

दीचीनशिरानिपद्यते ॥ (उपविशतीत्यर्थः) त्रियायुषंजमदग्नेः कश्यपस्यत्रियायुषमगस्त्यस्यत्रियायुषमृषीणांचत्रिया
युषंयद्देवानांत्रियायुषंतन्मेअस्तुत्रियायुषगुँशतायुषमिति ॥ उद्यमानमनुमंत्रयते ॥ (उद्यमानमद्भिरार्द्रीक्रियमाणमि
त्यर्थः) शिवोमेभवथसगुँस्पृशइति ॥ क्षुरमभिमंत्रयते ॥ क्षुरोनामासिः ॥ स्वधितिस्तेपितानमस्तेस्तुमामाहिगुँसीरिति ॥
अथकुमारउप्यमानमनुमंत्रयते ॥ यत्क्षुरेणवर्चयसिवप्तावपासिकेशश्मश्रुवर्चयामेमुखंमानआयुःप्रमोषीरिति ॥ श्मश्रू
ण्येवाग्रेपवते ॥ अथोपकुक्षौ ॥ (तदुपरितनरोमाणीत्यर्थः)॥ अथकेशान् ॥ इतिक्रमेणवापयित्वा ॥ अथकाममितराण्यं
गानिचवापयित्वानखान्निकृत्य ॥ दर्भस्तंबेनिदधात्यथाग्नेः पश्चात्प्राङ्मुखउपविश्यमेखलांविस्रंसयति ॥ इमांविष्याभि
वरुणस्यपाशंयमबध्नीतसवितासुकेतः ॥ धातुश्चयोनौसुकृतस्यलोकेस्योनंमेसहपत्याकरोमीतिमेखलांविस्रस्य ॥ ब्रह्मचा
रिणेप्रयच्छन्नाह ॥ इमांहत्वान्यग्रोधेवोदुंबरमूलेवान्यधत्तामिति ॥ ततोब्रह्मचारीतांगृहीत्वातत्रनिदधाति ॥ इदमहममुष्य
केशवशर्मणः शुचापाप्मानमवगुहाम्युत्तरोसौकेशवशर्माद्विषद्भ्यइति ॥अत्रैवदंडमजिनंविसृज्यापउपस्पृश्यब्रह्मचारीध
र्मान्परित्यज्यशकलैर्दंतान्विधावयते॥ अन्नाद्यायव्यपोहध्वंभगोराजायमागमत् ॥ समेमुखंप्रसर्पतु ॥वर्चसेचभगायचे
त्याचम्योष्णासुशिताआनयति ॥ देवमनुष्यस्यव्याहृत्याइति॥अपामंजलिनोपहृत्यामूर्ध्नयासिंचति॥ आपोहिष्ठेतितिसृभि
र्हिरण्यवर्णाइतिचतसृभिः पवमानस्सुवर्जनइत्येतेनानुवाकेनमार्जयित्वा ततोविमलजलैर्मंगलस्नानंकृत्वासर्वसुरभिगंधं
त्रिरालोड्योत्क्षिपति ॥ (त्रिरूर्ध्वमुत्क्षिपतीत्यर्थः) नमःशाकजंजभाभ्यांनमस्ताभ्योदेवताभ्योयाअभिग्रहणीरिति ॥ तेन

सर्वांगमनुलिंपति ॥ अप्सरासुचयोगंधोगंधर्वेषुचयद्यशः ॥ दिव्योयोमानुषोगंधस्समाविषत्विहेति ॥ अहतंवासःपरिध
त्ते ॥ सामातनूराविशशिवोमातनूराविशेति ॥ एवमेवोत्तरीयं ॥ अत्रैवद्वितीययज्ञोपवीतधारणं ॥ अथप्रागासादितबा
दरमणिंसुवर्णोपधानंसूत्रेप्रोत्यदर्व्यामादायतत्सूत्रेणदर्वीदंडंपर्यस्यजुहोति ॥ ( सुवर्णयुतबादरमणिंसूत्रेसंयोज्यतमणिं
दर्व्यान्निधायतत्सूत्रेणदर्वीदंडंबध्वेत्यर्थः ) ॥ इयमोषधेत्रायमाणासहमानासरस्वती ॥ सामाकरोतुसोमवर्चसगुँसूर्यवर्च
संब्रह्मवर्चसमन्नादंकरोतुस्वाहा ॥ ओषधेसरस्वत्याइदं ॥ अथैनमुदपात्रेणपरिप्लावयति ॥ विश्वाउतत्वयावयंधाराउद
न्याइव ॥ अतिगाहेमविद्विषः ॥ इति ॥ अपांशोसीत्युक्त्वाकंठेबध्नातियथाकंठस्याधेभवति ॥ अथैतौप्रवृत्तौकुंडलेइत्य
र्थः ॥ सूत्रेप्रोत्यदर्व्यामादायदर्वीदंडेसूत्रेणपर्यस्यजुहोति ॥ आयुष्यंवर्चस्यगुँरायस्पोषमौद्भिदं ॥ इदगुँहिरण्यंवर्चसेजै
त्र्यायाविशतादिमगुँरयिगुँस्वाहा ॥ हिरण्यायेदं ॥ १ ॥ शुनिमिवाहगुँहिरण्यस्यपितुरिवनामाग्रभैषजं ॥ तंमाकरोतुसोम
वर्चसगुँसूर्यवर्चसंब्रह्मवर्चसमन्नादंकरोतुस्वाहा ॥ हिरण्यायेदं ॥ २ ॥ उच्चैर्वाजिपृतनाजिसत्रासाहंधनंजयं ॥ सर्वास्स
मृद्धिऋद्धयोहिरण्येयास्समाहिताःस्वाहा ॥ हिरण्यायेदं ॥ ३ ॥ त्रिराजंचस्वराजंचाभिष्टिर्याचनोग्रहे ॥ लक्ष्मीराष्ट्रस्य
यामुखेतयामासगुँसृजामासिस्वाहा ॥ लक्ष्म्याइदं ॥ ४ ॥ यशोमाकुरुब्राह्मणेषुयशोराजसुमाकुरु ॥ यशोवैश्येषुशूद्रेष्व
हमस्मियशस्तवस्वाहा ॥ लक्ष्म्याइदं ॥ ५ ॥ अथैनमुदपात्रेणपरिप्लावयति ॥ विश्वाउतत्वयावयंधाराउदन्याइव ॥ इ
त्येतयोर्मणिकुंडलयोरन्यतरमादायदक्षिणकर्णेबध्नाति ॥ आयुष्यंवर्चस्यमित्येतैःपंचभिर्मंत्रैः ॥ अथैनंपरिभ्रामयति ॥

ऋतुभिस्त्वार्तवैःसंवत्सरस्यधायस ॥ तैस्त्वासहानुकरोमीति ॥ एवमेवान्यमणिकुंडलंवामकर्णेबध्वाथमाल्यादिकंप्रति मुंचति ॥ शिविकेशिरआरोहशोभयंतीमुखंमम ॥ मुखगुँहिमवशोभयभूयागुँसंचभगंकुरु ॥ यांत्वाहरज्जमदग्निःश्रद्धायै कामायान्यैतांत्वेमांपतिमुंचेहंवर्चसेचभगायचेति ॥ अथत्रैककुदमंजनंचक्षुषोर्धारयेत् ॥ ( त्रिककुन्नामपर्वतःतत्रभवंत्रैक कुदंतेनांजनेनेत्यर्थः ) ॥ यदांजनंत्रैककुदंजातगुँहिमवतउपरि ॥ तेनवामांजीमयिपर्वतवर्चसमस्त्विति ॥ आदर्शंपरिप श्यते ॥ यन्मेमनःपरागतमादर्शेपरिपश्य ॥ इदंतेपरिपश्याम्यायुष्यंवर्चस्यंमेअस्त्विति ॥ अथोपानहउपमुंचते ॥ द्यौ रसीतिदक्षिणपादे ॥ पृथिव्यसीत्युत्तरपादे ॥ अथदंडमादत्ते ॥ सखामागोपायेति ॥ अथछत्रं ॥ दिव्योसिसुपर्णोंतरिक्षा न्मापाहीति ॥ वरुणोसीतिकमंडलुं ॥ ( जलपात्रमित्यर्थः ॥ ) इतिकारिकायां ॥ अथतीर्थयात्रांगच्छामीतिगुर्वनुज्ञांल ब्ध्वोत्तराभिमुखस्सप्तपदानिगत्वार्थकन्यादात्रात्रिभिर्निवारितेच्छत्रोपानहौविसृजेदितिशिष्टाचारः॥ अन्यत्सर्वंनित्यंधार येत्॥अथपक्वं॥स्रुवेणदर्व्यामुपस्तीर्यपूर्वार्धाच्चरोरवदायापरार्धादवद्यत्यभिघारयतिप्रत्यनक्तिपुरस्तात्स्रुवाहुतिंहुत्वा ॥द्वि पदापुरोनुवाक्याभवतिद्विपदएवावरुंधेचतुष्पदायाज्याचतुष्पदएवपशूनवरुंधइतिब्राह्मणं ॥ ॐआवहंतीवितन्वानाकुर्वा णाचीरमात्मनो वासागुँसिममगावश्च अन्नपानेचसर्वदा ॥ ततोमेश्रियमावहलोमशांपशुभिःसहस्वाहा ॥ श्रियाइदं ॥ अ थस्विष्टकृतमवदायांतःपरिधौनिधाय ॥ आमायंत्वितिदशस्रुवाहुतीर्जुहोति ॥ सूत्रेकारिकादौच ॥ उन्मायंतुब्रह्मचारिणः स्वाहेतिषष्ठोमंत्रइत्युक्तत्वात् ॥ यथा ॥ ॐआमायंतुब्रह्मचारिणःस्वाहा ॥ ब्रह्मचारिभ्यइदं ॥ १ ॥ विमायंतुब्रह्मचारिणः

स्वाहा ॥ ब्रह्मचारिभ्यइदं ॥ २ ॥ प्रमायंतुब्रह्मचारिणःस्वाहा ॥ ब्रह्मचारिभ्यइदं ॥ ३ ॥ दमायंतुब्रह्मचारिणःस्वाहा ॥ ब्रह्मचारिभ्यइदं ॥ ४ ॥ शमायंतुब्रह्मचारिणःस्वाहा ॥ ब्रह्मचारिभ्यइदं ॥ ५ ॥ उन्मायंतुब्रह्मचारिणःस्वाहा ॥ ब्रह्मचारिभ्यइदं ॥ ६ ॥ यशोजनेसानिःस्वाहा ॥ यशसइदं ॥ ७ ॥ श्रेयानुवस्यसोसानिःस्वाहा ॥ श्रेयसइदं ॥ ८ ॥ तंत्वाभगप्रविशानिःस्वाहा ॥ भगायेदं ॥ ९ ॥ समाभगप्रविशानिःस्वाहा ॥ भगायेदं ॥१०॥ अथमिंदाहुतीर्हुत्वास्विष्टकृत्प्रभृतिसिद्धमाधेनुवरप्रदानादथाग्रेणाग्निंबिल्वशाखायागुँहुतशेषन्निदधाति ॥ तस्मिन्त्सहस्रशाखे ॥ निभगाहंत्वयिमृजेस्वाहा ॥ इत्यथपक्वादुपादायप्राश्नाति ॥ कुमारस्यहस्तमभिघार्यचरुमवदायाभिघार्यप्राश्नाति ॥ यथापःप्रपतायंति॥यथामासाअहर्जरं ॥ एवंमांब्रह्मचारिणः ॥ धातरायंतुसर्वतःस्वाहेतिप्राश्यापआचम्यजठरमाभिमृशति ॥ प्रतिवेशोसिप्रमाभाहिप्रमापद्येस्वेति ॥ अथापउपस्पृश्याथनक्षत्रोदयपर्यंतंतत्रैवस्थित्वोदितेषुनक्षत्रेषूपनिष्क्रम्यादिशउपतिष्ठते ॥ देवीःषडुर्वीरुरुणःकृणोतविश्वेदेवासइहवीरयध्वमिति ॥ अथनक्षत्राणि ॥ माहास्माहिप्रजयामातनूभिरिति ॥ अथचंद्रमसं ॥ मारधामह्विपतेसोमराजन्निति ॥ असंभवेदिगुपस्थानादिकंदिवैवकृत्वाउत्तरपरिषेकादिकंकृत्वायस्यस्मृत्येत्युक्त्वाअनेनसमावर्तनकर्मणाश्रीपरमेश्वरःप्रीयतामित्युक्त्वा यातेअग्नइत्यात्मन्यग्निंसमारोप्यविवाहपर्यंतसायंप्रातरग्निकार्यमाज्येनकुर्यात् ॥ अत्रसमावर्तनेवपनंविकल्पितं ॥कुतः॥ सयदिलोमानिवापइष्यमाणःस्यादित्यत्रयदिशब्दप्रयोगात्कारिकायामपि ॥ यदिशब्दात्तुवपनंविभाषितमितिस्थितिरितितत्रैवकारिकायां ॥ आयुष्यंवर्चस्यमित्यादिहोमपंचकानंतरंमंत्रैरेतैःकुंडलेचघटयेत्कर्णयोर्द्व

योरिति ॥ वरुणोसीतिमंत्रेण जलपूर्णकमंडलुमितिच ॥ अवहं त्वयादिकेनैवस्वाहांतेनतुकृत्स्नशः ॥ उपहुत्यवरांतस्य दामा यांतुद्विपंचभिरिति ॥ ब्रह्मचारिवदग्नेश्चपरिचर्याघृतेनच ॥ विवाहपर्यंतमितिशेषः ॥ प्रयोगरत्ने ॥ दिव्योसीतितत श्छत्रंव रुणोसिकमंडलुं ॥ ततस्तथिन्युदंगच्छेत्सुहृद्भिरभिवारितः ॥ जुहुयादावहंतीतिपक्वंद्वाभ्यामतःक्रमात् ॥ आविंशदशउ त्पूर्वमायांतुब्रह्मचारिणः ॥ षट्पुराज्याहुतयोयशःश्रेयांतत्वासमादिचत्वारः ॥ इतिव्यंकटेशीयेसमावर्तनप्रयोगःसमा प्तः ॥

॥ अथविवाहः ॥ गृह्यपरिशिष्टे ॥ अथाविवाहस्सलक्षणावरोलक्षणवर्तीकन्यांयवीयसीमस पिंडामसगोत्रजामविरुद्धसंबंधामुपयच्छेत्पितृतस्सप्तपुरुषंसापिंड्यंमातृतःपंचपुरुषमिति ॥ मत्स्यपुराणे ॥ लेपभाजा श्चतुर्थाद्याःपित्राद्याःपिंडभागिनः ॥ पिंडदःसप्तमस्तेषांसापिंड्यंसप्तपूरुषमिति ॥ याज्ञवल्क्यः ॥ पंचमात्सप्तमादूर्ध्वंमातृ तःपितृतस्तथेति ॥ अस्यार्थः ॥ मातृपक्षेपंचमात्पितृपक्षेसप्तमात्पूरुषादूर्ध्वंसापिंड्यंनिवर्ततइति ॥ मरीचिः ॥ पंचमेसप्तमे चैवएषांवैवाहिकीक्रिया ॥ क्रियापराअपिह्येतेपतिताःशूद्रतांगताइति ॥ विष्णुः ॥ सप्तमात्पंचमाद्वापिःकन्यकामुद्वहेद्द्वि जः ॥ गुरुतल्पीसविज्ञेयस्सगोत्रांचैवमुद्वहान्निति ॥ एतदुक्तंभवति ॥ पितृपक्षेकूटस्थमारभ्यतत्पुत्रादिपरिगणनायांसप्त मादूर्ध्वंवरवध्वोर्विवाहोनदुष्यति ॥ मातृपक्षेकूटस्थमारभ्यतत्पुत्रादिपरिगणनायांवरवध्वोर्माताचेत्पंचमीभवतितदातयो स्सापिंड्यनिवृत्तेर्विवाहोनदोषायेति ॥ अथमातुलकन्याविषये ॥ मातुलस्यसुतामूढ्वामातृगोत्रांतथैवच ॥ समानप्रवरां चैवद्विजश्चांद्रायणंचरेदित्यादीनिशतातपादीनांवचनानिगांधर्वादिविवाहोढाजाविषयाणि तत्रसापिंड्यनिवृत्तेरभावात् ॥

मातुलसुताग्राहकश्रुतिःस्मृतिसदाचाराः ब्राह्मादिविवाहोढाजाविषयाः ॥ तत्रसापिंड्यनिवृत्तेः ॥ श्रुतिस्तु ॥ आयाहीं
द्रेतिऋग्वेदेप्रसिद्धा ॥ अतस्तृतीयेसंगच्छावहैचतुर्थेसंगच्छावहै ॥ इतिवाजसनेयश्रुतेश्च ॥ ज्योतिःसंग्रहे ॥ नराशिकू
टंनगणंनयोनिरितिवक्ष्यमाणश्लोकोप्यत्रयोज्यः ॥ मातुलंपैशाचंचेतिच ॥ कूटस्थमारभ्यतृतीयेचतुर्थेवासंगच्छावहेविव
हावहै ॥ इतिषट्त्रिंशन्मतेपि ॥ तृतीयांमातृतः कन्यांतृतीयांपितृतस्तथा ॥ विवाहयेन्मनुः प्राहपाराशर्योंगिरायमः ॥
चतुर्विंशतिमतेपि ॥ तृतीयांवाचतुर्थींवापक्षयोरुभयोरपि ॥ विवाहयेन्मनुःप्राहपाराशर्योंगिरायमः ॥ पाराशरः ॥ चतु
र्थीमुद्वहेत्कन्यांचतुर्थःपंचमोपिवा ॥ पाराशरमतेषष्ठींपंचमोनतुपंचमीमिति ॥ अथमात्रादिसंबंधविषये ॥ बोधायनः ॥
मातुः सपत्नींभगिनींतत्सुतांचविवर्जयेत् ॥ पितृव्यपत्नींभगिनींतत्सुतांचविवर्जयेत् ॥ संग्रहे ॥ यदाकूटस्थमारभ्ययया
मातायास्वसाभवेत् ॥ सैवत्य ज्यापरिणयेनान्यथाहपराशरः ॥ पंचमः पंचमींकन्यांनोद्वहेदितियद्वचः ॥ मातृष्वस्त्रादि
संबंधान्यन्यत्रतुनदोषभाक् ॥ स्नुषामुखीतथापुत्रीशस्तोद्वाहेतुपंचमी ॥ संबंधंकुरुतेयत्रनदोषइतिगोभिलः ॥ स्यात्सप्त
मेवाप्यथपंचमेवायद्योभयत्रापिचपंचमेवा ॥ तद्वत्स्वरूपेविहिताचसम्यक्कन्याचतुर्थींवरपंचमोवा ॥ आवार्धिमूर्ध्नः पितृमा
तृतोर्वाक्सुतांचकन्यांभगिनींतथैव ॥ त्यजेत्प्रसूंषट्पुरुषांतरालेप्रसूंचतस्मान्ननिरीक्षितव्यं ॥ सापिंडात्परतःसुतांचभ
गिनींमातृष्वसारंस्नुषांज्येष्ठभ्रातृपितृव्यपत्निभगिनींधात्रीसुतांनोद्वहेत् ॥ अज्ञानादिकृतोद्वहोयदितदात्याज्यावधूःसर्व
दाप्रायश्चित्तविधानतश्चसदृशंसापिंड्यवत्पालयेत् ॥ यथोक्तसापिंड्यनिवृत्यनंतरंतत्रत्यकन्यायादिमातृसंज्ञिता ॥ पुत्रीय

दिस्याद्भगिनीयदिस्यात्तयोर्विवाहोनकदाचिदेव ॥ पंचमःपंचमींचैवसापिंड्यांतरपौरुषं ॥ यदिचेदिच्छयेद्यस्तुकनिष्ठभ
गिनीसमं ॥॥पंचमःपंचमींकन्यांनोद्वहेदितियद्वचः ॥ मातृष्वस्त्रानुबंधित्वात्पंचमोनतुपंचमीं ॥ स्नुषामुखींतथापुत्रींपंचमा
यविवाहयेत् ॥ स्वसारंमातरंहंतिउद्वहेत्पतितोद्विजः ॥ जननीभगिनीपित्रोःपक्षेस्वसृस्नुषासुताः॥ संबंधिन्योनवोढव्याःक
न्याभिन्नान्वयाअपि ॥ असपिंडाचयामातुरसगोत्राचयापितुः ॥ साप्रशस्ताद्विजातीनांदारकर्मणिमैथुने ॥ स्नुषामुखीतथा
पुत्रीशस्तोद्वाहेतुपंचमी ॥चतुर्थीवावरोद्वाहेस्वसामाताचनोद्वहेत् ॥ असपिंडांसपिंडांवामातरंभगिनींविना ॥ पितृव्यभार्यां
भगिनींतत्पुत्रीमपिवर्जयेत् ॥ यदानगणनात्पूर्वसंबंधःप्राप्यतेयदि ॥ स्वसारंमातरंवापिविवाहेदितिगौतमः ॥ विवाहसा
पिंड्यमतःप्रवक्ष्येकूटस्थमारभ्यापितुश्चमातुः ॥ विवाहसापिंड्यमतःपरस्तात्षष्ठेमेवापिभवेद्विवाहः ॥ विवाहसापिंड्य
मतःप्रशस्तंस्यात्सप्तमेवाप्यथपंचमेवा ॥ यद्वोभयत्रापिचपंचमेपितद्विश्वरूपेभिहितंहिसम्यक् ॥ कन्यांचतुर्थीमपिपंच
मेवावरश्चतुर्थोनतुपंचमींवहेत् ॥ पित्रोर्भवेत्पंचमषष्ठयोर्वास्मृत्यर्णवेसम्यगुदीरितंचयत् ॥ मिथस्तृतीयेपितथाचतुर्थेविवा
हउक्तःस्मृतिचंद्रिकायां ॥ चतुर्थषष्ठेतुपराशरीयेतथातृतीयस्तुचतुर्थिकांच ॥ चतुर्थिकांचैवतथातृतीयोविवाहयेन्मातृमुखीं
चहित्वा॥तथैवहित्वाभगिनींचतुर्थस्तृतीयकन्यांविदधीतशंखः॥ पितृव्यपत्नींभगिनींचतत्सुतांसापत्निमातुर्भगिनींचतत्सु
तां ॥ विवाहयेच्चैवयदिप्रमादाच्चांडालयोनेरिदमेवकारणं ॥ येनकेनापिसंप्राप्तांस्वसारंमातरंत्यजेत् ॥ प्रमादादुद्वहेत्तांवैस
चांडालोनसंशयः ॥ भिन्नान्वयेयदिपरांचयदापिदूरंसंबंधतस्तुजननींभगिनींचकन्यां ॥ श्वश्रूंतथाश्वश्रुसुतांविवाह्यावं

धुत्रयोभयभवास्तुसदैववर्ज्याः ॥ बंधुत्रयंभवावर्ज्याइत्युक्तं ॥ तेतु ॥ पितुःपितृष्वसुः पुत्राःपितुर्मातृष्वसुःसुताः ॥ पि
तुर्मातुलपुत्राश्चविज्ञेयापितृबांधवाः ॥ मातुर्मातृष्वसुःपुत्रामातुर्मातृष्वसुःसुताः॥ मातुर्मातुलपुत्राश्चइत्येतेमातृबांधवाः ॥
आत्मतातस्वसुःपुत्राआत्ममातुःस्वसुःसुताः ॥ आत्ममातुलपुत्राश्चइत्येतेह्यात्मबांधवाः ॥२६॥ इतिसंबंधविचारः ॥ अ
थकन्याविक्रयः ॥ कन्यामाभरणंमौल्यंसमर्थाश्रयसेवकौ ॥ परस्परविवाहश्चविक्रयश्चैवपंचधा ॥ माताभक्षयतेगात्रंपि
ताभक्षयतेशिरः ॥ बंधुभिर्भक्ष्यतेबाहुंशेषांश्चैवेतरेजनाः ॥ स्मृत्यंतरे ॥ सावित्रींयस्ययोदद्यात्तत्कन्यांनविवाहयेत् ॥ त
द्गोत्रेतत्कुलेवापिविवाहोनैवदोषकृत् ॥ इति ॥ अथपूंस्त्वपरीक्षा ॥ नारदः ॥ यस्याप्सुप्लवतेबीजंऱ्हादिमूत्रंचफेनिलं ॥ पु
मांस्याल्लक्षणैरेतैर्विपरीतस्तुषंडकः ॥ इति बीजंवीर्यं ॥ ऱ्हादिध्वनिमत् ॥ वासिष्ठे ॥ अत्यासन्नेऽतिदूरेचअत्याध्येचातिदुर्ब
ले ॥ वृत्तिहीनेचमूर्खेचषट्सुकन्यानदीयते ॥ इतिवर्ज्यवरः ॥ अथपरिवित्तलक्षणं ॥ दाराग्निहोत्रसंयोगंकुरुतेयोग्रजेस्थि
ते ॥ परिवेत्तासविज्ञेयःपरिवित्तिस्तुपूर्वजः ॥ शातातपः ॥ पितृव्यपुत्रास्सापत्न्याःपरनारीसुतास्तथा ॥ दाराग्निहोत्र
संयोगेनदोषःपरिवेदने॥ सापत्न्याअन्यमातृजाः॥ गौतमः ॥ भिन्नोदरदत्तकेचपितृव्यतनयेग्रजे ॥ दाराग्निहोत्रसंयोगेन
दोषःपरिवेदनेइति ॥ अथविवाहकालमाहनारदः ॥ युग्मेब्देजन्मतःस्त्रीणांप्रीतिदंपाणिपीडनं ॥ तद्वत्पुंसामयुग्मेब्देऽन्य
त्ययेनाशनंतयोरिति ॥ अष्टवर्षाभवेद्गौरीनववर्षातुरोहिणी ॥ दशवर्षाभवेत्कन्याद्वादशीवृषलीमता ॥ नवमेनग्निकाभवेदि
तिसंवर्तः ॥ मरीचिः ॥ गौरींददन्नाकपृष्ठंवैकुंठंरोहिणींददन् ॥ कंन्यांददन्ब्रह्मलोकंरौरवंतुरजस्वलां ॥ शौनकः ॥ कुलशी

लवयोर्वृत्तरूपाढ्यांनग्निकांशुभां॥ विधिनाचोद्वहेत्कन्यांसर्वकामार्थसिद्धये॥ नग्निकालक्षणंस्मृतिभास्करे॥यावल्लज्जांनजा
नातिकन्यापुरुषसन्निधौ॥ योन्यादीन्नावगूहेततावद्भवतिनग्निकाइति॥ अथकन्यापरिवेत्ताविषयेगर्गः॥ एकमातृप्रसूतानांपु
त्रीणांपरिवेदने॥ दोषःस्यात्सर्ववर्णेषुनदोषोभिन्नमातृषु॥वृद्धमनुः॥विवाहानधिकारायज्येष्ठकन्यास्थितायदा॥तदनुज्ञांवि
नावापिकनिष्ठामुद्वहेत्तदा॥पारिजातेसंहितासारावल्यां॥एकमातृजविवाहविषये॥एकमातृप्रसूतानामेकस्मिन्वत्सरेयदि॥
विवाहंनैवकुर्वीतकुर्वंतिमुनयोन्यथा ॥ विवाहस्त्वेकजन्यानामेकस्मिन्नुदयेकुले ॥ नाशंकरोत्येकवर्षेस्स्यादेकाविधवात
योरिति॥ उदयोलग्नं ॥अस्यदेशव्यवस्था ॥ एकोदरीकरतलग्रहणंयदिस्यादेकोदरस्थवरयोः कुलनाशहेतुः ॥ एकाब्दिके
तुविधवाभवतीतिकन्यानद्यंतरेतुशुभदंपृथुशैलरोधे ॥ गर्गः ॥ भ्रातृयुक्स्वसृयुग्मेचभ्रातृस्वसृयुगेतथा ॥ नज्ञातुमंडनंकुर्या
देकस्मिन्मंडपेहनि ॥ पुत्रीपरिणयादूर्ध्वंयावद्दिनचतुष्टयं ॥ पुत्र्यंतरस्यकुर्वीतनोद्वाहमिति सूरयः ॥ इत्येतद्वचनद्वयं
भिन्नमातृकविषयं ॥ अथप्रत्युद्वाहादिनिषेधः ॥ प्रत्युद्वाहोनैवकार्योनैकस्मैदुहितृद्वयं ॥ नैवैकजन्ययोःपुंसोरेकजन्येतु
कन्यके ॥ नैवंकदाचिदुद्वाहोनैकदामंडनद्वयं ॥ अन्यच्च ॥ एकजन्येतुकन्येद्वेपुत्रयोर्नैकजन्ययोः ॥ नपुत्रीद्वयमेकस्मैप्र
दद्यात्तुकदाचनेति ॥ अथैकोदराणामुपनयनविवाहकालनिर्णयः ॥ संहितासारावल्यां ॥ नमंडनान्मुंडनमूर्ध्वमिष्टंनपु
त्रयोर्मंडनमेकवर्षे ॥ नपुंविवाहोर्ध्वमृतुत्रयेपिविवाहकार्यंदुहितुश्चकुर्यात् ॥ वासिष्ठे ॥ नपुंविवाहोर्ध्वमृतुत्रयेपिविवाहकार्यं
दुहितुश्चकुर्यात् ॥ नमंडनाच्चापिहिमुंडनंचगोत्रैकतायांयदिनाब्दभेदः ॥ गोत्रैकतायामितिविज्ञातसापिंड्येज्ञेयं॥तथाचा

र्थंतउक्तंस्मृत्यंतरे ॥ कुलेऋतुत्रयादर्वाक्मंडनान्नतुमुंडनं ॥ प्रवेशान्निर्गमोनेष्टोनकुर्यान्मंडनत्रयं ॥ पुत्रोद्वाहान्नैवपुत्रीविवा
होपिऋतुत्रये ॥ अब्दांतरान्मुंडनंचनैकदामुंडनद्वयं ॥ सायणीये ॥ एकस्मिंच्छोभनेवृत्तेद्विशुभंनैवकारयेत् ॥ यदिकु
र्यात्प्रमादेनतत्रस्यादशुभंध्रुवं ॥ अब्दभेदेनदोषइतिसंहितासारावल्यां ॥ फाल्गुनेचैत्रमासेतुपुत्रोद्वाहोपनायने ॥ भेदा
दब्दस्यकुर्वीतनर्तुत्रयविलंबनं ॥ बृहन्मनुः ॥ एकमातृजयोरेकवत्सरेपुरुषस्त्रियोः ॥ नसमानक्रियांकुर्यान्मातृभेदेविधी
यते ॥ नारदः ॥ पुत्रोद्वाहात्परंपुत्रीविवाहोनऋतुत्रये ॥ नतयोर्व्रतमुद्वाहान्मंडनादपिमुंडनमिति ॥ वराहः ॥ विवाह
स्त्वेकजातानांषण्मासाभ्यंतरेयदि ॥ असंशयंत्रिभिर्वर्षैस्तत्रैकाविधवाभवेत् ॥ एकोदरभ्रातृविवाहकृत्यंस्वसुर्नपाणिग्रह
णंविधेयं ॥ षण्मासमध्येमुनयःसमूचुर्नमुंडनंमंडनतोपिकार्यं ॥ अस्यापवादस्तत्रैव ॥ ऋतुत्रयस्यमध्येचेदन्याब्दस्य
प्रवेशनं ॥ तदाह्येकोदरस्यापिविवाहस्तुप्रशस्यते ॥ संहिताप्रदीपे ॥ ऊर्ध्वंविवाहात्तनयस्यनैवकार्योविवाहोदुहितुः
समार्धं ॥ अप्राप्यकन्याश्वशुरालयंचवधूःप्रवेश्यास्वगृहंनचादौ ॥ मदनरत्नेवसिष्ठः ॥ द्विशोभनंनैकगृहेपिनेष्टंशुभंतु
पश्चान्नवभिर्दिनैस्तु ॥ अवश्यकंशोभनमुत्सवोवाद्वारेथवाचार्यविभेदतोवा ॥ एकोदरप्रसूतानांपूंसांनाग्नित्रयंभवेत् ॥ भि
न्नोदरप्रसूतानांनेतिशातातपोब्रवीत् ॥ कुर्वंतुमुनयोकेचिदन्यस्मिन्वत्सरेलघु ॥ लघुवागुरुवाकार्यंप्राप्तंनैमित्तिकंतुय
त् ॥ पुत्रोद्वाहः प्रवेशाख्यःकन्योद्वाहस्तुनिर्गमः ॥ मुंडनंचौलमित्युक्तंव्रतोद्वाहौतुमंगलं ॥ चौलंमुंडनमेवोक्तंवर्जयेन्मंडना
त्परं ॥ मौंजीचोभयतः कार्यायतोमौंजीनमुंडनं ॥ अभिन्नेवत्सरेपिस्यात्तदहस्तत्रभेदयेत् ॥ अभेदेतुविनाशःस्यान्नकुर्या

देकमंडपे ॥ कपर्दिकारिकायां ॥ वराहमिहिरश्च ॥ उद्वाह्यपुत्रींनपिताविदध्यात्पुत्र्यंतरस्योद्वहनंकदाचित् ॥ यावच्चतुर्थं
दिनमत्रपूर्वंसमाप्यवान्योद्वहनंविदध्यात् ॥ काश्यपः ॥ मौजीबंधस्तथोद्वाहः षण्मासाभ्यंतरेपिवा ॥ पुत्र्युद्वाहंनकुर्वीतावि
भक्तानांनदोषकृत् ॥ अथयमलविषये ॥ एकस्मिन्वासरेप्राप्तेकुर्याद्यमलजातयोः ॥क्षौरंचैवविवाहंचमौंजीबंधनमेवच॥ज्यो
तिर्विवर्णे ॥ एकोदरयोर्द्वयोरेकदिनोद्वाहनेभवेन्नाशः॥यद्यंतरेचैकदिनेप्याहुः संकटेचशुभं ॥ऊर्ध्वंविवाहाच्छुभदोनरस्यना
रीविवाहोनऋतुत्रयंस्यात्॥नारीविवाहात्तदहेपिशस्तंनरस्यपाणिग्रहमाहुरार्याः ॥ मेधातिथिः ॥ पृथक्भ्रातृजयोःकार्योवि
वाहस्त्वेकवासरे ॥ एकस्मिन्मंडपेकार्यःपृथक्वेदिकयोस्तथा ॥पुष्पपंक्तिकयोःकार्यंदर्शनंनाशिरस्थयोः॥भगिनीभ्यामुभा
भ्यांचयावत्सप्तपदीभवेत्॥ इतिनिर्णयसिंधौ ॥ यमलविषयेभट्टकारिकायां ॥ एकस्मिन्वत्सरेचैववासरेमंडपेतथा ॥ कर्तव्यं
मंगलंस्वस्रोर्भ्रात्रोर्यमलजातयोः ॥ वृद्धवासिष्ठः ॥ पुत्रीविवाहात्परतस्सदैवशुभप्रदंपुत्रविवाहकर्म ॥ पुत्रद्वयेनैवऋतुत्र
येपिपुत्रीद्वयंवापिकदाचिदेव ॥ अथप्रातिकूल्यविषये ॥ ज्योतिर्निबंधेगर्गः ॥ कृतेतुनिश्चयेपश्चान्मृत्युर्भवतिकस्यचित् ॥
तदानमंगलंकुर्यात्कृतेवैधव्यमाप्नुयात् ॥ मेधातिथिः ॥ वधूवरार्थंघटितेसुनिश्चितेवरस्यगेहेप्यथकन्यकायाः ॥ मृत्युर्यदा
स्यान्मनुजस्यकस्यचित्तदानकार्यंखलुमंगलंबुधैः॥ मंगलंविवाहः॥ स्मृतिचंद्रिकायां ॥ कृतेवाङ्निश्चयेपश्चान्मृत्युर्मर्त्यस्य
गोत्रिणः॥ तदानमंगलंकार्यंनारीवैधव्यदंध्रुवं ॥ भृगुः ॥ वाग्दानानंतरंयत्रकुलयोःकस्यचिन्मृतिः ॥ तदोद्वाहोनैवकार्यःस्व
वंशक्षयदोयतः ॥ शौनकः ॥ वरवध्वोःपितामातापितृव्यश्चसहोदरः॥ एतेषांप्रातिकूलंचमहाविघ्नप्रदंभवेत् ॥ पितापिता

महश्चैवमाताचैवपितामही ॥ पितृव्यस्त्रीसुतोभ्राताभगिनीचाविवाहिता ॥ येभिरेवविपन्नैस्तुप्रतिकूलंबुधैःस्मृतं॥अन्यैर
पिविपन्नैस्तुकेचिदूचुर्नतद्भवेदिति ॥ मांडव्यः ॥ वाग्दानानंतरंमातापिताभ्राताविपद्यते ॥ विवाहोनैवकर्तव्यःस्ववंशहि
तामिच्छता ॥ संकटेतुमेधातिथिः ॥ वाग्दानानंतरंयत्रकुलयोःकस्यचिन्मृतिः ॥ तदासंवत्सरादूर्ध्वंविवाहःशुभदोभवे
त् ॥ अशौचतारतम्यमासएव ॥ पितुरब्दमशौचंस्यात्तदर्धंमातुरेवच ॥ मासत्रयंतुभार्यायास्तदर्धंभातृपुत्रयोः ॥ अन्ये
षांतुसपिंडानामाशौचंमासमीरितं ॥ तदंतेशांतिकंकृत्वावाग्दानादिचरेत्पुनरिति ॥ ज्योतिःप्रकाशे ॥ प्रतिकूलेपिकर्तव्यो
विवाहोमासतःपरं ॥ शांतिंविधायगांदत्वावाग्दानादिचरेत्पुनरिति ॥ शांतिंविनायकशांतिं ॥ तथाचमेधातिथिः ॥ संकटे
समनुप्राप्तेयाज्ञवल्क्येनयोगिना॥शांतिरुक्तागणेशस्यतांकृत्वाशुभमाचरेत् ॥ प्रतिकूलेनकर्तव्योगच्छेद्यावदृतुत्रयं॥ प्रतिकू
लेपिकर्तव्यमित्याहुर्विभवेसति ॥प्रतिकूलेसपिंडस्यमासमेकंविवर्जयेत्॥मेधातिथिः॥पुरुषत्रयपर्यंतंप्रतिकूलंस्वगोत्रिणां॥
प्रवेशान्निर्गमस्तद्वत्तथामंडनमुंडने॥अथाशौचविषयेनिर्णयामृतेविष्णुः॥ विवाहादिकर्मस्वनारब्धेषुसूतकेप्राप्तेसंनिहितल
ग्नांतराभावेवाकूष्मांडैर्हुत्वाविवाहःकार्यः॥अनारब्धविशुद्ध्यर्थंकूष्मांडैर्जुहुयाद्घृतं ॥गांदद्यात्पंचगव्याशीततःशुद्ध्यतिसूत
कीति ॥ अवश्यकंविवाहादिकंकुर्यात् ॥अथरजोदोषनिर्णयः॥माधवीये ॥ प्रारंभात्प्राग्विवाहस्यमातायदिरजस्वला ॥निवृ
त्तिस्तस्यकर्तव्यासहलश्रुतिचोदनात्॥प्रारंभान्नांदीश्राद्धात्॥ नांदीश्राद्धंविवाहादावित्युक्तत्वात् ॥मेधातिथिः ॥चौलेचव्रत
बंधचविवाहेयज्ञकर्मणि ॥भार्यारजस्वलायस्यप्रायस्तस्यनशोभनं ॥ वधूवरान्यतमयोर्जननीचेद्रजस्वला ॥ तस्याःशुद्धेःप

रंकार्यंमांगल्यंमनुरब्रवीत्॥ अथयदिनांदीमुखानंतररजोदोषेकपर्दिकारिकायां॥सूतिकोदक्ययोःशुद्धौगांदद्याद्धोमपूर्वकं॥
प्राप्तेकर्मणिशुद्धिःस्यादितरस्मिन्नशुद्ध्यति॥अलाभेसुमुहूर्तस्यरजोदोषेचसंगते॥श्रियंसंपूज्यतत्कुर्यात्पाणिग्रहणमंगले॥
हैमींमाषमितांपद्मांश्रीसूक्तविधिनार्चयेत्॥प्रत्यृचंपायसंहुत्वाअभिषेकंसमाचरेत्॥रजोदोषनिर्णयः॥अथचतुर्थिमध्येश्राद्धे
दर्शेचप्राप्तेज्योतिर्निबंधे॥ विवाहमारभ्यचतुर्थिमध्येश्राद्धंदिनंदर्शादिनंयदिस्यात्॥ वैधव्यमाप्नोतितदाशुकन्याजीवेत्पति
श्चेदनपत्यताच॥विवाहमध्येयदिचेत्क्षयाहस्तत्रस्वमुख्याःपितरोनयंति॥ व्रतेविवाहेपरतस्तुकुर्याच्छ्राद्धंस्वधाभिर्नतुदू
षयत्तं ॥ तंविवाहंनत्यजेत् ॥ किंतुकुर्यादेवेत्यर्थः ॥ येवाभद्रंदूषयंतिस्वधाभिरितिश्रुतेश्च॥ आश्वलायनधर्मे ॥ अलाभे
सुमुहूर्तस्यविघ्नंयःकुरुतेयदि ॥ स्वधयातुविवाहस्यनसपश्यंच्छुभंक्वचित् ॥ विघ्नमाचरतेयस्तुयज्ञस्योद्वाहकस्यच ॥
यात्रायाश्चैवधर्मस्यसयातिनरकंध्रुवं ॥ एतदापद्विषयं ॥ अतएवप्रयोगदर्पणे ॥ क्षयाहेप्राप्तेवृद्धिश्राद्धनिषेधइति ॥ पि
त्रोःप्रत्याब्दिकेचैवनांदीश्राद्धंनकारयेत्॥ यदिमोहाद्द्विजःकुर्यान्मांगल्यमशुभंभवेत्॥ पुनश्चतत्रैव॥ नांदीश्राद्धेकृतेयावद्दे
वकोत्थापनंभवेत् ॥ ब्रह्मयज्ञंचवैश्राद्धंवेदानुष्ठानमेवच ॥ शवेक्षणंस्वधाकारंश्मश्रुकेशनिकृंतनं ॥ सीमातिक्रमणंचैवश्रा
द्धभोजनमेवच ॥ नकुर्याच्छुभकर्ताचसपिंडाअपिचैवहि ॥ यस्तुवैकुरुतेमोहादशुभंसचवैलभेत् ॥ पुनस्तत्रैव ॥ नांदी
श्राद्धेकृतेइत्युपक्रम्य ॥ अपसव्यंस्वधाश्राद्धंनांदीस्नानंशवेक्षणं ॥ वर्जयेत्तर्पणंचैवदेवकोत्थापनावधि ॥ विवाहेचोपन
यनेकृतेचौलेसुतस्यच ॥ त्यजेत्पिंडांस्तिलान्च्छ्राद्धेनरकंचाब्दमध्यतः ॥ मातापित्रोर्मृताहेचगयाश्राद्धेमहालये ॥ दद्या

त्पिंडान्कृतोद्वाहः श्राद्धेष्वन्येषुवर्जयेदिति ॥ अथमासिकविषये ॥ शाट्यायनिः ॥ प्रेतश्राद्धानिसर्वाणिसपिंडीकरणंतथा ॥
अपकृष्यापिकुर्वीतकर्तुर्नांदीमुखेद्विजः ॥ वृद्धिंविनापकर्षेदोषमाहउशनाः ॥ वृद्धिश्राद्धविहीनस्तुप्रेतश्राद्धानियश्चरेत् ॥
सश्राद्धीनरकेघोरेपितृभिःसहमज्जति ॥ मेधातिथिः ॥ प्रेतकर्माण्यनिर्वर्त्यचरेन्नाभ्युदयक्रियां ॥ आचतुर्थंततःपुंसिपंचमे
शुभदंभवेत् ॥ स्मृत्यंतरे ॥ सपिंडिकरणादर्वागपकृष्यकृतान्यपि ॥ पुनरप्यपकृष्यंतेवृद्ध्युत्तरनिषेधनात् ॥ अथ
शौचविषयेयाज्ञवल्क्यः ॥ दानेविवाहेयज्ञेचसंग्रामेदेशविप्लवे ॥ आपद्यपिचकष्टायांसद्यःशौचंविधीयते ॥ ब्रह्मपुराणे ॥
दातुःप्रतिगृहीतुश्चकन्यादानेतुनोभवेत् ॥ विवाहविष्णोःकन्यायालाजहोमादिकर्मणीति ॥ व्रतयज्ञविवाहेषुश्राद्धेहोमेत्र
तेजपे ॥ प्रारब्धेसूतकंनस्यादनारब्धेतुसूतकमितिविष्णुवचनाच्च ॥ प्रारंभस्तेनैवोक्तः ॥ प्रारंभोवरणंयज्ञेसंकल्पोव्रत
सत्रयोः ॥ नांदीमुखंविवाहादौश्राद्धेपाकपरिक्रियेति ॥ अथकन्यादातारः ॥ नारदः ॥ पितादद्यात्स्वयंकन्यांभ्रातावानु
मतःपितुः ॥ मातामहोमातुलश्चस्वकुल्योबांधवस्तथा ॥ मातात्वभावेसर्वेषांप्रकृतौयदिवर्तते ॥ तस्यामप्यप्रकृतिस्थायांक
न्यांदद्युःस्वजातयः ॥ (अप्रकृतिस्थाउन्मादादिदोषयुक्ता) ॥ याज्ञवल्क्यः ॥ पितापितामहोभ्रातास्वकुल्योजननीतथा ॥
कन्याप्रदःपूर्वनाशेप्रकृतिस्थःपरःपरइति ॥ अन्यकन्यांधनेनगृहीत्वावाक्दानंकुर्यादित्युक्तंस्कांदे ॥ आत्मीकृत्यसुवर्णे
नपरकीयांतुकन्यकां ॥ धर्मेणविधिनादातुमसगोत्रेपियुज्यते ॥ विष्णुधर्मोत्तरे ॥ अनाथांकन्यकांदत्वासदृशेवाधिकेवरे ॥
द्विगुणंफलमाप्नोतिकन्यादानेयदीरितमिति ॥ अथविवाहभेदाः ॥ मनुः ॥ ब्राह्मोदैवस्तथैवार्षःप्राजापत्यःस्तथासुरः ॥ गांध

वौराक्षसश्चैवपैशाचस्त्वष्टमोधमः॥चत्वारोब्राह्मणस्याद्याःशस्तागांधर्वराक्षसौ ॥ राज्ञस्तथासुरोवैश्येशूद्रेचांत्यस्तुगर्हितः॥
अंत्यःपैशाचः ॥ अथनांदीपितृदेशक्रमः ॥ स्मृत्यर्थसारे ॥ नांदीमुखेविवाहेचप्रपितामहपूर्वकं ॥ नामसंकीर्तयेद्विद्वानन्य
त्रपितृपूर्वकमिति ॥ नांदीमुखइत्येतच्छाखांतरविषयं ॥ नांद्यंतरनिषिद्धान्याहगार्ग्यः ॥ नांदीश्राद्धेकृतेपश्चाद्यावन्मातृवि
सर्जनं ॥ दर्शश्राद्धंक्षयश्राद्धंस्नानंशीतोदकेनच ॥ अपसव्यंस्वधाकारंनित्यश्राद्धंतथैवच ॥ ब्रह्मयज्ञंचाध्ययनंनदीसीमा
तिलंघनं॥उपवासंव्रतंचैवश्राद्धभोजनमेवच॥नैवकुर्यात्सपिंडाश्चमंडपोद्वासनावधि॥ज्योतिषे॥ स्नानंसचैलंतिलमिश्रकर्मप्रे
तानुयानंकलशप्रदानं ॥अपूर्वतीर्थामरदर्शनंचविसर्जयेन्मंगलतोब्दमेकं ॥ मासषट्कंविवाहादौव्रतप्रारंभणेनच ॥ जीर्ण
भांडादिनत्याज्यंगृहसंमार्जनंतथा॥ऊर्ध्वंविवाहात्पुत्रस्यतथैवव्रतबंधनात् ॥ आत्मनोमुंडनंनैववर्षंवर्षार्धमेवच ॥ हेमाद्रौ॥
विवाहव्रतचूडासुवर्षमर्धंतदर्धकं ॥ पिंडदानंमृदास्नानंनकुर्यात्तिलतर्पणं ॥ तीर्थेसंवत्सरेप्रेतेपितृयज्ञेमहालये ॥ कृतोद्वाहो
पिकुर्वीतपिंडनिर्वापणंसदेति ॥ मातुलकन्याविषये ज्योतिःसंग्रहे ॥ नराशिकूटंनगणंनयोनिः स्त्रीदीर्घवर्णोगुणरज्जुवेधाः॥
सर्वाणिकूटाणिविवर्जयंतितस्मैहितामातुलकन्यकाया ॥ मातुलपैशाचराक्षसगांधर्वविवाहसंज्ञाश्च ॥ प्रेमछलबलचौर्याश्रा
श्रितलग्नंनचग्रहाः कूटं ॥ अथवधूवरयोरेकनक्षत्रराशिनिर्णयः ॥ संग्रहे ॥ एकर्क्षेचैकराशौचविवाहःप्राणहानिदः ॥ ए
कर्क्षेभिन्नराशौवादंपत्योःशुभदंभवेत् ॥ एकराशौद्विनक्षत्रेपुंतराप्रथमाभवेत् ॥ अतीवशोभनाप्रोक्तास्त्रीताराचेद्विनश्य
ति ॥ दंपत्योरेकनक्षत्रेद्विपदर्क्षेमृतिर्भवेत् ॥ त्रिपदर्क्षेगतोत्पत्नीचतुष्पादेशुभावहं ॥ तोयर्क्षंभरणीसर्पाहस्तेंद्रवरुणानि

पृथक्त्वे ॥ आषाढेयमभेसर्पेहस्तेंदुवरुणानिषट् ॥ दंपत्योरेकनक्षत्रमायुःश्रीपुत्रनाशनं ॥ इति॥२०॥ अत्रैवंव्यवस्था॥ आश्विनीकृत्तिकामृगशिरः पुनर्वसुपूर्वाफल्गुन्युत्तरात्रयचित्राविशाखानूराधाश्रवणपूर्वाभाद्रेरेवत्याइतिचतुर्दशनक्षत्राणिदं पत्योरेकनक्षत्रेश्रेष्ठानि॥ रोहिण्यार्द्रापुष्यमघास्वातीधनिष्ठाश्चेतिषण्मध्यमाः॥ भरण्याश्लेषहस्तज्येष्ठमूलपूर्वाषाढशतता राइतिसप्तवर्ज्याः॥ अथैकराशौद्विनक्षत्रेपूर्वनक्षत्रंपुरुषस्यापरनक्षत्रंस्त्रियाश्चेत्सर्वाण्यपिशुभान्येव॥यदिस्त्रीनक्षत्रंपूर्वमप रंपुरुषस्यतदाकानिचिद्ग्राह्याणि ॥ यथापूर्वाषाढशततारार्द्रोत्तराहस्तस्वात्यनूराधाश्विनीमघोत्तराषाढमृगशिरःकृत्तिकारो हिण्यइतित्रयोदशनक्षत्राणिस्त्रीपूर्वाण्यपिग्राह्याणि॥ अन्यानिवर्ज्याणि॥मूलजाश्वशुरंहंतिव्यालजाचतदंगनां॥ऐंद्रेधवाग्र जंहंतिविशाखासुधवानुजं॥सुतःसुतावानियतंश्वशुरंहंतिमूलजः॥तदंत्यपादजोवापिनैवाश्लेषांत्यपादजा॥ अन्यत्र॥ मूलाद्य पादेश्वशुरंनिहंतिव्यालांत्यपादेचतदंगनांच॥ ऐंद्रेद्विदैवांतिमपादजातातदग्रजंहंतितथैवदेवरं॥ विशाखाचतुलायुक्तादेवर स्यसुखप्रदा॥साकन्यादेवरंहंतिपुच्छेवृश्चिकसंयुता॥ मूलाश्लेषविशाखासुज्येष्ठाज्जातश्चयःपुमान्॥ नदुष्यतिविवाहेचस्त्री णांसर्वत्रवर्जयेत्॥ अथज्येष्ठविषये॥ ज्येष्ठस्यज्येष्ठकन्यायाविवाहोनप्रशस्यते॥ तयोरन्यतरेज्येष्ठेज्येष्ठमासःप्रशस्यते ॥ मुहूर्तचिंतामणौ॥ नज्येष्ठाज्ज्येष्ठयोःकार्यंनृनार्योःपाणिपीडनं ॥ तयोरेकतरेज्येष्ठेज्येष्ठमासेपिकारयेत् ॥ द्वौज्येष्ठौमध्य मौप्रोक्तावेकज्येष्ठःसुखावहः॥ ज्येष्ठत्रयंनकुर्वीतविवाहंसर्वसंमतं ॥ पराशरः ॥ अज्येष्ठकन्यकायत्रज्येष्ठपुत्रोवरोयदि ॥ व्यत्ययोवातयोस्तत्रज्येष्ठमासःशुभावहः ॥ अथजन्ममासादिनिर्णयः ॥ जन्ममासिनचजन्मभेथवानैवजन्मदिवसेपि

कारयेत् ॥ आद्यगर्भदुहितुस्सुतस्यवाज्येष्ठमासिनतुजातुमंगलं ॥ रत्नकोशे ॥ जन्मर्क्षेजन्मदिवसेजन्ममासेशुभंत्य
जेत् ॥ ज्येष्ठेमास्याद्यगर्भस्यशुभंवर्ज्यंस्त्रियाअपि ॥ नजन्मभेजन्मगृहेदिनेवाकुर्याद्विवाहंनचजन्ममासे ॥ ज्येष्ठर्क्षजं
ज्येष्ठसुतांगनानांमिथोविवाहोनतुशुक्रमासे ॥ अन्नप्राशनमुद्वाहचौलकर्मोपनायनं ॥ जन्ममासेतुवर्ज्यंस्यात्कलिंगमग
धेषुच ॥ नर्मदादक्षिणेदेशेजन्ममासःशुभप्रदः ॥ अन्यदेशेनशुभदंबहूनांसंमतंत्विदं ॥ स्त्रीणांजन्मत्रयंश्रेष्ठंविवाहेतुप्रश
स्यते ॥ अन्यत्रापि ॥ विवाहेकन्यकानांतुजन्मर्क्षत्रितयंशुभं ॥ पुंसःप्रथमजन्मर्क्षंत्याज्यमन्यद्वयंशुभं ॥ माधवीये ॥ मुक्त्वैकं
जन्मर्क्षेद्वेतारेजन्मसंज्ञकेशुभदे ॥ उपनयनेचविवाहेभुक्तौयात्रागमेक्रमशः ॥ जन्मविपत्प्रत्यरेवधजन्माष्टमराशितारका
स्त्याज्याः ॥ साष्टमग्रहाःशुभेषुत्यजंतिषष्ठव्ययौचान्ये ॥ विपदादीनांदानमुक्तंनिर्णयसिंधौ ॥ विपदर्क्षेगुडंदद्यान्निधने
तिलकांचनं ॥ प्रत्यरेलवणंदद्याच्छाकंदद्यात्त्रिजन्मसु ॥ चंद्रेचशंखंलवणंचतारांतिथौविरुद्धेत्वथतंडुलांश्च ॥ धान्यंचदद्यात्क
रणेचवारेयोगेविरुद्धेकनकंप्रदेयं ॥ संग्रहे ॥ शाकंगुडंचतैलंचदधिसर्पिःपयोमधु ॥ फलंसुवर्णदानंचतारादोषोनविद्यते ॥
अथमासादिनिर्णयः ॥ नारदः ॥ पौषेपिमकरस्थेर्केचैत्रेमेषंगतेरवौ ॥ आषाढेमिथुनादित्येकेप्याहुःकरपीडनं ॥ माघ
फाल्गुनवैशाखज्येष्ठमासाःशुभावहाः ॥ मध्यमःकार्तिकोमार्गशीर्षोवैनिंदिताःपरे ॥ मार्गशीर्षमासनिषेधोज्येष्ठापत्यपरः ॥
तदाहचंडेश्वरः ॥ मार्गेमासितथाज्येष्ठेक्षौरंपरिणयंव्रतं ॥ ज्येष्ठपुत्रदुहित्रोस्तुयत्नेनपरिवर्जयेत्॥ आपदितत्रैव॥ कृत्तिकास्थं
रविंत्यक्त्वाज्येष्ठपुत्रस्यकारयेदिति ॥ श्रीधरीये ॥ अर्केकर्कटकन्यकाघटधनुर्मुक्तेभृगौमंत्रिणिस्फीतज्योतिषिशीतरोचिषिव

लेद्रिक्ते विरिक्तेतिथौ ॥ रोहिण्युत्तररेवतीपितृमरुन्मित्रेंदुहस्तासुरेष्वारार्कार्किजवासरादिरहितेषूद्वाहकर्मारभेत् ॥ असुरंमू
लं ॥ विधिरत्ने ॥ कन्याकुंभकुलीरगेदिनकरेकुर्यान्नपाणिग्रहंशेषाणिप्रवराणियानिनितरांमासानिपाणिग्रहे॥ इतिनारदः॥
नकदाचिद्दशर्क्षेषुभानोरार्द्राप्रवेशनात् ॥ विवाहोदेवतानांचप्रतिष्ठाचोपनायने ॥ अप्रबुद्धेहृषीकेशेयावत्तावन्नमंगलं ॥ उत्स
वेवासुदेवस्यदिवसेनान्यमंगलं ॥ अत्रविशेषस्तुवसिष्ठः॥ आषाढस्तुशुभोज्ञेयोयावत्सूर्योनकर्किणि॥विष्णुःशेतेसदाषाढेशु
क्लपक्षेहरेर्दिने ॥ कार्तिक्यांप्रतिबुद्धेतशुक्लपक्षेहरेर्दिने ॥ अप्रबुद्धोहृषीकेशोयावत्तावन्नमंगलं ॥ प्रबुद्धेचैवकुर्वीतसुदिनेनिर्म
लांबरे ॥नकदाचिद्दशर्क्षेषुभानोरार्द्राप्रवेशनात् ॥ मांगल्यादीनिकुर्वीतविवाहादीनिकानिचित्॥चैत्रेणसहाषाढादिमासचतु
ष्टयंवर्जयेत् ॥ तथाचगुरुः ॥ चैत्रेचाषाढपूर्वेषुचतुर्ष्वपिचवर्जयेत् ॥ अन्येतुशुभदामासास्सौरेणेतेतिशोभना इति ॥वसिष्ठः॥
अष्टौमासाःप्रशस्ताःस्युश्चत्वारःपरिवर्जिताः॥प्रशस्तेष्वेवमासेषुविवाहंयोजयेद्बुधः ॥चत्वारोनिंदितामासाःश्रावणाश्वयुजौ
तथा ॥ चैत्रेप्रोष्ठपदेचैवविद्वान्नैवप्रयोजयेदिति ॥ पौषस्तुशून्यत्वान्निंदितः ॥ नारदः ॥ माघफाल्गुनवैशाखज्येष्ठमासाः
शुभप्रदाः ॥ मध्यमःकार्तिकोमार्गशीर्षोन्येनिंदिताःपरेइति ॥ संग्रहे ॥ विवाहेचोपनयनेजन्ममासंविवर्जयेत् ॥ विशेषा
ज्जन्मपक्षंतुवसिष्ठाद्यैरुदाहृतमिति ॥ गृह्यसूत्रे ॥ उदगयनआपूर्यमाणपक्षेपुण्येनक्षत्रेइति ॥ सर्वेमासाविवाहस्यशुचित
पस्तपस्यवर्ज्यमित्येकेरोहिणीमृगशीर्षोत्तराफल्गुनीस्वातीतिविवाहस्यनक्षत्राणीतिच ॥ अतोबोधायनानांसर्वेमासाः
शुभावहाइत्युक्तं ॥ केचिदाषाढमाघफाल्गुनमासावर्ज्याइत्याहुः॥इतिमासनिर्णयः ॥ अथनक्षत्राणि ॥ सौम्येपैतृकहस्ता

श्वमैत्रमूलाख्यवायवः ॥ त्रीण्युत्तराणिपौष्णश्चरोहिणीशोभनप्रदा ॥ अन्याश्चसर्वावर्ज्याःस्युस्ताराःपाणिग्रहेसदा ॥ प्र
शस्तनक्षत्राणि॥स्वातीशशांकपितृतारकमैत्रभानिपुंजन्मऋक्षमथवावनितर्क्षकंवा ॥ राश्यादिकूटगणनादशकंनचेत्स्या
दत्यंतमिष्टमितिशास्त्रविदोवदंति॥इति ॥ वासिष्ठः ॥ शुक्लद्वितीयादिषुयेचकृष्णपक्षेदशम्यंतगताःप्रशस्ताः॥तास्वष्टमीस्कं
दगणेशदुर्गाश्चतुर्दशीपापतिथीर्विवर्ज्याः ॥ वाराः प्रशस्ताःशुभखेचराणांसूर्यार्किवारौखलुमध्यमौतौ ॥ त्याज्यस्सदाभू
मिसुतस्यवारः कामार्कतिथ्योरपितौप्रदोषौ ॥ तिस्रोत्तरामूलमघांत्यमित्रप्रजेशचंद्रार्कसमीरभेषु ॥ तदाप्रशस्ताखलु
कामिनीनांपाणिग्रहेवेधविवर्जितेषु ॥ इति ॥ अथसंक्रांतिनिर्णयः ॥ नारदीये ॥ त्याज्याःसूर्यस्यसंक्रांतेः पूर्वतःपरतःसदा॥
विवाहादिषुकार्येषुनाड्याःषोडशषोडश ॥ वासिष्ठे ॥ विषुवतोरयनयोर्दिनत्रयंहरिपदेषडशीतिमुखेपिच ॥ पूर्वतोपिपर
तोपिसंक्रमान्नाडिकाश्चखलुषोडशषोडश ॥ विषुवादिलक्षणमुक्तंमाधवीये ॥ अर्केस्थिरान्विशतिविष्णुपदाभिधानास्ते
भ्यः पराश्चषडशीतिमुखाश्चतस्रः ॥ संक्रांतयस्त्वजमृगास्यतुलाकुलीराज्ञेयाःक्रमादुदगवाग्विषुवायनाख्याः ॥ इति
मेषतुलासंक्रमौविषुवौ ॥ मकरकर्कटसंक्रमावयने ॥ वृषसिंहवृश्चिककुंभसंक्रमाविष्णुपदानि ॥ मिथुनकन्याधनुमीन
संक्रमाःषडशीतयइति ॥ अथाष्टमराशिः ॥ बार्हस्पत्ये ॥ जन्मेशाष्टमलग्नेशौमिथौमित्रेव्यवस्थितौ ॥ जन्मराश्यष्टमेशो
त्थदोषोनश्यतिभावतइति ॥ अथग्रहणं ॥ ग्रहणोत्पातभंत्याज्यंमंगलेषुऋतुत्रयं ॥ यावच्चराहुणाभुक्त्वामुक्तंतद्दग्धका
ष्ठवत् ॥ उत्पातग्रहणादूर्ध्वंसप्ताहमखिलग्रहे ॥ नाखिलेत्रिदिनंनेष्टंनेष्टंतद्वदृतुत्रयं ॥ ग्रस्तास्तेत्रिदिवंपूर्वंपश्चाद्ग्रस्तोदयो

केतून्विनान्यग्रहवर्जितेशुभग्रहराशिषुशुभयोगदृष्टियुक्तपापराशिषुविवाहंकुर्यात् ॥ दंपत्योर्जन्ममासंजन्मपक्षंवावर्जयेत्॥
जन्मदिनजन्मलग्नानिचवर्जनीयानिपुरुषस्याद्यजन्मपक्षंवर्ज्यंअनुजन्मात्रिजन्मनक्षत्रेमध्यमे ॥ स्त्रियास्तुजन्मर्क्षेश्रेष्ठमन्ये
मध्यमे ॥ पक्षद्वयेपिनवमींचतुर्दशींचकृष्णपक्षेचतुर्थींचवर्जयित्वाशुक्लचतुर्थींषष्ठ्यष्टमीद्वादशीचमध्यमाः॥ अन्येशुभाः॥एवं
लग्नादिकंविचार्यविवाहंकुर्यात् ॥ राशीनाहनारदः ॥ शुभेक्षितायुताःशस्ताउद्वाहेखिलराशयइति ॥ अथराशिकूटादिनिर्ण
यःकथ्यते ॥ नारदीये ॥ पुण्येन्हिलक्षणोपेतेसुखासीनंसुचेतसं ॥ प्रणम्यदैवविंत्पृच्छेदैवज्ञंभक्तिपूर्वकं ॥ तांबूलफलपुष्पा
द्यैःपूर्णांजलिरुपागतः ॥ कर्तानिवेद्यदंपत्योर्जन्मराशिंसजन्मभं ॥ इति ॥ अष्टधाराशिकूटंचस्त्रीदूरगणराशयः ॥ राशीशयो
निवर्णाख्यानाडीरज्जुरितिक्रमात् ॥ प्रयोगदर्पणेतु ॥ अष्टादशकूटानीत्युक्तं ॥ तेषांनामानि ॥ माहेंद्रंगणकूटंचदिनकूटंच
योनिजं॥ स्त्रीदीर्घंरज्जुकूटंचवश्यंवर्णाख्यकूटकं॥ राशिराश्यधिपाख्येचवेधानाड्याख्यकूटके॥ भूतलिंगाख्यकूटेचजात्या
ख्यंपक्षिकूटकं ॥ योगिनीगोत्रकूटेचकूटान्यष्टादशैवहीति॥ दंपत्योर्वृद्धिकारीणियत्नाच्चिंत्यानितत्त्वतइति ॥ संग्रहेतु॥
दिनंगणेंद्रमाहेंद्रंस्त्रीदीर्घंयोनिरेवच ॥ राशिराश्याधिपोरज्जुर्वेधावश्यास्तथादश ॥ वर्णोनाडीभूतलिंगजातिगोत्राणिपक्षि
णः ॥ योगिनीऋक्षदेवाख्यास्तथाष्टादशवर्गकाइति ॥ एतान्यवश्यकानिकानिचित्कूटानिलिख्यंते ॥ कन्यादिवरऋ
क्षांतंपर्यायान्नवसंख्यया ॥ समताराशुभाप्रोक्तादिनकूटंप्रशस्यते ॥ १ ॥ जन्मसंपद्विपत्क्षेमप्रत्यरःसाधकोवधः ॥ मैत्रं
परममैत्रंचजन्मादीनिपुनःपुनः ॥ २ ॥ इतिनक्षत्रनामानि ॥ अथफलं ॥ स्नेहोर्थसिद्धिर्विपदिष्टसिद्धिःस्नेहच्युतिर्मंगल

मृत्युदोच ॥ मित्रातिमित्रत्वमितिक्रमेणदिनाव्हयःस्त्रीपरिवर्तनेन॥इति॥३॥स्त्रीभाज्जन्मविपत्तिश्चप्रत्यरोवधएवच ॥ पर्या
येप्रथमेवर्ज्यामध्येत्वाद्यश्चतुस्त्रयः ॥ पादास्त्याज्यास्तृतीयेतुदोषोनास्तिशुभावहः ॥ इति ॥ ४ ॥ आद्यंशंविपदर्क्षेतुप्रत्य
रेचचतुर्थकं ॥ वेधाख्येचतृतीयांशंविनाशेषास्तुशोभनाः ॥ ५ ॥ अस्यापवादः ॥ गर्गः ॥ स्त्रीदीर्घगणयोःसत्वेचंद्रतारा
बलेसति ॥ असत्त्वाद्दिनकूटस्यदोषंनजनयेद्ध्रुवं ॥ ६ ॥ इतिदिनकूटं ॥ अथगणकूटं ॥ अश्वीमृगशिरोहस्ताःस्वातीपु
ष्यःपुनर्वसुः ॥ मैत्रश्रवणरेवत्यएतेदेवगणाःस्मृताः ॥ १ ॥ भरणीरोहिणीचार्द्रापूर्वात्रितयमेवच ॥ उत्तरात्रयसंयुक्ताइ
त्येतेमानुषागणाः ॥ २ ॥ ज्येष्ठामूलमघाश्लेषाविशाखात्वाष्ट्रवारुणाः ॥ कृत्तिकाचधनिष्ठाचराक्षसाःपरिकीर्तिताः ॥ ३ ॥
स्वगणंचोत्तमंविद्यान्मध्यमौदेवमानुषौ ॥ कलहंराक्षसेदेवेमरणंनरराक्षसौ ॥ ४ ॥ राक्षसीयदिवानारीनरोभवतिमानुषः॥
दोषस्तत्रनसंदेहोविपरीतेशुभावहः ॥ ५ ॥ देवासुरगणेपुंसियदिस्त्रीमानुषेगणे ॥ क्रमादुत्तममध्याख्यौविपरीतौनशो
भनौ॥ ६ ॥ अस्यापवादः ॥ राशीशयोसुहृद्भावेमित्रत्वेवांशनाथयोः ॥ गणाभावेपिदंपत्योःपुत्रपौत्रादिवृद्धयः ॥ ७ ॥
माहेंद्रराशिकूटौचस्यातांवश्यसमागमे ॥ गणाभावेनजनितोदोषोनास्तिशुभावहः ॥ ८ ॥ गर्गस्तु ॥ ग्रहमैत्रीचराशि
श्चविद्यतेचेत्तयोर्यदि ॥ नगणाभावजनितंदूषणंनविरोधकं ॥ ९ ॥ इतिगणकूटं ॥ अथमाहेंद्रकूटं ॥ वधूभात्तुचतुस्स
प्तदशभंचत्रयोदश ॥ षोडशैकोनविंशश्चद्वाविंशःपंचविंशतिः ॥ १ ॥ एषमाहेंद्रयोगश्चदंपत्योःशुभदायकः ॥ इति ॥
केचित्प्रकारांतरमाहुः ॥ स्त्रीपुन्नक्षत्रमध्यस्थनक्षत्रंचहरेत्त्रिभिः ॥ अवशेषद्वयंप्राहुर्माहेंद्रंयोगमुत्तमं ॥इति॥ अस्याभावे

पिकर्तव्यंरज्जौचग्रहमित्रके ॥ इतिमाहेंद्रकूटं ॥ अथस्त्रीदीर्घकूटं ॥ स्त्रीधिष्ण्यादतिदूरस्थंकुंभंस्त्रीदीर्घउच्यते ॥नवक
त्रितयेज्ञेयंनीचंमध्यममुत्तमं ॥ १ ॥ स्त्रीभात्रिभागेप्रथमेपुत्रपौत्रादिनाशनं ॥ द्वितीयेबंधनंप्रोक्तंअतःस्त्रीदीर्घमुच्यते ॥
२ ॥ अन्यत्रापि ॥ स्त्रीधिष्ण्यादादिनवकेस्त्रीदूरमतिनिंदितं ॥ द्वितीयेनवकेश्रेष्ठंतृतीयेनवकेशुभं ॥ त्रयोदशर्क्षादूर्ध्वंस्या
त्स्त्रीदीर्घमितिकथ्यते ॥ नवर्क्षादधिकंमध्यमन्यंनैवतुकारयेत् ॥४॥ स्त्रीदीर्घंयदिनोद्वाहःस्त्रीनाशोभवतिध्रुवं ॥ ग्रहमैत्री
गणेराशौसतिचेन्नतुदोषकृत् ॥ ५ ॥ इतिस्त्रीदीर्घकूटं ॥ अथयोनिकूटं ॥ अश्वोगजोह्यजस्सर्पःसर्पिणीशाबिडालकः ॥
अजोमार्जारमूषौचमूषिकीवृषमाहिषौ॥१॥व्याघ्रश्चमहिषीव्याघ्रीमृगीमृग्यौशुनःकपिः॥ गोषंडोवानरीमर्त्यस्तुरगीस्त्रीच
गौर्गजी ॥ २ ॥ प्रकारांतरेणाप्याह ॥ अश्वीशतभिषग्गश्वौभरणीरेवतीगजौ ॥ कृत्तिकापुष्यभेछागौनागौसौम्यंचरो
हिणी ॥ ३ ॥ आर्द्रामूलेतथाश्वानौअदित्यहिबिडालकौ ॥ मूषकःपितृभेचैवपूर्वधिष्ण्यस्यमूषकी ॥ ४ ॥ अहिर्बुध्न्योत्त
रागावौस्वातीहस्तौतुमाहिषौ ॥ चित्राविशाखाव्याघ्रौचमैत्रंज्येष्ठमृगौतथा ॥५॥ पूर्वाषाढंचहारिभंमर्कटौतौप्रकीर्तितौ ॥
अभिजिद्वैश्वदेवौचबभ्रुद्वयमुदाहृतं ॥६॥धनिष्ठापूर्वभाद्रौचसिंहौचान्यैर्नरौस्मृतौ ॥उत्तमंचैकयोनिलंभिन्नयोनिस्तुमध्यमं
॥७॥ अथवैरवर्गः ॥ गोव्याघ्रंगजसिंहमश्वमहिषंश्वैणंचबभ्रूरगंवैरंवानरमेषकंचसुमहत्तद्वद्बिडालोंदुरुः॥लोकानांव्यवहा
र्यतोन्यदपिवज्ज्ञालाप्रयत्नाद्दिदंपत्योर्नृपभृत्ययोरपिसदावर्ज्यंशुभस्यार्थिभिः ॥८॥ अन्यत्र॥श्वागौर्नामहिषोद्विपाजकप
योर्व्याघ्रद्विपोरिःशुनोबस्तोगौःप्लवगोमृगोप्यथमिथोवैर्याखुभून्मूषिकं ॥ एणेभंमहिषोश्वमोतुभुजगंहस्त्यश्वमाखूरगंयो

न्योरत्रसुहृत्वमैक्यमपिचश्लाघ्यंविरोधोशुभः ॥९॥ अस्यार्थः ॥ शुनकादिसप्तप्राणिनःव्याघ्रस्यवैरिणः॥शुनोवैरिणस्तु॥ ब
स्तछागः ॥ बस्तादिचत्वारः ॥अन्येअन्योन्यवैरिणः॥योन्योर्मैत्रत्वमैक्यंचशुभं ॥विरोधस्त्वशुभः॥त्याज्यइत्यर्थः॥अत्रगोषं
डबभ्रुइतिपर्यायंनाम॥ (धनिष्ठपूर्वभाद्रेगळु सिंहयोनिगळु केलवरु मनुष्ययोनिगळेंदु हेळुवरु) ॥ एणेभमित्यत्रएणशब्दः
सिंव्हवाचकः॥पूर्वंपूंसःस्त्रियःपश्चाद्योनिरित्यभिधीयते ॥ पूंसांपुंभिश्चसंयोगेसदाशत्रुत्वमाप्नुयात् ॥१०॥पूंसांस्त्रीभिश्चसं
योगेविवाहोमध्यमोमतः॥ स्त्रीणांस्त्रीभिश्चसंयोगेविवाहंकारयेद्बुधः॥११॥यदिनारीनरस्यात्तुनरोनारीवसस्मृतः॥अस्याप
वादः॥ योनेरभावेनोद्वाहःकार्यस्सतुवियोगदः॥राशिवंशंचयद्यस्तिकारयेन्नतुदोषभाक्॥१२॥इतियोनिकूटं॥अथराशिः॥ए
कराशौसदाप्रीतिरैश्वर्यंसमसप्तके॥द्विर्द्वादशेभवेन्मृत्युरायुर्द्वादशकेद्विके॥१॥त्र्येकादशमहादुःखंसुखमेकादशत्रिके॥चतुर्थ
दशकेवैरंप्रीतिर्दशचतुर्थके॥२॥वैधव्यंपंचनवकेशुभदेनवपंचभे॥षष्ठाष्टकेचकलहंस्नेहमष्टमषष्ठभे॥अत्रविशेषस्तु॥३॥द्विर्द्वा
दशेशुभाःप्रोक्तामीनाद्यायुग्मराशयः॥ मेषादियुग्मराशिश्चेन्निधनत्वंभविष्यति ॥४॥ द्विर्द्वादशेवानवपंचमेवाषष्ठाष्टकेराक्ष
सिवाथयोषित्॥एकाधिपत्येभवनेशमैत्र्येविरिंचिपाणिग्रहणंविधेयं॥५॥रज्जुत्रिकोणस्त्रीदीर्घद्विर्द्वादशषडष्टसु॥ राशीशैक्ये
थवामैत्र्येदंपत्योस्तत्सुखावहं॥६॥ षष्ठाष्टकेपिकुर्वीततृतीयैकादशेपिवा ॥ विवाहंपंचनवमेग्रहाणामीशमित्रतं॥७॥ स्त्रीपूंस
योर्मीनवदानवाख्यनक्षत्रयोःशोभनदोविवाहः ॥ विनापिराशीश्वरमित्रभावंप्रशस्तएवोत्तमराशिकूटे ॥८॥ पंचमनवमौशु
भदौमेषहरीककिर्यांश्चिकौप्रोक्तौ॥ समसप्तकेप्यशुभदौघटसिंव्हौपाणिपीडनेकथितौ॥९॥पंचमनवमौशुभदौनवदशतारः

क्रमाद्वधूभगणात् ॥ भवभवनेवैरंहिरिफर्क्षंमृत्युकरमेव॥१०॥कन्याजन्मांशमारभ्यषट्त्रिंशत्पादतः परं॥ग्राह्यंस्यात्पंचनव
मंविवाहेगार्ग्यसंमतं॥११॥त्रिकोणंतुशुभंप्रोक्तंमेषासिंह्धनुःक्रमात् ॥ वृषकन्येनृयुक्तौलीघटयुग्मेशुभस्थिते॥कर्किवृश्चि
कमीनेषुत्रिकोणंतुशुभावहं॥१२॥षष्ठाष्टकविषये ॥ मेषेणकन्याधनुषाककुद्मीतौल्यातिमिः कुंभभृताकुलीरः॥ सिंह्नेनन
क्रोनृयुगेणकौर्पिः षष्ठाष्टकश्चाप्यशुभाययोगः॥ १३ ॥ वृषेतुलायांधनुकर्कटौचकन्याघटौवृश्चिकमेषयोश्च ॥ मीनेचसिंह्े
मकरौनृयुग्मेषष्ठाष्टकेप्रीतिकरोविवाहः ॥१४॥ वश्येचैकाधिपत्येवाशुभंषष्ठाष्टकेपिच ॥ मित्रभावाधिपानांतुत्रिकोणेप्ये
वमीरितं ॥१५॥ कर्कीनक्रौनृयुक्पापेतुलामेषावशोभनौ ॥कटसिंह्ौविनाकार्यातथैवसमसप्तके॥१६॥ अनेनशत्रुषष्ठाष्ट
कंत्याज्यंमित्रषष्ठाष्टकंग्राह्यमित्युक्तं ॥ अतएवोक्तं ॥ शुभषष्ठाष्टकंमेषकन्ययोर्घटमीनयोः ॥ चापोक्ष्णोश्चनृयुक्कीटभयोः
कुंभकुलीरयोः ॥ पंचास्यमृगयोस्त्रीणांप्रयत्नात्परिवर्जयेत् ॥१८॥ घटस्तुला ॥ मित्रषष्ठाष्टकंकीटमेषयोर्वृषजूकयोः ॥
कर्किचापभयोर्मीनसिंह्योर्मृगयुग्मयोः ॥ कन्यकाकुंभयोरेवप्रीतिदंपाणिपीडनं ॥१९॥ अस्यापवादः ॥ राशियोगर
हितस्तुविवाहोनिंदितोभवतियद्ययमेव ॥ रज्जुवेधसहितग्रहमित्रयोगतस्सकलदोषविहीनः ॥ इतिराशिकूटं ॥ २० ॥
अथराश्याधिपकूटं ॥ मेषवृश्चिकयोर्भौमस्तुलावृषभयोस्सितः ॥ कन्यामिथुनयोस्सौम्यस्सोमः कर्कटकाधिपः ॥१ ॥
सिंह्स्याधिपतिर्भानुर्गुरुस्तुझषचापयोः ॥ मृगास्यकुंभयोर्मंदएतेराश्याधिपाःस्मृताः॥२॥अथमित्रत्वं ॥ रवेस्समोज्ञस्सु
हृदःकुजेंदुजीवास्त्वरिर्भार्गवसूर्यपुत्रौ ॥ चंद्रस्यमित्रेबुधभास्करौचशेषास्समाःकश्चननारिरस्य॥३॥ कुजस्यमित्राणिरवी

दुजीवास्समौसितार्कौचत्सुहृद्बुधश्च ॥ बुधस्यमंदेज्यकुजास्समाःस्युर्मित्रेसितार्कौवसुहृद्विधुश्च ॥४॥ गुरोश्चमित्राणिर
वींदुभौमाभास्वरीसिताज्ञौचसमस्तुमंदः ॥ शुक्रस्यमित्रेबुधसूर्यपुत्रावरीरवींदूचसमौकुजार्यौ ॥५॥ मंदस्यमित्रेज्ञसिताव
मित्रारवींदुभौमाश्चसमस्तुजीवः ॥ एवंग्रहाणांचत्रिकोणभावाच्छत्रुत्वमित्रत्वसमत्वमुक्तं ॥६॥ उत्तमंमित्रवर्गःस्यात्सममि
त्रंतुमध्यमं ॥ कनिष्ठंसमवर्गःस्याद्वैरवर्गंतुमित्रकं ॥ कलहंशत्रुमित्रेचवियोगंसमशत्रुता॥राशिनाथेविरुद्धेपिमित्रेचांशाधिपे
सति॥८॥अंशमित्रेणकर्तव्यंशुभदंपाणिपीडनं ॥ अंशाधिपौयदामित्रेयदाराश्याधिपौतुवा ॥ विवाहंयोजयेद्धीमान्दंपत्योः
सौख्यवर्धनं॥९॥अस्यापवादः ॥ विवाहमाहुर्ग्रहमैत्रशून्यंवियोगदंयद्ययमेवभूयः॥ स्त्रीदीर्घनाडीसगणस्सरज्जुःसराशि
कश्चेच्छुभदंवदंति॥१०॥स्त्रीराक्षसंनश्यतिराशियोगेराशीशयोगोह्यथराशिदोषं ॥ वश्येनवादंपतिजन्मतारानवांशनाथै
क्यसुहृत्तयाच॥ ११॥ प्रयोगपारिजातेबृहस्पतिः॥ दंपत्योर्जन्मलग्नाभ्यांयोग्रहावधिपौस्मृतौ ॥ तयोःपरस्परंमैत्र्येविवाहः
शुभदोमतः॥१२॥इतिराश्याधिपकूटं ॥ अथरज्जुकूटं ॥ लिंगाकारस्त्रिरेखाःस्युस्तिर्यग्रेखाचतुष्टयं ॥ वायव्यचरणात्पूर्वम
श्विन्यादिलिखेत्ततः ॥ १ ॥ पादोर्विदेशगमनंजान्वोःकामविवर्जितौ ॥ नाभौचेदल्पपुत्रत्वंकंठेवैधव्यमेवच ॥२॥ शिरोरज्जु
श्चमरणमित्येतद्रज्जुलक्षणं॥ एकरेखांतरेद्व्यर्क्षेरज्जुदोषंविनिर्दिशेत्॥३॥आश्विसार्पमघाज्येष्ठामूलांत्याःपादरज्जवः॥ या
म्यैतिष्यार्यमामैत्राप्यहिर्बुध्न्यास्तुजानुगाः ॥४॥ अग्निमात्रभगेंद्राग्नीविश्वाभाद्राश्वनाभिगाः ॥ ब्रह्मरुद्रकरस्वातीश्रोणाः
पाशीचकंठगाः ॥५॥ वसुचित्रेंदवःशीर्षेएकरज्जौविवर्जयेत् ॥ एकरज्जुस्सदारज्जुर्भिन्नरज्जुंचयोजयेत् ॥६॥ आरोहरज्जु

श्चिरकालभोगीवरोहरज्जुश्चवधूविनाशः ॥ आरोहरज्जुर्ह्यवरोहरज्जुःपाणिग्रहेमंगलमातनोति ॥६॥ वरोहरज्जुश्चेत्य
त्रअवेत्युपसर्गस्याकारलोपः ॥ तथाचामरकोशे ॥ अपिधानतिरोधानपिधानाच्छादनानिचेत्यत्रपिधानशब्दप्रयोगव
त् ॥ अवरोहरज्जुरित्यर्थः ॥ वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोरित्युक्तत्वात् ॥ अस्यापवादः ॥ रज्जोरभावेनोद्वा
होविवाहेविधवाभवेत् ॥ ग्रहमैत्रंराशिनाड्यौयदिसंतिनदोषदः ॥ शिरःकंठौयदिस्यातामपवादोनविद्यते ॥ १ ॥ इतिर
ज्जुकूटं ॥ अथवेधाकूटं ॥ पूर्वोक्तरज्जुवदेवरेखाविलिख्यवायव्याद्यश्विन्यादिनक्षत्राणिविलिख्यगणनायांक्रियमाणायां
तत्रस्वस्वचतुर्थरेखागतनक्षत्रेणान्योन्यंविध्यति ॥ तद्वयंदंपत्योर्यदितद्विवाहेपरिहार्यं ॥ तदेवोच्यते ॥ अश्वींद्रौयममि
त्रभेहरिहरौशूर्पानलौवाय्वजौमूलाहीपितृपूषणौगुरुजलेदेवप्रसूविश्वभे ॥ बुध्न्यर्क्षौयमणौदिनेशवरुणौभाद्रर्क्षभाग्येमिथो
वेधान्नार्हतिऋक्षयोगयुगलंवर्स्वींदुचित्रात्रयं ॥ तदेवाह ॥ त्यजसुरपतिनाश्वंयाम्यमैत्रंचविद्धंअनलइतिविशाखारोहि
णीस्वातियुक्ता ॥ हिमकरवसुचित्रारौद्रविद्धश्चविष्णुस्त्वदितिरितिसविश्वेआप्यपुष्यंचविद्धं ॥ भुजगनिर्ऋतिविद्धंपैतृकं
पौष्णविद्धंतदपरमथभाद्राचोत्तरापूर्वभाद्रा ॥ करइतिशततारायोगएवंविवाहेभवतियदिविनाशः कन्यकायावरस्य ॥३॥
जन्मर्क्षवेधेकथितेत्रजातेयुक्तेपिवश्यादिगुणैर्बलिष्ठैः ॥ पतिंचकन्यांचसमूलघातंनिहंतिषष्ठाष्टमराशियोगः॥४॥अस्यापवा
दः ॥ असतिजननतारावेधदोषोयदिस्याद्भवनपतिसुहृत्त्वंवश्यतैकाधिपत्यं ॥ नभवतिखलुदोषस्तर्हिषष्ठाष्टमत्वंसतिक
थितगुणेस्मिन्नाशुभोराशियोगः॥५॥इतिवेधाकूटं ॥ अथवश्यं ॥ मेषस्यवश्यौसिंहालीकर्तिजूकौवृषस्यतु ॥ युग्मस्यक

मृगकन्येतुजूकस्यकर्किस्याद्वृ

न्यकावश्यंकर्किणश्चापवृश्चिकौ ॥ १ ॥ तुलासिंहस्यवश्यास्यात्कन्यायायममत्स्यभे ॥ मृगकन्येतुजूकस्यकर्किस्याद्वृ

श्चिकस्यतु ॥ २ ॥ मीनश्चापस्यवश्यःस्यात्क्रियकुंभौमृगस्यतु ॥ मेषःकुंभस्यवश्यःस्यान्मकरोमीनवश्यकृत् ॥ ३ ॥

एवंवश्यसमायोगेस्त्रीराशेःपुरुषस्यतु ॥ वश्ययोगःशुभःप्रोक्तोदंपत्योःप्रेमकृत्परं ॥ माधवीये ॥ अलिमृगपतितौलींद्व

क्षेवधुमालिधन्विनौवणिगधिपतींवीणामीनौमृगंयुवतींदुभे ॥ पुनरनिमिषंमेषोपात्यावजंमकरंक्रमादितिपदमितान्राशी

न्वश्यानजादिषुमन्यते ॥५॥स्वामिदर्शनकालेतुवश्यारूढोदयःशुभः ॥ स्वामिराशेर्ग्रहेवापिवश्यराशिःश्रियावहः ॥ ६ ॥

इतिवश्यकूटं ॥ अथवर्णकूटं ॥ कर्कालिवृश्चिकाविप्राराजासिंहस्तुलाधनुः ॥ मेषयुग्मघटावैश्याशूद्रावृषमृगांगनाः ॥१॥

वर्णश्रेष्ठाचयानारीवर्णहीनस्तुयः पुमान् ॥ विवाहमेतयोःकुर्यात्तस्यभर्ताविनश्यति ॥ इतिवर्णकूटं॥अथनाडीकूटं॥चतुस्त्री

द्व्यंघ्रिनक्षत्रेकन्यायाःक्रमशोश्विभात्॥ वन्हिभादिंदुभान्नाडीत्रिचतुःपंचपर्वसु॥१॥चतुर्नाडीतुबाल्हीकेपंचालेपंचनाडिका॥

त्रिनाडीसर्वदेशेषुविवाहंसर्वसंमतं ॥२॥ रोहिण्यार्द्रामृगेंद्राग्नितिष्यश्रवणपौष्णभं ॥ अहिर्बुध्न्यस्तथाष्टौचएकनाडीशुभा

वहा॥३॥राश्यैक्येऋक्षभेदेतुनाडिदोषोनविद्यते ॥नक्षत्रैक्येपादभेदेकुर्वंतिमुनयःसदा॥४॥नाडीवियोगोयदिचेद्विवाहस्स

एववैधव्यमलंकरोति ॥ तथापिमाहेंद्रादिनेनयुक्तोराशीशयोनीप्रयतेनदोषः ॥ ५ ॥ नाडीगणंचवेधाचग्रहमैत्रंचवश्यकं ॥

गौतम्यांदक्षिणेदेशेप्रशस्तंपंचकूटकं ॥ ६ ॥ नाडीकूटंकन्यकाकंठसूत्रंज्ञेयंतस्माच्चिंतयेत्पूर्वमेव ॥ पश्चाद्राशिस्वामिहो

मित्रयोगोविप्रादीनांमुख्यमेतद्विवाहे ॥७॥ निधनंमध्यमनाड्योर्दंपत्योर्नैवपार्श्वयोर्नाड्योः ॥ आसन्नायांतस्यांतरिता

यांनदोषउद्वाहे ॥ ८ ॥ सामध्यनाडीपुरुषंनिहंतितत्पार्श्वनाडीखलुकन्यकांच ॥ आसन्नपर्यायसमाननाडीवर्षेणचाप्यंतरि
तेत्रिवर्षैः ॥ ९॥ राशिकूटादिकंसर्वंस्त्रीभमारभ्यचिंतयेत् ॥ पुंभाच्चतुविरुद्धःस्यान्नाडीसंशुद्धिरश्विभात् ॥१०॥ भरणीसौ
म्यतिष्याश्वअर्यमात्वष्टृमित्रभे ॥ आषाढवस्वहिर्बुध्न्यआसन्नेचविवर्जयेत् ॥११॥ आदिमध्यावसानेषुत्रीणित्रीणित्रयःक्र
मात् ॥ अभ्यंतरैकनाडीषुशुभदंपाणिपीडनं ॥१२॥ ब्रह्मक्षात्रियवैश्यानांमध्यदक्षिणवामकाः ॥ ब्राह्मणानांविशेषेणमध्य
नाडीचनिंदिता ॥ १३ ॥ ग्रहमैत्रंद्विजातीनांगणकूटंतुभूपतेः ॥ विशांचराशिकूटंस्याच्छूद्राणांयोनिरेवच ॥१४॥ सर्वथा
शास्त्रसंदेहोविवाहेषुप्रदृश्यते ॥ शकुनंतुनिरीक्ष्याथविवाहंकारयेद्बुधः ॥१५॥ इतिनाडीकूटं ॥ अथभूतकूटं ॥ अश्विन्या
द्यास्तुषट्तारापुनर्वस्वाद्ययश्चषट् ॥ हस्तादिपंचकंभानांज्येष्ठादिपंचकंतथा ॥ वस्वादिपंचकंभानांभूतकूटंधराधय ः ॥
पंचभूतानिपृथ्व्यापतेजोवायुश्चखंतथा ॥२॥ स्त्रीपुंसांजन्मनक्षत्रेएकभूतेशुभावहं ॥ धरातोयेतुसंपत्स्यात्तोयवायूतुमध्य
मं ॥ ३ ॥ अधमंवायुभूमीस्यादग्नितोयेधमाधमः ॥ शेषभूतेधमोयोगःपरस्परसमागमे ॥ ४ ॥ एतानिभूतकूटानिदंपत्यो
श्चविवाहके ॥ इतिभूतकूटं ॥ अथलिंगकूटं ॥ श्रवणाभिजिदादित्याहस्तास्तिष्योश्विनीविधिः ॥ प्रोष्ठपादद्वयंमित्रंपुंता
राश्चप्रकीर्तिताः ॥ १ ॥ वारुणंसौम्यमूलेचनपूंसकसमाह्वये ॥ अग्निसार्पचतुष्काद्रीयाम्यत्वाष्ट्रत्रिकंजलं ॥ २ ॥ विश्वे
द्रवासवंपौस्त्रीलिंगंचसमुदाहृतं ॥ स्त्रीनक्षत्रेंगनाजन्मपुंनक्षत्रेपुमान्यदि ॥ ३ ॥ ससंयोगःशुभःप्रोक्तोदेवेंद्रगुरुणायतः॥
अशुभंविपरीतेतुमध्यमंस्त्रीनपूंसकं ॥ ४ ॥ पुंनपूंसकमेवंस्यात्सर्वस्याह्निकयोगतः॥ ५ ॥ इतिलिंगकूटं ॥ अथजातिकूटं

अश्विनीरौद्रभाग्यादिपंचपंचचतारकाः ॥ ततश्चतुश्चतुस्ताराजातयःषट्प्रकीर्तिताः ॥ ब्राह्मणःक्षत्रियोवैश्यःशूद्रश्चैवानु
लोमजः ॥ प्रतिलोमाश्चकथ्यंतेपंडितैर्जातयश्चषट् ॥ २॥ उत्तमंसमजातिःस्यान्मध्यमस्त्वनुलोमजः ॥ अधमंप्रतिलोमं
स्याच्चंडालोप्यधमाधमः ॥ ३ ॥ इतिजातिकूटं ॥ अथगोत्रकूटं ॥ मरीचिगोत्रतारस्युरश्विन्यादिचतुष्टयं ॥ वसिष्ठास्सौ
म्यताराद्या आश्लेषादिकमंगिराः ॥ १ ॥ हस्तादिषुतथात्रिःस्यात्पुलस्त्योमैत्रभादिषु ॥ पुलहश्चैवविश्वादिर्भृगुर्वारुणभा
दिषु ॥ एवंगोत्रादितारास्युर्भिन्नगोत्रेशुभंभवेत् ॥ सगोत्रेत्वशुभंविद्याद्गोत्रकूटमुदाहृतं॥३ ॥ इतिगोत्रकूटं ॥ अथपक्षिकू
टं ॥ भैरुंडकःपिंगलकाकताम्रचूडाःशिखंडीतिखगाःक्रमेण ॥ बाणांगतर्केष्विषुसंख्यभानांश्चंद्वयोरेकविहंगमत्वं ॥ १॥ बा
ण ॥ ५ ॥ अंग ॥ ६॥ तर्क६॥ इषु॥५॥इषु॥५॥एकपक्ष्युभयोस्सख्यंप्रीतिःस्यात्पाणिपीडने ॥ भिन्नपक्ष्युभयोर्हानिःकलह
श्चापिजायते॥इतिपक्षिकूटं॥अथयोगिनीकूटं ॥ योगिनीनांतुसप्तानामनीकस्तुल्यसप्तकः॥ एकयोगिनिनक्षत्रेशुभंताराय
दिद्वयोः ॥ भिन्नयोगिनितारासुनशुभोयंविशेषतः॥२॥ इतियोगिनीकूटं ॥ अथआयकूटं॥ ध्वजस्यतारास्संप्रोक्ताअश्विन्या
दिचतुष्टयं ॥ सौम्याद्यग्नेस्तुचत्वारिसर्पादिश्चहरेस्तथा ॥ १ ॥ हस्ताद्याश्चशुनश्चस्युर्वृषस्यैंद्राग्निपूर्वकाः ॥ मूलाद्याःखरता
राःस्युर्वैष्णवाद्यागजस्यतु ॥ पूर्वाप्रोष्ठपदाद्यास्युर्वायसस्यत्रितारकाः ॥ मित्रायेतुशुभंविंद्यात्पर्यायस्तुविनाशदः ॥ ३ ॥
समायेसमएवस्याद्दंपत्योर्जन्मतारयोः ॥ इत्यायकूटं ॥ अत्राष्टादशकूटानांमध्येयोगिनीकूटस्थानेआयकूटमेवेतिकेचित् ॥
इत्यष्टादशकूटानि ॥ अथकूटानांगुणवृद्धिमाह ॥ वर्णोवश्यंतरायोनिग्रहगणभनाडीभिः ॥ गणवद्धिर्विज्ञेयाशस्तंस्याद्विंशते

रूर्ध्वं॥ १॥गुणैकवर्णंत्रिगुणंचवश्यंत्रिभिश्चताराचतुरश्चयोनिं॥पंचग्रहाःषड्गुणकोगणश्चभकूटसप्तैवतथैवनाडीइति ॥२॥
अत्रकानिचित्कूटानिविवाहआवश्यकानीत्याह ॥ संग्रहकारः ॥ राशिकूटतदधीशसुहृत्वंस्त्रीविदूरगणयोनिविनाड्यः ॥
दैवयोगवरगोत्रसमेताः पाणिपीडनविधौविचिंत्यतां॥ १ ॥अथकूटफलानि ॥ दिनेनुकूलेश्रियमातनोतिगणेनुकूलेतुमनो
नुरागं ॥ माहेंद्रयोगेपरमांविभूतिंस्त्रीदीर्घयोगेप्रियसौख्यताच ॥ ३॥ रज्जौचमांगल्यमुपैतिदीर्घंवेधानुकूलेवहुपुत्रताच ॥
नाड्याश्चयोगेशुभदंपरस्परंसराशिकंचेच्छुभदंवदंति ॥ ४ ॥ दंपत्योर्जन्मताराभ्यांनामर्क्षाभ्यामथापिवा ॥ स्त्रीजन्मपूर्व
ताराभ्यांसंयोगाद्वाशुभाशुभं ॥ ५ ॥ यस्यजन्मनिविज्ञातंतस्यनामविधीयते ॥ जन्मजन्मनिकर्तव्यंनामनामनिकारयेत्॥
जन्मनामनकर्तव्यंस्त्रीपुंसोर्जन्मराशिषु ॥ ६॥ जन्मर्क्षस्यार्धफलंनामर्क्षंब्राह्मणस्यानिर्दिष्टं ॥ नृपवैश्ययोस्समानंशूद्राणां
नामतः फलंततोप्यधिकं ॥७॥अज्ञातजन्मभानांसर्वेषांनामभाक्फलंभवति ॥ सेवापरिणयनादौग्राह्यंतद्वतिविशेषतःफ
लदं ॥ ८ ॥ आयुधवाहनकिंकरभूम्यादीनांपरिग्रहेभर्तुः ॥ तत्तन्नामर्क्षाभ्यांयोगास्सर्वेविवाहवद्वाच्याः ॥ ९ ॥ ग्रामक्ष
त्रियसेवायांबुधेचव्यवसायिनि ॥ चत्वारिनामऋक्षाद्वशेषंजन्मनिकारयेत् ॥ इति ॥ अथगोत्रप्रवरनिर्णयःकथ्यते ॥ अ
समाहर्षगोत्रजामिति ॥ ऋषेरिदमार्षःप्रवरः ॥ (गोत्रप्रवर्तकस्यमुनेर्व्यावर्तकोमुनिगणइत्यर्थः ) ॥ तथाहि ॥ अंगिरोबृ
हस्पतीभारद्वाजस्यगोत्रप्रवर्तकस्यव्यावर्तकौ ॥ प्रयोगोपि ॥ आंगिरसबार्हस्पत्यभारद्वाजेति ॥ भवमन्यत्राप्युदाहार्यं ॥
गोत्रंतुवंशपरंपराप्रसिद्धं ॥ यस्यावध्वाःवरेणप्रवरैक्यंवानास्तिसातेनविवाह्या ॥ अत्रविशेषमाहप्रवरसूत्रकारः ॥ एक

एवमृषिर्यावत्प्रवरेष्वनुवर्तते ॥ तावत्समानगोत्रत्वंभृगुमंगिरसंविना ॥ तथाचबोधायनः ॥ पंचानांत्रिषुसामान्यादवि
वाहास्त्रिषुद्वयोः ॥ भृग्वंगिरेगणेष्वेवंशेषेष्वेकोपिवारयेत् ॥ वसिष्ठौतौचविज्ञेयौब्रह्मपुत्राथशापथः ॥ मैत्रावरुणिरित्येव
वासिष्ठोविग्रहांतरात् ॥ ब्रह्मात्मजाशाक्तिपराशरव्यासशुकादयः ॥ ज्ञेयोपिवैकस्त्वनयोर्द्वितीयात्कुंडिनादयः ॥ अत
एवभिन्नगोत्रत्वाद्भिन्नशरीरावयवत्वाच्चवसिष्ठवासिष्ठयोर्विवाहोभवति ॥ अत्रगोत्रप्रवर्तकाश्चप्राधान्येनाष्टौमुनयः ॥ तेच
अगस्त्याष्टमास्सप्तऋषयः ॥ तथाचबोधायनः ॥ विश्वामित्रोजमदग्निर्भरद्वाजोथगौतमः ॥ कश्यपोत्रिर्वसिष्ठश्चएतेस
प्तर्षयःस्मृताः ॥ सप्तानामृषीणामगस्त्याष्टमानांयदपत्यंतद्गोत्रमित्याचक्षतइति ॥ प्रवरसंग्रहकारकास्त्वष्टादशगणाना
हुः॥ जामदग्न्योवीतहव्योवैन्योगृत्समदाव्हयः ॥ वाध्रियश्चगौतमश्चभरद्वाजःकपिस्तथा ॥ हरितोमौद्गलःकण्वोविरूपो
विष्णुवृद्धकः ॥ अत्रिविश्वामित्रकौचवसिष्ठःकश्यपाव्हयः ॥ अगस्त्यश्चेतिमुनयोह्यष्टादशगणाःस्मृताः ॥ तत्रादौजाम
दग्न्योविविच्यते ॥ जामदग्न्यश्चवत्सश्चश्रीवत्सश्चवनाव्हयः ॥ आप्नवानौर्वसावर्णिर्जीवंतोदेवरातकः ॥ वीतशायनजा
बालीवैरोहित्योवटाव्हयः ॥ मंडुःप्राचीनयोग्यःस्यादार्ष्णिषेणस्तनूपगः ॥ एतानिभार्गवाख्यानिदशसप्तोत्तराणिच ॥
जामदग्निगणेत्वस्मिन्नविवाहपरस्परं ॥१॥ वीतहव्यः ॥ वीतहव्योयस्कमौनमौकवाधूलसंज्ञकाः॥ सावेतसःषडेतानिभार्ग
वाख्यान्वयोगणः ॥ वीतहव्यस्यचान्योन्यंन कार्यंपाणिपीडनं ॥२॥ वैन्यः ॥ वैन्यःपार्थश्चगोत्रेद्वेभवतोभार्गवाव्हये॥ एषवै
न्यगणस्तत्रचान्योन्यंनरकग्रहः ॥३॥ गृत्समदः ॥ उभेगोत्रेगृत्समदःशौनकोभार्गवाव्हयः॥गणेगृत्समदेतस्मिन्नान्योन्यं

पाणिपीडनं॥४॥वाध्र्यश्वः ॥ द्वेवाध्र्यश्वोमित्रयुग्येगोत्रेभार्गवनामके॥वाध्र्यश्वस्यगणस्तस्मिन्ननुद्वाहोपरस्परं॥५॥जामद
ग्न्यादयःपंचगणाभृगुगणाःस्मृताः॥तथाप्येषांगणानांतुविवाहःस्यात्परस्परं॥गौतमः॥ गौतमोयास्यदौचथ्यःकक्षीवानौ
शिजस्तथा॥बृहदुक्थ्योवामदेवोगोत्राणीमानिसप्तच ॥गौतमस्यगणस्तस्मिन्विवाहोनपरस्परं॥६॥ भरद्वाजः॥ भरद्वाजः
कुशः काग्निवैश्यऊर्जौयमः कतः ॥ शैशिरेक्षीरशृंगाश्ववंदनश्चबृहस्पतिः ॥ सर्वस्तंबः कपिर्मातर्वचसोगार्ग्यसैन्यकौ ॥
भरद्वाजगणस्सप्तदशगोत्रमितिस्मृतं ॥ तस्मिन्परस्परंकार्यंनकन्यापाणिपीडनं ॥ ७ ॥ कपिः ॥ कपिश्चमहदक्षीयऋ
क्षीयस्त्रीणिकेवलं ॥ अयंकपिगणोन्योन्यंतस्मिन्नहिकरग्रहः॥ ८ ॥ हरितः ॥ हरितोयौवनाश्वश्चमांधाताकुत्सनामकः॥
पिंगलःशंखदर्भौचभौमश्चगवनामकः ॥ अंबरीषोदशैतानिहरितस्यगणः स्मृतः ॥ तस्मिन्परस्परंपाणिग्रहणंनहिशो
भनं ॥ ९ ॥ मौद्गल्यः॥मौद्गल्यतार्क्ष्यभार्म्याश्चत्रीणिगोत्राण्यमूनिहि ॥ मौद्गल्यस्यगणस्तत्रनमिथः पाणिपीडनं ॥१०॥
कण्वः ॥कण्वोजमीढइत्येतेगोत्रेकण्वगणःस्मृतः ॥ तस्मिन्परस्परंपाणिग्रहणंनशुभंमतं ॥ ११ ॥ विरूपः ॥ विरूपाष्टा
दंष्ट्रिनामापृषदश्वश्चमौद्गलः॥ चत्वारीमानिगोत्राणिविरूपस्यगणःस्मृतः॥ परस्परंविवाहोस्मिन्नविधेयइतीरितः ॥१२॥
विष्णुवृद्धः ॥ विष्णुवृद्धःपौरुकुत्स्यस्त्रसदस्युः कतस्तथा ॥ भद्रणोभद्रणारव्यश्चबादरायणसंज्ञकः ॥ सात्यकाम्यौच
मन्यौचगविः सात्यकितालुकी ॥ निचुंदश्चेतिगोत्राणित्रयोदशमितानिच ॥ विष्णुवृद्धगणस्तस्मिन्नविवाहः परस्परं॥१३॥
गौतमादिगणाह्यष्टौयेतथांगिरसोगणाः ॥ तथाप्येषांगणानांतुविवाहः स्यात्परस्परं ॥ अत्रिः ॥ तदेतद्गोत्रनवकमित्रश्चा

प्यचेनानसः ॥ श्वावाश्वोवामरंधश्चगविष्ठिरधनंजयौ ॥ सुमंगलोतिथिबीजवापश्चात्रिगणोह्ययं ॥ अत्रेयाख्येविवाहो
स्मिन्नविधेयोमिथःशुभं ॥१४॥ विश्वामित्रः ॥ विश्वामित्रोदेवरातोमनुस्तंतश्चदौलाकिः ॥ वालकिश्चाकितोलूकौयाज्ञव
ल्क्यश्चनारदः॥ बृहदग्निः कालववौशबलीबहुलोहितौ॥शालंकायनसावर्णीकामकायनपूरणौ ॥ शालावतोग्निदेवश्चदम
नः कौशिकोष्टकः ॥ आद्योमधुश्छंदसश्चदेवश्रवधनंजयौ ॥ शुंगः कतः शैशिरश्चवारिधापोघमर्षणः ॥ सूनुः पनश्चधूम्रा
ख्योजठरस्त्वेकहव्यकः॥ अष्टत्रिंशच्चगोत्राणिविश्वामित्रगणः स्मृतः॥ एतस्मिन्नपिचान्योन्यंनकुर्यात्पाणिपीडनं ॥१५॥
वसिष्ठः ॥ वसिष्ठइंद्रप्रमदआभरद्वसुसंकृतिः ॥ कौंडिन्यः पूतिमाषश्चगौरवीतः पराशरः ॥ मैत्रावरुणिशक्तीचउपमन्युर्ग
णस्स्मृतः ॥ एकादशवसिष्ठस्यगोत्राण्यस्मिन्नदोग्रेहः ॥१६॥ कश्यपः ॥ कश्यपोरेभरैभौचशांडिल्योदेवलोसितः ॥ सं
कृतिः पूतिमाषश्चवत्सरोनैध्रुवोदश ॥ गोत्राणिकश्यपगणस्तत्रान्योन्यंनदोग्रेहः ॥१७॥ त्रीण्यगस्त्योवीतवाहोदार्ढ्य
च्युतइतिस्मृतः ॥ एषोगस्त्यगणस्तस्मिन्नविवाहः परस्परं ॥१८॥ जमदग्निगणस्यापिविश्वामित्रगणस्यच ॥ नदेवरा
तगोत्रेणविवाहःस्यात्परस्परं ॥ भरद्वाजगणस्यापिविश्वामित्रगणस्यच॥ कतशैशिरशुंगैश्चनान्योन्यंपाणिपीडनं ॥ का
श्यपेयगणस्यापिवासिष्ठस्यगणस्यच ॥ संकृतीपूतिमाषाभ्यांविवाहोनपरस्परं ॥ आत्रेयस्यगणस्यापिविश्वामित्रगण
स्यच ॥ धनंजयाख्यगोत्रेणनान्योन्यंपाणिपीडनं ॥ भरद्वाजगणस्यापितथाकपिगणस्यच॥ विवाहोनविधेयःस्यादन्यो
न्यंचकदाचन ॥ मौद्गल्यस्यगणस्यापिविरूपस्यगणस्यच ॥ परस्परंनकुर्वीतपाणिपीडनसत्क्रियां॥इति॥अनष्टयः शा

कुलेयः स्वतयोराजचारकः ॥ सैराश्वनीरजाश्चैवबाहवस्तदनंतरं ॥ तथाशामुनयः प्रोक्ताःसैरंध्राराजसेवकाः॥ स्वापुलिंगाश्वमौगाक्षीस्तथैवशरदंबकाः॥एतेत्रयोदशप्रातर्वसिष्ठानिशिकश्यपाः॥ गायत्रीयोनिसंबंधात्त्वंगीकृत्यप्रवर्तकाः ॥ अहर्वसिष्ठतांरात्रौकश्यपत्वमितिस्वयं ॥ तेषांगोत्रद्वयंमुक्त्वावासिष्ठंकाश्यपंतथा ॥ सर्वत्रापिविवाहःस्यादितिवेदविदोविदुः ॥ यत्तुस्मृत्यंतरे ॥ सावित्रींयस्ययोदद्यात्तत्कन्यांनविवाहयेत् ॥ तद्गोत्रेतत्कुलेवापिविवाहोनैवदोषकृदिति ॥ द्व्यामुष्यायणकास्सर्वेदत्तकक्रीतकादयः ॥ गोत्रद्वयेप्यनुद्वाहःशुंगशैशिरयोस्तथा ॥ विष्णुभट्टौतु ॥ एकगोत्रप्रवराणांनविवाहः ॥ भिन्नगोत्रप्रवराणामप्येकगणांतर्गतानामविवाहः॥यथा॥ शुनकगृत्समदानांभृग्वंगिरसांगणेषुभिन्नगोत्रप्रवरेष्वपिअर्धाधिकऋष्यनुवृत्तावविवाहः ॥ गर्गाणांत्र्यार्षेयप्रवरपक्षेअर्धाधिकनामधेयैर्गर्गादिऋष्यनुवृत्त्यभावेपिपंचार्षेयप्रवरपक्षेतथादर्शनाद्भारद्वाजैरविवाहः ॥ अन्येषांतुप्रवरपक्षेष्वेकऋष्यनुवृत्तावपिनविवाहः ॥ शंडिलानांचतुर्थप्रवरमात्रेकश्यपानुवृत्त्यभावेपित्रिष्वपिप्रवरांतरेषुदर्शनात्कश्यपैरविवाहः॥ लौगाक्षीणांद्व्यामुष्यायणत्वात्कश्यपैर्वसिष्ठैरविवाहः ॥ अत्रप्रवराणांस्वरूपंमहाप्रवरपाठादवगंतव्यं ॥ तत्रेमेगोत्रप्रवराएकद्वित्रिपंचार्षेयाः ॥ ऊनपंचाशदेवअनंतानामपिगोत्राणांगणशउच्यते ॥ तावतैवापेक्षितासिद्धेः ॥ वत्सानांभार्गवच्यावनाप्नुवानौर्वजामदग्न्येति ॥ बिदानांभार्गवच्यावनाप्नवानौर्वबैदेति ॥ आर्ष्टिषेणानांभार्गवच्यावनाप्नवानानूचार्ष्टिषेणाइति ॥ एतेसमानप्रवराः ॥ अर्धाधिकऋष्यतुल्यत्वात् ॥ यस्कानांभार्गववैतसहव्यसावेदसेति ॥ मित्रयुवानांभार्गववाध्र्यश्वदैवोदासेति ॥ वैन्यानांभार्गववैन्यपार्थेति॥ एतेभार्ग

वानुवृत्तावपिनमिथस्समानप्रवराः ॥ भृगुंमुक्त्वेतिवचनात् ॥ शुनकानांशुनकेतिगार्त्समदेतिवा ॥ अत्रगोत्रप्रवरभेदेपि
गणैकत्वेनपक्षेप्रवरैक्यत्वादविवाहः ॥ एतेसप्तभृगवः ॥ अथांगिरसः ॥ गौतमभारद्वाजशुद्धाश्चेतित्रिविधाः ॥ तेषुगौत
मास्तावत् ॥ आयास्यानांआंगिरसायास्यगौतमेति ॥ शारद्वतानांआंगिरसशारद्वतगौतमेति ॥ कौमंडानांआंगिरसौ
चथ्यकक्षीवतगौतमकौमंडेति ॥ दीर्घतमानांआंगिरसौचथ्यकाक्षीवतगौतमदैर्घ्यतमेति ॥ कारेणुवालानांआंगिरसगौ
तमकारेणुवालेति ॥ वामदेवानांआंगिरसगौतमवामदेवेति ॥ औशनसानांआंगिरसौशनगौतमेति ॥ एतेसप्तगौतमां
गिरसाःसमानप्रवराः ॥ अर्धाधिकऋषितुल्यत्वात् ॥ भारद्वाजानांआंगिरसबार्हस्पत्यभारद्वाजेति ॥ रौक्षायणानां
आंगिरसबार्हस्पत्यभारद्वाजभालंदनमातवचसेति ॥ गर्गाणांआंगिरसबार्हस्पत्यभारद्वाजगार्ग्यशैन्येति ॥ आंगिरसशै
न्यगार्ग्येतिवा ॥ त्रयएतेभारद्वाजांगिरसाःसमानप्रवराः ॥ अर्धाधिकऋषितुल्यत्वात् ॥ गर्गाणांत्र्यार्षेयपक्षेअर्धाधिकऋ
षितुल्यत्वाभावेपिपक्षेसमानप्रवरत्वात्भारद्वाजैरविवाहः ॥ विष्णुवृद्धानांआंगिरसपौरुकुत्स्यत्रासदस्यवेति ॥ कण्वानां
आंगिरसाजमीढकण्वेति ॥ हारीतानांआंगिरसांबरीषयौवनाश्वेति ॥ संकृतीनांआंगिरससांकृत्यगौरिवीतेति ॥ मुद्गला
नांआंगिर ‌र्म्यश्वमौद्गल्येति ॥ स्कुवीनांअहय्यवार्क्ष्येति ॥ एतेसप्तशुद्धांगिरसाभिन्नप्रवराः॥ अंगिरसानुवृत्तावप्यां
गिरसंमुक्त्वेतिवचनात् ॥ अत्रीणांआत्रेयार्चनानसःश्यावाश्वेति ॥ गविष्ठिराणांआत्रेयार्चनानसगाविष्ठिरेति ॥ वा
भूतानांआत्रेयाचनानसबाभूतकेति ॥ मुद्गलानांआत्रेयार्चनानसपौर्वातिथेति ॥ तेचत्वारः समानप्रवराः ॥ तुल्यार्षत्वात्॥

कश्यपानांकाश्यपावत्सारनैध्रुवेति ॥ रेभाणांकाश्यपावत्साररैभ्येति ॥ शांडिलानांकाश्यपावत्सारशांडिल्येति॥देवलानां
काश्यपावत्सारदेवलेति ॥ वासितानांकाश्यपावत्सारवासितेतिवा ॥ शांडिलासितदेवलेतिवा ॥ इतिचतुर्धाप्रवराः ॥ लौगा
क्षीणांकाश्यपावत्सारवासिष्ठेति ॥ एतेचत्वारः समानप्रवराः ॥ काश्यपानुवृत्तौशांडिलानांचतुर्थप्रवरेकाश्यपानुवृत्त्याभा
वेपित्रिभिः प्रवरैः समानप्रवरत्वात्काश्यपैरविवाहः॥ लौगाक्षीणांवसिष्ठपदानुवृत्त्याद्व्यामुष्यायणत्वाद्वसिष्ठैरप्यविवाहः॥
वसिष्ठानांवासिष्ठेतिकुंडिनानांवासिष्ठमैत्रावरुणकौंडिन्येति ॥ उपमन्यूनांवासिष्ठेंद्रप्रमदभरद्वाजइति॥ पराशराणांवासिष्ठ
शाक्त्यपाराशर्येति ॥ एतेवसिष्ठाश्चत्वारस्समानप्रवराः ॥ कुशिकानांवैश्वामित्रमाधुच्छंदसधनंजयेति ॥ कतानांवैश्वामि
त्रकात्यात्कीलेति ॥ इंद्रकौशिकानांवैश्वामित्रेंद्रकौशिकेति ॥ अघमर्षणानांवैश्वामित्राघमर्षणकौशिकेति ॥ पौराणानांवै
श्वामित्रपौराणेति ॥ एतेषांकुशिकानांदशानांविश्वामित्रपदानुवृत्त्यामिथस्समानप्रवरत्वं ॥ अगस्तीनांआगस्त्यदार्ढच्यु
तदार्भवाहेति ॥ सांव्हवानांआगस्त्यदार्ढच्युतसांव्हवानेति ॥ सोमवाहनानांआगस्त्यदार्ढच्युतसोमवाहेति ॥ यज्ञवाह
नानांआगस्त्यदार्ढच्युतयज्ञवाहेति ॥ अगस्तीनांसर्वेषांअगस्त्यपदानुवृत्त्यामिथस्समानप्रवरत्वं ॥ अत्रसंग्रहः ॥ एको
पिचमुनिर्येषांप्रवरेषुप्रवर्त्तते ॥ सगोत्रास्तेमिथोज्ञेयाभृगुमंगिरसंविना ॥ शुनकाःस्युर्गृत्समदैःकश्यपैःशंडिलाअपि ॥
भारद्वाजस्तथागर्गःपक्षेतुल्यर्षिदर्शनात् ॥ यद्वा ॥ च्यवनोगौतमोगस्त्योभरद्वाजोत्रिकश्यपौ ॥ विश्वामित्रोवसिष्ठश्चय
द्गणप्रवरेष्वमी ॥ वर्ततेनसगोत्राःस्युःकश्यपैःशंडिलास्तथा ॥ शुनकाःस्युर्गृत्समदैर्भरद्वाजैश्चगर्गकाइति ॥ अत्रप्रमादा

त्समानगोत्रप्रवरज्ञानोत्तरकालान्मातृवदेनांबिभृयात् ॥ गर्भश्चेदुत्पन्नःसतुनदुष्यतिकाश्यपोभवतिगोत्रतः ॥ ज्ञात्वाग
च्छन्गुरुतल्पगः ॥ ततउत्पन्नश्चांडालोभवति ॥ श्राद्धमपिसमानगोत्रप्रवरायनदेयमित्याहुः ॥ प्रवरंविद्वान्वृजिनोभ
वति ॥ अयाज्योपियाज्योभवतीति ॥ इतिप्रवरनिर्णयः ॥ ७ ॥ अथकन्यायागर्भाधानादिप्रयोगः ॥ यदिकन्यायागर्भाधाना
दिसंस्काराः स्वस्वकालेनकृताश्चेदिदानींकालातिपत्तिप्रायश्चित्तपूर्वकंसमानतंत्रेणकृत्वाविवाहंकुर्यात् ॥ अथकर्ताप्रात
रौपासनांतंनित्यकर्मकृत्वासपत्नीकः कन्ययासहमंगलस्नानंकृत्वावैश्वदेवंहुत्वाशुचौदेशेसपत्नीकः प्राङ्मुखउपविश्याच
म्यप्राणानायम्यदेशकालौसंकीर्त्यममकुमार्याअतिक्रांतानुसारेणगर्भाधानादिवाजातकर्मादिवाचौलांतकर्मकर्तुं ममशरी
रशुद्ध्यर्थंस्नानपवनमंत्राचमनमंत्रप्रोक्षणानिकरिष्यइतिसंकल्प्यतत्कृत्वाअनेनस्नानपवनमंत्राचमनमंत्रप्रोक्षणकर्मणा
श्रीपरमेश्वरःप्रीयतामित्युक्त्वाथनांदीसमाराधनांगतयाविहितंस्वस्तिपुंण्याहवाचनाख्यंकर्मकरिष्ये ॥ तदादौनिर्विघ्नता
सिध्यर्थंगणपतिपूजांकरिष्ये॥इतिसंकल्प्यगणपतिंसंपूज्यनांदीसमाराधनकर्मणः पुंण्याहंभवंतोब्रुवंतुएवंस्वस्तिऋद्धिमि
तिवाचयित्वानांदीमुखाः पितरः प्रीयंतामितिवाचयित्वाप्रोक्षणांतंकृत्वापुनराचमनप्राणायामौकृत्वादेशकालौसंकीर्त्यमम
कुमार्याअद्यकरिष्यमाणगर्भाधानपूंसवनसीमंतविष्णुबलिजातकर्मनामकरणउपनिष्क्रमणान्नप्राशनकर्णवेधनचौलांगत
याविहितंनवग्रहशांत्यंगतयाविहितंरात्रौकरिष्यमाणविवाहांगतयाविहितंनांदीसमाराधनंहिरण्येनकरिष्यइतिसंकल्प्य
तत्कृत्वाअनेननांदीसमाराधनकर्मणाश्रीपरमेश्वरःप्रीयतामित्युक्त्वाथकर्मांगपुंण्याहंकुर्यात्॥देशकालौसंकीर्त्यममकुमा

र्यांगर्भाधानपूंसवनसीमंतविष्णुबलिजातकर्मनामकरणोपनिष्क्रमणान्नप्राशनकर्णवेधनचौलकर्मकर्तुं नवग्रहशांतिहोमं
कर्तुंपुनस्संधानंकर्तुंशांत्यर्थंपुष्ट्यर्थंतुष्ट्यर्थमित्यादिस्वस्तिपुंण्याहवाचनाख्यंकर्मकरिष्यइति संकल्प्य॥वेधाप्रजापतिर्धा
तासविताम्रृत्युः सवितासवितासविताश्रोत्रकेशिनः प्रीयंतामित्युक्त्वाआदित्यादिनवग्रहाः प्रीयंतांअग्न्यादयश्चप्रीयंता
मितिपुंण्याहंवाचयित्वाथप्रधानसंकल्पंकुर्यात् ॥ आचमनप्राणायामौकृत्वादेशकालौसंकीर्त्यममकुमार्याबीजगर्भसमुद्भ
वैनोनिबर्हणपुरस्सरमायुःश्रीबलवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थं गर्भाधानपूंसवनसीमंतविष्णुबलिजातकर्मनामकरणोप
निष्क्रमणान्नप्राशनकर्णवेधनचौलकर्माणिमुख्यकालातिपत्तिप्रायश्चित्तपूर्वकंसमानतंत्रेणकरिष्यइतिसंकल्प्य ॥ स्थंडि
लोल्लेखनाद्यग्निप्रतिष्ठांतंकृत्वासंकल्प्यगर्भाधानपूंसवन ÷ चौलकर्मणांमुख्यकालातिपत्तिप्रायश्चित्तहोमंकरिष्ये ॥ प्रा
यश्चितहोमः कर्मआग्निहोत्रिकंतंत्रंचित्तिर्नामाग्निः चित्तादयोदेवताआज्यंहविः आज्यस्यमांत्रवर्णिक्योदेवताइत्यादिसं
कल्प्यान्वाधानादिकंकृत्वा ॥ आज्यस्थालींस्रुवंचैवस्रुचंचसामिधंतथा॥ कूर्चंप्रोक्षणीपात्रमित्यासाद्याज्यसंस्कारांतंकृत्वा
मिंदाहुतीहुत्वाचित्तंचेत्यादित्रयोदशाग्निर्भूतानामित्यादिरुद्राहुत्यंतं ततंमआपोयत्पाकत्रामनस्वतीमिंदाहुतीर्व्याहृतीश्च
हुत्वाउत्तरपरिषेकांतंकृत्वासमाप्याथगर्भाधानादिविष्णुबल्यंतान्मंत्रान्यथाक्रमंपठित्वाजातकर्मादिकंतूष्णींकुर्यात् ॥ प्रा
णानायम्यदेशकालौसंकीर्त्यममकुमार्याबीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुःश्रीबलवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थं ग
र्भाधानपूंसवन ÷ चौलकर्माणितंत्रेणकरिष्यइतिसंकल्प्य ॥ तूष्णींकुमारींदृष्ट्वातूष्णीमेवषड्वारंस्नापयित्वाथपितास्वांकेकु

मारींसंस्थाप्यतूष्णींनक्षत्रनाम्नामूर्ध्न्यभिजिघ्रति॥यथा॥आश्विने॥आपभरणे॥कार्तिके॥रौहिणे॥मार्गशीर्षे ॥आर्द्रके॥पुन
र्वसो॥तिष्ये॥आश्लेषे॥माघे॥फाल्गुने॥उत्तराफाल्गुने॥हस्ते॥चैत्रे॥स्वाते॥विशाखे॥अनूराधे॥ज्येष्ठे॥मूलके॥पूर्वाषाढे॥उत्त
राषाढे॥श्रावणे॥श्रविष्ठे॥शातभिषजे॥प्रोष्ठपदे॥उत्तराप्रोष्ठपदे॥रैवते॥अथास्याःकुमार्याःकर्णयोरायुष्मतीभवेतिजपित्वा॥
दधिमधुघृतमितिसमुदायुत्य हिरण्येनगृहीत्वातूष्णींदशवारंकुमारींप्राशयित्वामुखंप्रक्षाल्यातिशिष्टंगोष्ठेनिनीयकुमारीं
मातुरंकउपवेश्यस्तनंधयंतींस्मृत्वाअस्याउच्छिरस्युदकुंभंतूष्णींनिधायतूष्णीमप्सुविसर्जयेत्॥ अस्यजातकर्मकर्मणःसुमु
हूर्तमस्त्वितिभवंतोब्रुवंतुसुमुहूर्तमस्त्वितीतरेतिब्रूयुः॥इतिजातकर्मतंत्रं ॥ध॥अथनामकरणं॥कर्तादेशकालौसंकीर्त्यममकु
मार्याबीजगर्भ ∴ श्रीपरमेश्वरप्रीत्यर्थंव्यावहार्यकसिध्यर्थंनामाभिधास्यावहइति मातापितरौसंकल्प्याथस्वर्णादिपात्रे
सिततंडुलोपरिहिरण्यशकलेनवाहरिद्राखंडेनवापितानामचतुष्टयंलिखेत् ॥ यथा॥कुलदेवतानाम्नागणपतिभक्ता ॥ मास
नाममार्गशीर्षादि॥लक्ष्मीःश्रीःकमलाभद्रासीतासत्याचरुक्मिणी॥माधवीचैत्रिकाभूमिस्तुलसीजान्हवीतथाइतिद्वादशना
मानिमार्गशीर्षादिगणयित्वालिखेत्॥नक्षत्रनाम॥आश्विना॥आपभरणा॥कार्तिका॥रौहिणा॥मार्गशीर्षा ॥आर्द्रका ॥पुनर्व
सुः ॥ तिष्या ॥ आश्लेषा ॥ माघा ॥ पूर्वाफाल्गुना ॥ उत्तराफाल्गुना ॥ हस्ता ॥ चित्रा ॥ स्वातिः ॥ विशाखा ॥ अनूराधा॥
ज्येष्ठा ॥ मूलका ॥ पूर्वाषाढा ॥ उत्तराषाढा ॥ श्रावणा ॥ श्रविष्ठा ॥ शातभिषजा ॥ पूर्वाप्रोष्ठपदा ॥ उत्तराप्रोष्ठपदा ॥ रैवता
इति ॥ अथव्यवहारिकनामा॥ रेवती ॥ शारदाइति॥ इतिनामचतुष्टयंविलिख्यकुलदेवतानाममासनामनाक्षत्रनामव्या

वहारिकनामदेवताभ्योनमइतिषोडशोपचारान्कृत्वा दक्षिणांपुष्पांजलिंचदत्वा दक्षिणाफलतांबूलादिभिर्ब्राह्मणान्संतो
ष्यास्यनामकरणकर्मणःपुंण्याहंस्वस्त्यृद्धिमितिवाचायित्वाशिवंकर्मास्तु॥प्रजापतिःप्रीयतामितिभवंतोब्रुवंतुइतिवाचयित्वा
कुलदेवतानाम्नागणपतिभक्तायैस्वस्तिभवंतोब्रुवंतु ॥ गणपतिभक्तायैस्वस्तीतिप्रतिवचनं ॥ मासनाम्नालक्ष्म्यैस्वस्तिभवं
तोब्रुवंतु ॥ एवंश्रियै ॥ कमलायै ॥ भद्रायै ॥ सीतायै ॥ सत्यायै ॥ रुक्मिण्यै ॥ माधव्यै ॥ चैत्रिकायै ॥ भूम्यै ॥ तुलस्यै॥
जान्हव्यैस्वस्तिभवंतोब्रुवंतु ॥ नक्षत्रनाम्नाआश्विनायै॥आपभरणायै ॥ कार्तिकायै ॥ रौहिणायै॥ मार्गशीर्षायै ॥ आर्द्र
कायै ॥ पुनर्वसवे ॥ तिष्यायै ॥ आश्लेषायै ॥ माघायै ॥ फाल्गुनायै॥उत्तराफाल्गुनायै ॥ हस्तायै॥चैत्रायै॥स्वातयै॥विशाखा
यै ॥ अनूराधायै ॥ ज्येष्ठायै॥मूलकायै ॥ पूर्वाषाढायै ॥ उत्तराषाढायै॥ श्रावणायै ॥ श्रविष्ठायै ॥ शातभिषजायै॥पूर्वाप्रोष्ठप
दायै ॥ उत्तराप्रोष्ठपदायै ॥ रैवतायैस्वस्तिभवंतोब्रुवंतु ॥ व्यावहारिकनाम्ना ॥ रेवत्यैस्व •॥• शारदायैस्व •॥•
शारदायैस्वस्तीतरे ॥ अथब्राह्मणाननुज्ञाप्यमातापितरौकुमार्यादक्षिणकर्णेनामचतुष्टयमुपांशुत्रीस्त्रिः कथयेतां ॥ कुल
देवतानाम्नात्वंगणपतिभक्तासि ॥ मासनाम्नात्वंलक्ष्म्यासि ॥ श्रीरसि ॥ कमलासि ॥ भद्रासि ॥ रुक्मिण्यासि ॥ माध
व्यासि ॥ भूमिरासि ॥ तुलस्यासि ॥ जान्हव्यसि ॥ नक्षत्रनाम्नाआश्विनासि ॥ आपभरणासि ॥ पुनर्वसुरसि ॥ स्वा
तिरसि ॥ रैवतासि ॥ इतित्रिः ॥ व्यावहारिकनाम्ना ॥ त्वंरेवत्यसि ॥ शारदासि ॥ इतित्रिः ॥ अथब्राह्मणहस्तेअक्ष
तान्दत्वास्वयमुत्थायांजलिंकृत्वाकुलदेवतानाम्नाइयंगणपतिभक्ताभवतःसर्वान्ब्राह्मणानभिवादयते ॥ आयुष्मतीभवतु

गणपतिभक्ता ॥ मासनाम्नालक्ष्मीर्भवतःसर्वान्ब्राह्मणानभिवादयते ॥ आयुष्मतीभवतुलक्ष्मीः ॥ इतिप्रतिवचनं ॥ ए
वंश्रीरित्यादि ॥ नक्षत्रनाम्नाआश्विनाभवतः ⁑ ते ॥ एवंआपभरणाभवतः सर्वान्ब्राह्मणानित्यादि ॥ व्यावहारिकना
म्नारेवतीभवतः ॥ शारदाभवतः सर्वान्ब्राह्मणानभिवादयते ॥ आयुष्मतीभवतुशारदा ॥ इतिप्रतिवचनं ॥ नामकरण
मुहूर्तःसुमुहूर्तमस्त्वितिभवंतोब्रुवंतु ॥ सुमुहूर्तमस्त्वितिप्रतिवचनं ॥ नामकरणकर्मणाश्रीपरमेश्वरः प्रीयतां ॥ ७ ॥ अ
थोपनिष्क्रमणं ॥ मंगलघोषपुरस्सरंगृहाद्बहिर्देवतायतनानिस्वस्तिपंथामनुचरेमेतिगत्वादेवताअभ्यर्च्यचंद्रार्कदिगीशा
न्त्संपूज्यप्रार्थयेत् ॥ चंद्रार्कयोर्दिगीशानांदिशांचगगनस्यच ॥ निक्षेपार्थमहंदद्मितेमेरक्षंतुसर्वदा ॥ अप्रमत्तंप्रमत्तंवादि
वारात्रमथापिवा ॥ रक्षंतुसततंसर्वेदेवाः शक्रपुरोगमाः ॥ इतिप्रार्थ्यनमस्कृत्यस्वगृहमानयति ॥ इत्युपनिष्क्रमणतंत्रं
॥ ७ ॥ अथान्नप्राशनं ॥ दधिमधुघृतजलैरन्नंमिश्रयहिरण्येनगृहीत्वातूष्णींषड्वारंप्राशयित्वामुखंप्रक्षाल्यतूष्णीमाचम
य्यास्यान्नप्राशनकर्मणः सुमुहूर्तमस्त्वितिभवंतोब्रुवंतु ॥ सुमुहूर्तमस्त्वितिप्रतिवचनं ॥ इत्यन्नप्राशनतंत्रं ॥ ७ ॥ अथक
र्णवेधनं ॥ ब्राह्मणान्त्संपूज्यास्यकर्णवेधनकर्मणः पुंण्याहंस्वस्त्यृद्धिमितिवाचयित्वाश्रोत्रंप्रीयतामित्युक्त्वासूच्यावाकंट
केनवातूष्णींदक्षिणवामकर्णौक्रमेणविध्वापउपस्पृश्यलोहितसूत्रेणशणसूत्रेणवाबध्वा परेद्युस्तूष्णींविसृज्यापउपस्पृश्या
स्यकर्णवेधनकर्मणः सुमुहूर्तमस्त्वितिवाचयित्वाईश्वरार्पणंकुर्यात् ॥ इतिकर्णवेधनतंत्रं ॥ ॥ ७ ॥ ॥ ७ ॥
॥ ॥ अथचौलं ॥ ॥ उष्णास्वप्सु शीताआनीयस्वयंप्राङ्मुखउपविश्यकुमारींप्रत्यङ्मुखीमुपवेश्यतूष्णींतस्याःशिरोद्भि

रुनत्ति ॥ अथोर्ध्वाग्रान्दर्भांच्छिरसिनिधायवामपाणिनागृहीत्वा दक्षिणेनक्षुरंगृहीत्वातूष्णींदृष्ट्वातूष्णींछित्वापउपस्पृश्य
ब्राह्मणान्संपूज्यास्यचौलकर्मणः पुंण्याहंस्वस्त्यृद्धिमितिवाचयित्वाकेशिनः प्रीयंतामित्युक्त्वास्यचौलकर्मणः सुमुहूर्तम
स्त्वितिवाचयित्वाशिषोवाचयेत् ॥ एभिर्गर्भाधानपुंसवनसीमंतविष्णुबलिजातकर्मनामकरणोपनिष्क्रमणान्नप्राशनकर्ण
वेधनचौलकर्मणाश्रीपरमेश्वरः प्रीयतां ॥ अथवाचौलकर्मप्रत्याम्नायत्वेनकृच्छ्रंकुर्यात् ॥ तत्प्रत्याम्नायत्वेनगांवाहिरण्यं
वाब्राह्मणायदद्यात् ॥ केचित्स्त्रीणांचौलंनकुर्वंतिलौकिकाविरोधात् ॥ इतिचौलतंत्रं ॥ इतिवेंकटेशीयेस्त्रीसंस्कारप्रयो
गः ॥ ७ ॥ ॥ ७ ॥ ॥ अथयस्मिन्दिनेनांदीसमाराधनंकुर्यात्तस्यामेवरात्रावुदकशांतिप्रतिसरबंधौचकृत्वाविवा
हांगपुंण्याहंकुर्यात् ॥ यथा ॥ कर्तामम कुमार्याविवाहांगभूतंस्वस्तिपुंण्याहवाचनंकरिष्यइतिसंकल्प्य पुंण्याहंवाचयेत्
वरस्तुममविवाहांगभूतंस्वस्तिपुंण्याहवाचनंकरिष्यइतिसंकल्प्य ॥ पुंण्याहंवाचयित्वाउभयत्राग्निःप्रीयतामितिविशेषः ॥
प्रोक्षणांतंकृत्वा सामातनूराविशाशिवोमातनूराविशेत्याहतेमंगलेवाससीपरिधायाचम्यप्राणानायम्याविवाहसंकल्पंकुर्या
त् ॥ देशकालौसंकीर्त्यममगृहस्थाश्रमसिध्यर्थंस्त्रियमुद्वहेइतिसंकल्प्य ॥ प्रयोगसारे ॥ भुक्त्वादायप्रतोदकं ॥ स्थित
स्यकुर्यूरक्षार्थंमांगल्यंतस्यबांधवाः॥इत्युक्त्वाहस्तेप्रतोदकंगृहीत्वानालिकेरफलंचगृहीत्वास्त्रीभिःकृतनीराजनोबंधुभिःस
हयथाविभवमश्वंयानंवासमारुह्यवधूगृहंगत्वातत्रद्वारदेशेप्राङ्मुखः स्थित्वास्त्रीभिः कृतनीराजनस्ताभिःसहगृहंप्रविश्यत
त्रमंडपेभद्रासनेप्राङ्मुखउपविशेत् ॥ अथकन्यामलंकृत्याहतेवाससीपरिधाप्यगंधमाल्यादिभिरलंकृत्यभोजनंकारयि

त्वाहस्तेबाणंफलंचदत्वादेवताग्रेप्राङ्मुखीमुपवेशयेत् ॥ इतिवरागमनं ॥ ॥ ७ ॥ ॥ अथसभापूजा ॥ कर्तागंधा
क्षतपुष्पव्यजनगुडोदकनानाविधफलतांबूलानिचस्वपुरतस्संस्थाप्यसभापूजांकुर्यात् ॥ यथा ॥ आशीःपूर्वकमित्येकेन
मःपूर्वंतुकेचन ॥ बिन्नहंवेदपूर्वंस्यादितिसर्वैर्विनिश्चितं ॥ अथवरेस्वबंधुभिः सहविवाहार्थंकन्यागृहमागतेसतितदायज
मानस्येतिकर्तव्यतामाह ॥ आशीःपूर्वकमिति ॥ आशीर्वादपुरस्सरंविज्ञापनाकर्तव्येतिकेषांचिन्मतं ॥ नमःपूर्वंतुकेचन॥
नमस्कारपूर्वकंविज्ञापनाकर्तव्येत्यन्येषांमतं ॥ बिन्नहंवेदपूर्वंस्यात् ॥ श्रुतिमुखेनविज्ञापनाकर्तव्येतिसर्वमतं ॥ तत्रादा
वाशीः पूर्वकंकथमित्याकांक्षायामाह ॥ स्वस्तीतिप्रतिभाषितोमुनिवरैस्संस्तूयमानस्सुरैः पार्श्वेपद्मजपद्मनाभपुरुहूताद्यै
र्जयेत्यर्चितः ॥ अग्रेचाप्सरसांगणैरहरहर्नृत्यद्भिराल्हादितःसंतुष्टोगिरिजाविवाहसमयेस्यात्संपदेनोमृडः॥ अस्यार्थः ॥
गिरिजाविवाहसमयेगिरिजायाःपार्वत्याःपाणिग्रहणसमयेएतादृशोमृडःसुखकरःपरमेश्वरःसंपदेऐश्वर्यायस्यात् ॥ भूया
दित्याशीः ॥ कथंभूतइत्याकांक्षायांमुनिवरैर्मुनिश्रेष्ठैः स्वस्तीतिमंगलमितिप्रतिभाषितः प्रत्युक्तः ॥ पुनःकथंभूतः सुरैःस्तू
यमानदेवैःकृतस्तोत्रः ॥ पुनःकथंभूतः पार्श्वेपद्मजपद्मनाभपुरुहूताद्यैर्जयेत्यर्चितः ॥ पद्मजोब्रह्मापद्मनाभोनारायणःपुरुहू
तइंद्रस्तेआदिर्येषांतेपुरुहूताद्याः समस्तदेवताइत्यर्थः ॥ तैर्जयजयेत्यर्चितः ॥ पुनःकथंभूतः ॥ अग्रेचाप्सरसांगणैरहर
हर्नृत्यद्भिराल्हादितः ॥ अहरहः प्रतिदिनंअप्सरसांगणैरप्सरस्त्रीसमूहैःनृत्यद्भिर्नानाविधनर्तनंकुर्वद्भिःआल्हादितःसंतो
षितः॥पुनःकथंभूतः॥संहृष्टःअत्यंतसंतोषयुक्तः॥एवंसूक्तिस्तोत्रजयशब्दनर्तनादिभिरतिसंतोषितःपरमेश्वरःनःसंपदेभूया

दित्याशीःपूर्विकाविज्ञापना ॥ १ ॥ नमस्कारपूर्विकाविज्ञापनाकथमित्याकांक्षायामाह ॥ सर्वाशापरिपूरणक्षमकरंसर्वो
पकारोदयंसन्मार्गाभिरतंसमस्ततमसःप्रध्वंसिसत्यास्पदं ॥ ब्रह्मावासमशेषवेदनिलयंविद्याधराराधितंप्रख्यातंभुविभा
नवीयमिववोवंदेसभामंडलं ॥ अस्यार्थः ॥ एतादृशंसूर्यसंबंधिमंडलमिवास्थितंवस्सभामंडलंवंदे ॥ नमस्करोमि ॥ कीदृ
शमित्याकांक्षायामाह॥ सर्वाशापरिपूरणक्षमकरं सर्वेषांमनोरथानांपरिपूरणेपूर्तिकरणेक्षमाःसमर्थाःकराहस्तायस्यतत्॥
अन्यत्र सर्वासांदिशांपरिपूरणेपरिव्याप्तौसमर्थाः किरणायस्यतत् ॥ सर्वाशापरिपूरणक्षमकरं ॥ पुनःकथंभूतं ॥ सर्वोप
कारोदयं ॥ सर्वोपकारायसमस्तवर्णाश्रमाणांविहिताविहितविवेकाविवेकोपदेशरूपेपकाराउदयास्सभारूपेणवर्तनंय
स्यतत् ॥ अन्यत्रसर्वेषांप्राणिनांस्वस्वव्यवहारसिद्धयेप्रादुर्भावोयस्यतत् ॥ सर्वोपकारोदयं ॥ पुनःकथंभूतं सन्मार्गाभि
रतंसन्मार्गेश्रुतिःस्मृतिपुराणोक्तमार्गेअभिरतंआसक्तं ॥ अन्यत्र सत्यमार्गेश्रेष्ठमार्गेपरिवर्तमानं ॥ पुनःकथंभूतं ॥ सम
स्ततमसःप्रध्वंसि ॥ समस्ततमसांसमस्ताज्ञानानांप्रध्वंसिज्ञानोपदेशेननिवारकं ॥ अन्यत्र समस्तांधकाराणांस्वकिर
णप्रसरणेनदूरीकुर्वाणं ॥ पुनःकीदृशं॥सत्यास्पदंसत्यस्ययाथार्थस्यआस्पदमावासस्थानं ॥ पुनःकीदृशं ॥ ब्रह्मावासंब्रा
ह्मणानामावासस्थानं॥अन्यत्रतप्रसामावासस्थानं॥ पुनःकीदृशं अशेषवेदनिलयंसमस्तवेदानांनिलयमावासस्थानं॥ अ
न्यत्र त्रिवेदमूर्तिलाद्वेदानामावासस्थानं ॥ पुनःकीदृशंविद्याधराराधितं ॥ चतुःषष्टिकलाविद्याप्रवीणैस्सेवितं ॥ अन्य
त्रविद्याधरैर्देवयोनिविशेषैःसेवितं ॥ पुनःकीदृशंप्रख्यातं ॥ प्रसिद्धंएतादृशंवस्सभामंडलंनमस्करोमि ॥ इतिनमः पूर्वि

काविज्ञापना ॥ २ ॥ वेदपूर्वंतु ॥ ओन्नमःसदसे ॥ नमःसदसस्पतये ॥ नमस्सखीनांपुरोगाणांचक्षुषे ॥ नमोदिवे ॥ न
मःपृथिव्यै ॥ अहेबुध्नियमंत्रम्मेगोपाय ॥ यमृषयस्त्रयीविदाविदुः ॥ ऋचःसामानियजूंषि ॥ साहिश्रीरमृतासतां ॥ इ
तिवेदपूर्वकन्नमस्कृत्यषोडशोपचारैःपूजयेत् ॥ षोडशोपचाराःकइत्याकांक्षायामाह ॥ अभ्युत्थानंस्वासनंस्वागतोक्तिः
पाद्यंचार्घ्यंमधुपर्कांचमौच ॥ स्नानंवासोभूषणंगंधमाल्येधूपोदीपःसोपहारःप्रणामः ॥ अभ्युत्थानं ॥ स्वासनं ॥ स्वाग
तं ॥ पाद्यं ॥ अर्घ्यं ॥ मधुपर्कः ॥ आचमनं ॥ स्नानं ॥ वासः ॥ भूषणं ॥ गंधाः ॥ माल्यं ॥ धूपं ॥ दीपः ॥ नैवेद्यं ॥ न
मस्कारः ॥ इत्येतेषोडशोपचाराः ॥ एतान्कर्तुमशक्तश्चेत्षडुपचारान्वाकुर्यात् ॥ षडुपचाराःकइत्याकांक्षायामाह ॥ अभ्यु
त्थानमथासिकावितरणंभूयोवचःस्वागतंपाद्यंव्याजनमक्षतंक्रमवशादर्घ्यंन्निरर्घ्यक्रियं ॥ केचित्प्राहुरिमान्षडुत्तमतमान
त्रोपचारान्परेब्रूयुर्वंदनमेकमर्हणविधिंयन्माद्दशातक्षमं ॥ अभ्युत्थानं ॥ स्वासनं ॥ स्वागतोक्तिः ॥ पाद्यं ॥ व्यजनं ॥ म
धुपर्कः ॥ इत्येतेषडुपचाराः ॥ सर्वोपचारेषुप्रवराः ॥ अत्राप्यशक्तश्चेत् ॥ पूजावंदनमेकमेवब्रूयुः ॥ तत्कथं ॥ नास्तिसत्या
त्परोधर्मस्संतुष्टिर्नात्मजात्परा ॥ नान्नदानात्परंदानंवंदनान्नोपचारकं ॥ अस्यार्थः ॥ सत्यादधिकोधर्मोनास्ति ॥ पुत्रा
त्सवादपरस्संतोषोनास्ति ॥ अन्नदानादधिकदानंनविद्यते ॥ वंदनादधिकउपचारोनविद्यते ॥ तस्माद्वंदनोपचारेणैवस
र्वेप्युपचाराःकृतास्संत्वितिमदीयाविज्ञापना ॥ इत्युक्त्वानमस्कुर्यात् ॥ अथसर्वेषांमहाजनानांगंधाःपांतु ॥ सुमंगल्यंचा
स्त्वितिप्रतिवचनं ॥ अक्षताःपांतु ॥ आयुष्यमस्त्वितिप्रतिवचनं ॥ पुष्पाणिपांतु ॥ सुश्रियमस्तु ॥ तांबूलानिपांतु ॥ ऐ

श्वर्थमस्तु ॥ दक्षिणाःपांतुबहुदेयंचास्तु ॥ इत्युक्त्वागुडोदकफलतांबूलानिचदद्यात् ॥ इतिसभापूजा ॥ ७ ॥ अथविवाहः ॥
तत्रगुरुः ॥ गुरुणानुमतः स्नात्वासमावर्त्ययथाविधि ॥ उद्वहेतद्विजोभार्यांसवर्णांलक्षणान्वितां ॥ कश्यपोपि ॥ दाराधीनाः
क्रियास्सर्वाब्राह्मणानांविशेषतः ॥ दारान्त्सर्वप्रयत्नेनविशुद्धानुद्वहेदतइति ॥ श्रुतिरपि॥जायमानोवैब्राह्मणस्त्रिभिर्ऋणवा
नूजायतेब्रह्मचर्येणऋषिभ्योयज्ञेनदेवेभ्यःप्रजयापितृभ्यएषवाअनृणोयःपुत्रीयज्वाब्रह्मचारीवासीति॥देवतानांनमस्कारः
पितृणांचोदकक्रियाः ॥ दारतस्संप्रवर्ततेदाराःस्वर्गस्यसंक्रमइति ॥ देवैश्चापिमनुष्यैश्चतिर्यग्योनिभिरेवच ॥ गृहस्थस्से
व्यतेयस्मात्तस्माच्छ्रेष्ठोगृहाश्रमीतिमनुस्मृतेश्च ॥ यत्रानुकूल्यंदंपत्योस्त्रिवर्गस्तत्रवर्धते ॥ इतियाज्ञवल्क्यस्मरणाच्च ॥
विवाहस्यावश्यकत्वमभिहितं ॥ अथकन्यालक्षणं ॥ स्थूलातिस्थूलगंडासमुदितवदनापद्मपत्रायताक्षीबिंबोष्ठीतुंगना
सामदगजगमनादक्षिणावर्तनाभिः ॥ स्निग्धांगीचारुकेशीमृदुपृथुजघनाकोकिलालापवाणीतस्याभर्ताक्षितीशोभवतिशु
भफलाचाष्टपुत्रासुनारी ॥ अथवर्ज्याआह ॥ पिंगाक्षीकूपगंडाखरपरुषरवास्थूलजंघोर्ध्वकेशीरक्ताक्षीरक्तकेशाप्रमुदितव
दनाकृष्णताल्वोष्ठजिव्हा ॥ शुष्कांगीसंगतभ्रूविषमकुचयुगावामनाचातिदीर्घासर्वांगीयासलोमाशुभकररहितासर्वदाव
र्जनीयाइति ॥ अथवरलक्षणं ॥ तत्रगृह्यं ॥ बुद्धिमतेकन्यांप्रयच्छेदिति ॥ वासिष्ठे ॥ अत्यासन्नेतिदूरेचअत्याढ्येचाति
दुर्बले ॥ वृत्तिहीनेचमूर्खेचषट्सुकन्यानदीयते ॥ यमोपि ॥ कुलंचशीलंचवपुर्वयश्चवित्तंचवेद्यंचसनाथतांच ॥ एतान्गु
णान्त्सप्तपरीक्ष्यदेयाकन्याबुधैःशेषमचिंत्यनीयं ॥ तथा ॥ दूरस्थानामविद्यानांमोक्षमार्गानुसारिणां ॥ शूराणांचनिवृत्ता

होत्सवयज्ञेषुत्वंतरामृतसूतके ॥ परैरन्नंप्रदातव्यंभोक्तव्यंचद्विजोत्तमैरिति ॥ विष्णुरपि ॥ व्रतयज्ञविवाहेषुश्राद्धेहोमे
र्चनेजपे ॥ प्रारब्धेसूतकंनस्यादनारब्धेतुसूतकमिति ॥ प्रारंभः पूर्वमेवोक्तः ॥ प्रारंभाभावेपिकन्यायाअधार्यत्वेस
न्निहितलग्नांतराभावेपिविवाहः कार्यइतिविष्णुराह ॥ अनारब्धविशुद्ध्यर्थंकूष्मांडैर्जुहुयाद्घृतं ॥ गांदद्यात्पंचगव्या
शीततः शुद्ध्यतिसूतकी ॥ इतिविवाहादावाशौचापवादः ॥ अथवधूगृहगमनं ॥ शौनकः ॥ पुण्येमुहूर्तेकुर्वीतवि
वाहंविधिवद्द्विजः ॥ तत्राभ्युदयिकंश्राद्धंकुर्यात्स्वस्तिचवाचयेत् ॥ अपरेद्युःकृतस्नानोधृतधौतांबरोवरः ॥ भूषितोगं
धमाल्याद्यैःशकुनेनसमन्वितः ॥ ब्राह्मणान्भोजयित्वांतेकृतपुण्याहवाचनः ॥ कृतकौतुकबंधश्चमित्रबांधवसंयुतः ॥
यानंयथार्हमारुह्ययातव्यंचवधूगृहं ॥ तस्यद्वाराद्बहिःस्थित्वाप्राङ्मुखोभिमुखागतैः ॥ गृहीतपूर्णकुंभादिपाणिभिर्वनि
ताजनैः ॥ कृताभ्युद्गमनोगेहंप्रविशेत्सहबंधुभिरिति ॥ अथरात्रावपिकन्यादानाधिकारोदानखंडे ॥ रात्रौदानंप्रशंसंति
विनाभयदक्षिणां ॥ विद्यांकन्यांद्विजश्रेष्ठोदीपमन्नंप्रतिश्रयं ॥ देवलोपि ॥ राहुदर्शनसंक्रांतिविवाहोत्पत्तिवृद्धिषु ॥ स्ना
नदानादिकंकार्यंनिशिकाम्यव्रतेषुचेति ॥ इतिरात्रौदानविधिः ॥ अथवाग्दानविधिः ॥ कश्यपसंहितायां ॥ अथातस्सं
प्रवक्ष्यामिकन्यावरणमुत्तमं ॥ सम्यक्तस्याःप्रदानंचपुत्रपौत्रप्रवर्धनं ॥ पंचांगशुद्धदिवसेचंद्रताराबलान्विते ॥ विवा
होक्तेषुऋक्षेषुकुजवर्जितवासरे ॥ मासाद्यदिवसंरिक्तामष्टमींनवमींतिथिं ॥ त्यक्त्वान्यदिवसेगंधस्रक्तांबूलैःफलान्वितैः ॥
सहवृद्धद्विजगणोवरयेत्कन्यकांसतीं ॥ तथेतितत्पिताकन्यावरणोक्तर्क्षवासरे ॥ कुर्यात्प्रदानंकन्यायाः स्वस्तिवाचनपूर्वं

कं ॥ कुलशीलगुणोपेतसुरूपायवरायच ॥ ततस्तस्मैकन्यकांचशुक्लांबरविभूषणां ॥ दद्यान्मंगलघोषैश्चविप्राशीर्वचनैस्स
ह ॥ आदौकृत्वाशचीपूजांपश्चात्सर्वंसमाचरेत् ॥ सुवर्णवर्णांकंजाक्षींदिव्यस्त्रग्वस्त्रशोभितां ॥ सर्वलक्षणसंयुक्तांसर्वाभ
रणभूषितां ॥ अनर्घमणिमालाभिर्भासयंतींदिगंतरं ॥ विलासिनीसहस्त्रौघैस्सेव्यमानामहर्निशं ॥ ध्यात्वाप्रणम्यतांदे
वींकुमारीप्रार्थयेदिति ॥ देवेंद्राणिनमस्तुभ्यंदेवेंद्रप्रियभामिनि ॥ वैवाहंभाग्यमारोग्यंपुत्रलाभंचदेहिमे ॥ नक्षत्राणि
ज्योतिर्निबंधे ॥ विश्वर्क्षपूर्वात्रयकर्णयुग्मस्वात्याग्निमैत्रैश्चविवाहभैर्वा ॥ प्रत्यङ्मुखस्सन्वरयेत्कुमारींफलादिभिःप्रा
ग्वदनांसुवेषां ॥ इति ॥ गृह्यपरिशिष्टे ॥ कन्यांवरयमाणानामेषधर्मोविधीयते ॥ प्रत्यङ्मुखावरयंतिप्रतिगृण्हंतिप्राङ्मु
खाः ॥ तिष्ठेत्पूर्वमुखोदातावरःप्रत्यङ्मुखोभवेत् ॥ मधुपर्कार्चितायैनांतस्मैदद्यात्सदक्षिणांइति ॥ ७ ॥ अथमुख्यब्रा
ह्मविवाहांगभूतवाग्दानविधिरुच्यते ॥ अथकन्यायाचनार्थंसुहृदोब्राह्मणांश्चत्वारोष्टौवासमसंख्याकान्वरान्प्राहिणोति ॥ व
रोवदति ॥ प्रसुग्मंताधियसानस्यसक्षणिर्वरेभिर्वरागुँअभिषुप्रसीदत ॥ अस्माकमिंद्रउभयंजुजोषतियत्सोम्यस्यांध
सोबुबोधति ॥ अथगच्छतस्तान्पश्यन्जपति ॥ अनृक्षराऋजवस्संतुपंथायेभिस्सखायोयंतिनोवरेयं ॥ समर्यमा
संभगोनोनिनीयात्संजास्पत्यंसुयममस्तुदेवाइति ॥ अथतेब्राह्मणास्सुवासिनीभिस्सहमंगलवस्त्राभरणफलतांबूलादी
निगृहीत्वावधूगृहंगत्वा भद्रासनादिषूपविश्याथसालंकारांकन्यांप्राङ्मुखीमुपवेश्यकन्याहस्तेफलतांबूलादीनिदत्वाथवर
पिताप्राङ्मुखःप्रत्यङ्मुखोवोपविश्यगणपतिस्मरणपूर्वकंकन्यांवृणीरन् ॥ यथा ॥ श्रीमद्यजुःशाखाबोधायनसूत्रान्वितका

श्यपावत्सारनैध्रुवत्र्यार्षेयप्रवरान्वितकाश्यपगोत्रोद्भवायकेशवशर्मणःप्रपौत्रायनारायणशर्मणःपौत्रायमाधवशर्मणः पुत्रायशिवशर्मणेवराय ॥ श्रीमद्यजुःशाखाबोधायनसूत्रान्वितविश्वामित्राघमर्ष णकौशिकत्र्यार्षेयप्रवरान्वितविश्वामित्रगोत्रोद्भवांअमुकशर्मणःप्रपौत्रीममुकशर्मणःपौत्रीममुकशर्मणःपुत्रींगौरीनाम्नीमिमांकन्यांभार्यात्वायवृणीमहे ॥ इतिब्राह्मणैरुक्तेथदातावृद्धबंध्वाद्यनुमतिंकृत्वावृणीध्वमितित्रिर्वदेत् ॥ प्रदास्यामीत्युच्चैस्त्रिर्ब्रूयात् ॥ ततोब्राह्मणाः ॥ सुमंगलीरियंवधूरिमाँसमेतपश्यत ॥ सौभाग्यमस्यैदत्वायाथास्त्वंविपरेतन ॥ ध्रुवंतेराजावरुणोध्रुवंदेवोबृहस्पतिः ॥ ध्रुवंतइंद्रश्चाग्निश्चराष्ट्रंधारयतांध्रुवं ॥ अहेबुध्नियमंत्रंमेगोपाय ॥ यमृषयस्त्रयीविदाविदुः ॥ ऋचस्सामानियजूँषि ॥ साहिश्रीरमृतासतां ॥ इत्याशीरुक्त्वाथदाताकन्यावामतः प्राङ्मुखउपविश्याचम्यप्राणानायम्यदेशकालौसंकीर्त्यममकुमार्याः करिष्यमाणविवाहांगभूतंवाग्दानमहंकरिष्ये ॥ तदादौनिर्विघ्नतासिध्यर्थंगणपतिपूजांकरिष्ये ॥ इतिसंकल्प्यतत्कृत्वागंगेचयमुनेचेतिकलशपूजांकृत्वाथकन्यादातावरपितरंप्राङ्मुखमुपवेश्यस्वयंतत्पुरतः प्रत्यङ्मुखउपविश्यतंगंधपुष्पादिभिरलंकृत्यहरिद्राखंडपूगीफलतांबूलानिचगृहीत्वा गंधादिभिरलंकृत्यकाश्यपावत्सारनैध्रुवत्र्यार्षेयप्रवरान्वितकाश्यपगोत्रोद्भवायामुकशर्मणःप्रपौत्रायामुकशर्मणःपौत्रायामुकशर्मणःपुत्रायामुकशर्मणेवराय ॥ विश्वामित्राघमर्षणकौशिकत्र्यार्षेयप्रवरान्वितविश्वामित्रगोत्रोद्भवाममुकशर्मणःप्रपौत्रीममुकशर्मणः पौत्रीममुकशर्मणः पुत्रीममुकनाम्नीमिमांकन्यांज्योतिर्विदादिष्टेसुमुहूर्तेदास्ये ॥ वाचासंप्रददे ॥ अव्यंगेपतितेक्लीबेदशदोषविवर्जिते ॥ इमांकन्यांप्रदास्यामिदेवाग्निद्विजसंनिधौ ॥

इत्युक्त्वावरपितृवस्त्रप्रांतेपूगीफलादीनिनिक्षिप्यग्रंथिंकृत्वागंधाक्षतादिभिरभ्यर्च्याथवरपितापूर्ववत्पूगीफलादीनि गृही
त्वाकाश्यपगोत्रयज्ञशर्मवरविषयेभवंतोनिश्चिताभवंतुइतिकन्यादातृवस्त्रप्रांतेनिक्षिप्यग्रंथिंकृत्वापूर्ववदभ्यर्च्यततोदाता ॥
वाचादत्तामयाकन्यापुत्रार्थंस्वीकृतात्वया ॥ कन्यावलोकनविधौनिश्चितस्त्वंसुखीभव ॥ इतिवरपितरंप्रतिवदेत् ॥ अथ
वरपिता॥ वाचादत्तात्वयाकन्यापुत्रार्थंस्वीकृतामया ॥ वरावलोकनविधौनिश्चितस्त्वंसुखीभव॥इतिदातारंप्रतिवदेत् ॥
भ्रात्रादौस्वीकर्तरिभ्रात्रर्थंमित्रार्थमित्याद्यूहःकार्यः॥ आयुराशास्ते ॥ नमोदेवेभ्यइत्यंतंअग्निरायुष्मानितिपंचमंत्रांश्चप
ठित्वाथदातासिततंडुलपुंजेषुकलशोपरिशचीमावाह्यषोडशोपचारान्कृत्वा॥ सुवर्णवर्णांकंजाक्षींदिव्यस्रग्वस्त्रशोभितां ॥
सर्वलक्षणसंयुक्तांसर्वाभरणभूषितां ॥ अनर्घमणिमालाभिर्भासयंतींदिगंतरं ॥ विलासिनीसहस्त्रौघैः सेव्यमानामहर्नि
शं ॥ ध्यात्वाप्रणम्यतांदेवींकुमारीप्रार्थयेदिति ॥ इतिध्यात्वाषोडशोपचारान्कृत्वातांकन्यैवंप्रार्थयेत् ॥ देवेंद्राणिनमस्तु
भ्यंदेवेंद्रप्रियभामिनि ॥ वैवाहंभाग्यमारोग्यंपुत्रलाभंचदेहिमे ॥ इतिप्रार्थ्यब्राह्मणान्संपूज्याशिषोवाचयीत ॥ अनेन
वाग्दानकर्मणाश्रीपरमेश्वरःप्रीयतां ॥ इतीश्वरार्पणंकुर्यात्॥इतिवाग्दानविधिः ॥ ॥ ७ ॥ ॥ ७ ॥ अथ
विवाहानुक्रमणिका ॥ मधुपर्कोनिरीक्षाचकन्यादानंतथैवच ॥ अक्षतारोपणंकंठसूत्रबंधः क्रमेणतु ॥ पूगीफलादि
वस्त्रांतेपुरोधाग्रंथिबंधनं ॥ पाणिग्रहस्सप्तपदीवेद्यामानयनंततः ॥ विप्राणामर्चनंपश्चादाशीर्वादस्त्वनंतरमिति ॥ तत्रा
दौमधुपर्कप्रयोगः ॥ दधिमधुघृतमापः पयोवस्त्रयुगंकुंडलयुगंगौर्गोदोहनपात्रंस्रगलंकरणानिकांस्यपात्रंसापिधानंपं

चसप्तनवसंख्यैर्वादर्भैःकृतकूर्चत्रयमितिसंपाद्यवरशाखोक्तविधानेनमधुपर्कंकुर्यात् ॥ तथाचगृह्यपरिशिष्टे ॥ वरस्य
याभवेच्छाखातच्छाखागृह्यचोदितः ॥ मधुपर्कः प्रदातव्योह्यन्यशाखेपिदातरीति ॥ कूर्चलक्षणमुक्तंसिंगाभट्टीये ॥ कू
र्चंतुत्रिविधंप्रोक्तमुत्तमाधममध्यमं ॥ नवभिः पंचभिर्दर्भैस्सप्तभिर्ग्रंथिसंयुतमिति ॥ मध्वाद्यलाभे ॥ दानखंडे ॥ द
ध्यलाभेपयः कार्योमध्वलाभेतथागुडः ॥ घृतप्रतिनिधिंकुर्यात्पयोवादधिवानघेति ॥ अथशुच्यागारमध्येत्वुदीचीना
ग्रमासनंनिधायतत्राहतंवासउत्तरदशंबहुगुणमास्तीर्यतत्रवरः प्राङ्मुखउपविशति ॥ अथकर्ताद्विराचम्यप्राणानायम्य
देशकालौसंकीर्त्यविवाहार्थमागतायास्मैस्नातकायवरायकन्यादानांगभूतंमधुपर्ककरिष्ये ॥ द्वितीयादिविवाहेतु ॥ विवा
हार्थमागतंवरंमधुपर्केणार्हयिष्ये॥इतिसंकल्प्य ॥ गृहस्येशानदिग्भागेप्रागग्रान्दर्भान्त्सगुँस्तीर्यतेष्वर्घ्यद्रव्याण्यासादय
ति॥दधिमधुघृतमापः पयइतिपृथक्पृथक्पात्रेष्वासाद्यतत्रास्तृतदर्भेषुकांस्यपात्रंसापिधानंसकूर्चमित्यासाद्य ॥अत्रविश्व
पतिप्रयोगेप्रोक्षणीपात्रासादनमुक्तंतस्यमूलंचिंत्यं ॥ गृह्यसूत्रेविष्णुभट्टप्रयोगेप्यनुक्तत्वात् ॥ तूष्णीगुँसगुँस्कृताभिरद्भि
रित्युक्तत्वाच्च ॥ अतएवासंस्कृतदोषः सूत्रेउक्तः ॥ असंस्कृताभिरद्भिः प्रोक्षणीः प्रोक्षणीभिरप्रोक्षितपात्रैर्होमश्चासंमा
र्जितैः स्रुक्स्रुवैर्नाधिश्रितपक्वैराज्येनप्रचरेद्यातुधानाअसुरारक्षाँगुँसिपिशाचायज्ञंग्रहयेयुरिति ॥ अथपवित्रेकृत्वातूष्णी
गुँसगुँस्कृताभिरद्भिरुत्तानानिपात्राणिकृत्वात्रिः प्रोक्ष्यकूर्चंकांस्यपात्रंनिधायतस्मिन्नुदगग्रेपवित्रेनिधायमध्वानयति ॥ द
धिपयोवाद्वितीयंसद्विवृत् ॥ घृतंतृतीयंसत्रिवृत् ॥ यद्द्वितीयंतच्चतुर्थंसचतुर्वृत् ॥ आपः पंचमीसपांक्तः ॥ यद्द्वितीयंतच्च

तुर्थमित्यत्रदधिद्वितीयंचेत्पयश्चतुर्थंपयोद्वितीयंचेद्दधिश्चतुर्थमितिज्ञेयं ॥ मधुदधिघृतपयोजलानीतिक्रमेणानीयस्थूलकां
स्यपात्रेणापिधायाथकर्तावरायासनार्थंकूर्चंद्दतिकूर्चंददाति ॥ ततोवरउदङ्मुखोद्विराचम्यसुकूर्चंइतिप्रतिगृह्यप्रदक्षिणंप
रिभ्राम्योदगग्रमासनेनिधायोपविशति ॥ राष्ट्रभृतस्याचार्यासंदीमालद्योषमित्यथकर्तोदपात्रंकूर्चाभ्यामधस्ताच्चोपरिष्टा
त्परिगृह्यपाद्याआपइतिप्राहतावरोभिमंत्रयते ॥ आपः पादावनेजनीर्द्विषंतंनाशयंतुमे ॥ अस्मिन्कुलेब्रह्मवर्चस्यसा
नीति ॥ दक्षिणंपादंपूर्वंस्त्रीप्रक्षालयतिपुमानाभिषिंचति ॥ अन्येतु ॥ पुमान्प्रक्षालयतिपत्न्यभिषिंचतीतिप्राहुः ॥ नियमा
त्पत्नीयजमानौजंघेधावयतः ॥ अथवरआचम्यावनेजकस्यपाणिद्वयंसंमृशति ॥ मयिमहोमयिभगोमयिभर्गोमयियशः ॥इ
त्यपउपस्पृश्यात्मनउरोभिमृशति मयींद्रियंवीर्यमित्यपउपस्पृश्यततोव्रीहिभिर्यवैर्वामिश्रिताआपःपात्रांतरआनीयकूर्चा
भ्यांपरिगृह्यार्हणीयाआपइतिप्राहतावरोभिमृश्यजपति ॥ आमआगाद्वर्चसायशसासगुँसृजपयसातेजसाच ॥ तन्मात्रि
यंप्रजानांकुर्वधिपतिंपशूनां ॥ इतितदेकदेशमंजसावानीयमानमनुमंत्रयते ॥ विराजोसिविराजोदोहमशीय ॥ ममपद्या
यविराजेति ॥ तदतिशिष्टाः पराचीर्निनीयमानाअनुमंत्रयते ॥ समुद्रंवः प्रहिणोम्यक्षिताः स्वांयोनिमपिगच्छत ॥ अच्छि
द्रः प्रजयाभूयासंमापरासेचिमत्पयइतिपुनरपिपात्रांतरेपआनीयकूर्चाभ्यांपरिगृह्यउपस्तरणीयाआपइतिप्राहताः पिब
त्यमृतोपस्तरणमसीतिसकृन्मंत्रमुक्त्वात्रिःपिबेत्॥मुखंत्रिःपरिमृजेद्विरित्येकेथाचमनशेषंसमाप्यतथैवकूर्चाभ्यांमधुपर्कपा
त्रंपरिगृह्यमधुपर्कइतिप्राहततोवरोमधुपर्कंप्रोक्तमनुमंत्रयते ॥ त्रय्यैविद्यायैयशोसियशसोयशोसिब्रह्मणोदीप्तिरसि ॥ त

न्माप्रियंप्रजानांकुर्वधिपतिंपशूनामितितमुभाभ्यांहस्ताभ्यांप्रतिगृण्हाति ॥देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोह
स्ताभ्यांप्रतिगृण्हामीति॥तस्मिन्पतितंयत्किंचित्तृणादिकमंगुष्ठानामिकाभ्यांपरिगृह्यनैर्ऋत्यांदिशिनिरस्यतिनेष्टाविद्धिकं
तामियातेघोरातनूस्तयातमाविशयोस्मान्द्वेष्टियंचवयंद्विष्मइत्यथापउपस्पृश्यसर्वाभिरंगुलीभिस्समुदायुत्यप्राश्नाति ॥ य
न्मधुनोमधव्यंपरममन्नाद्यंवीर्यं॥तेनाहंमधुनोमधव्येनपरमेनान्नाद्येनवीर्येणपरमोनादोमधव्योसानीति॥सकृन्मंत्रमुक्त्वा
त्रिःप्राश्यततःपात्रेणत्रिःपीत्वाशेषमात्मनःप्रियायदद्यात्॥ अथदातापात्रांतरेजलमादायकूर्चाभ्यांपरिगृह्यापिधानीयाआ
पइतिप्राहताआपोवरः पिबत्यमृतापिधानमसीतिसकृन्मंत्रमुक्त्वात्रिःपीत्वामुखंत्रिः परिमृज्याचमनशेषंसमाप्याथदाता
गौरितिगांदर्शयतिवरस्तामनुमंत्रयते॥ गौरस्यपहतपाप्मापपाप्मानंनुद ॥ माधवशर्मणोममचनारायणशर्मणोमुष्यचेति
यजमाननामषष्ठ्यंतमुक्त्वातांगामुत्सृजति॥गौर्धेनुभव्या॥ मातारुद्राणांदुहितावसूनांस्वसादित्यानाममृतस्यनाभिः ॥
प्रणुवोचंचिकितुषेजनायमागामनागामदितिंवधिष्ट॥ पिबतूदकंतृणान्यत्तु॥ओमुत्सृजतेति॥अथास्मैपिष्टान्नंलड्डूकादिसिद्धं
कर्ताभूतमितिप्राहवरः सूभूतमित्युक्त्वातदभिमंत्रयते ॥ भूतंसाविराट्॥ तन्माक्षायितन्मेशीयतन्मऊर्जंधाः॥ ओंकल्पय
तेति ॥ ततोवरश्चतुरोनानागोत्रान्ब्राह्मणान्भोजयतेतिब्रूयात्॥ तेषुभुक्तवत्स्वन्नमस्मैवरायोपहरतितत्प्राश्नाति॥ विराडसि
विराडन्नंविराड्विराजोमयिधेहीति॥ अथवस्त्रयुगंकुंडलयुगंगांस्त्रजमलंकरणंयज्ञोपवीतद्वयंचवरायदद्यात्॥ अत्रसुभूतमि
त्यादिमंत्रान्वरोजपेन्नभोजनमितिविष्णुभट्टः ॥ अन्नंभक्षणयोग्यद्रव्यं ॥ अत्रमधुपर्केमांसस्यावश्यकत्वमुक्तंसूत्रे ॥ मेष

मजंवालभतारण्येनवामांसेननत्वेवामांसोर्घःस्यादशक्तोपिष्टान्नगुँसगुँसिध्येदिति ॥ (अमांसः अर्घः मधुपर्कोनस्यादेवेत्य
र्थः) ॥ आश्वलायनोपि ॥ नामांसोमधुपर्कोभवतीति (मधुपर्कांगभोजनममांसंनभवतीत्यर्थः) ॥ गोरूपोपाकरणपक्षेतन्मां
सेनभोजनं ॥ उत्सर्जनपक्षेमांसांतरेण ॥ कलौगवालंभस्यनिषेधात् ॥ अत्रसंग्रहश्लोकः ॥ कूर्चपाद्यार्हणीयोपस्तरणी
याः क्रमेणतु ॥ मधुपर्कोपिधानीयंगौर्भूतंवस्त्रकुंडले ॥ इतिमधुपर्कप्रयोगः ॥ ७ ॥ अथनिरीक्षा ॥ आरुह्यराशिंसि
ततंडुलानामन्योन्यवक्त्राभिविलोकनेन ॥ प्रत्यङ्मुखः पूर्वमुखींसुलग्नेवरोवरेण्यांवरयेत्कुमारीमिति ॥कारिकायां ॥
स्नातालंकृतकन्यायाःप्राङ्मुख्याः प्रत्यगाननः ॥ ईक्षेततंडुलस्थायावरस्तस्यमुखंचसा ॥ मुहूर्तेशोभनेसम्यक्क्षिपेतां
मुखयोर्मिथः ॥ सजीरकगुडांकन्यांवृणुयादथतांवरइति ॥ व्यासः ॥ वरगोत्रंसमुच्चार्यप्रपितामहपूर्वकं ॥ नामसंकीर्त
येद्विद्वान्कन्यायाश्चैवमेवहीति ॥ स्मृत्यर्थसारे ॥ नांदीमुखेविवाहेचप्रपितामहपूर्वकं ॥ नामसंकीर्तयेद्विद्वानन्यत्रपितृ
पूर्वकमिति ॥ नांदीमुखइत्यथर्वणशाखाविषये ॥ तेषांश्राद्धप्रकरणेतथैवोक्तत्वात् ॥ अथशिष्टाचारः ॥ मंडपमध्येरंगव
ल्यादिभिर्भूमिमलंकृत्यतन्मध्येसिततंडुलराशिद्वयंकृत्वापूर्वराशौतंडुलगुडजीरकहस्तःपश्चिमाभिमुखोवरस्तिष्ठति रा
श्योर्मध्येकुंकुमादिभिः कृतस्वस्तिकलांछनंवस्त्रमुत्तरदशंगृहीत्वाथकन्यादातापत्नीसहितोलंकृतांतंडुलगुडजीरकहस्तां॥
देवींवाचमजनयंतदेवाः ॥ तांविश्वरूपाःपशवोवदंति ॥ सानोमंद्रेषमूर्जंदुहाना ॥ धेनुर्वागस्मानुपसुष्टुतैतु ॥ ध्रुवंतेरा
जावरुणोध्रुवंतेवोबृहस्पतिः॥ध्रुवंतइंद्रश्चाग्निश्चराष्ट्रंधारयतांध्रुवं ॥ इतिवरपुरतः पश्चिमराशौप्राङ्मुखीमवस्थाप्याथवरपि

तादयएवंब्रूयुः॥ श्रीमद्यजुःशाखाबोधायनसूत्रान्वितकाश्यपावत्सारनैध्रुवत्र्यार्षेयप्रवरान्वितकाश्यपगोत्रोद्भवायशिवशर्म
णः प्रपौत्रायविष्णुशर्मणः पौत्रायशंकरशर्मणःपुत्राययज्ञशर्मणेवरायश्रीधररूपायधर्मप्रजासंपत्त्यर्थमिमांकन्यांवृणीमहे॥
अथकन्यापित्रादयः ॥श्रीमद्यजुः शाखाबोधायनसूत्रान्वितविश्वामित्राघमर्षणकौशिकत्र्यार्षेयप्रवरान्वितविश्वामित्रगोत्रो
द्भवाममुकशर्मणः प्रपौत्रीममुकशर्मणःपौत्रीममुकशर्मणःपुत्रींगौरीनाम्नींश्रीरूपांधर्मप्रजासंपत्त्यर्थमिमांकन्यांवृणीध्वं॥इ
तित्रिवारमुक्त्वाथज्योतिर्विद्भिर्मंगलपद्येपठितेसुमुहूर्तमित्युक्तेयवनिकावस्त्रमुदगपसृत्याथकन्यापुष्पमालिकांवरकंठेप्रति
मुंचतिवरोपिमालिकांवधूकंठेप्रतिमुंचत्येवमेवक्रमेणपरस्परंतंडुलगुडजीरकावाकिरणंचकुर्यातां ॥ अथवरःकन्यामीक्षते॥
अभ्रातृघ्नींवरुणापतिघ्नींबृहस्पते ॥ इंद्रापुत्रघ्नींलक्ष्म्यंतामस्यैसवितुःसुवेति ॥ तयावध्वाईक्षमाणोजपति ॥ अघोरचक्षु
रपतिघ्न्येधिशिवापशुभ्यःसुमनास्सुवर्चाः ॥ जीवसूर्देवकामाः स्योनाशन्नोभवद्विपदेशंचतुष्पदइत्यथवध्वाभ्रुवोर्मध्येंगु
ष्ठानामिकाभ्यांगृहीतदर्भेणसम्मार्ष्टि ॥ इदमहंयात्वयिपतिघ्न्यलक्ष्मीस्तान्निर्दिशामीतिसंमृज्यदर्भंप्रतीचीन्निरस्यापउ
पस्पृश्यततः प्रत्यङ्मुखोवरःप्रदक्षिणमावृत्यपश्चिमराशिस्थपीठेप्राङ्मुखउपविशति ॥ एवमेववधूः पूर्वराशिस्थ
पीठेप्रत्यङ्मुख्युपविशतिपुरोधास्तुवरदक्षिणतउदङ्मुखउपविश्याथदातावधूवरयोर्दक्षिणतस्सपत्नीक उदङ्मुखउप
विश्यद्विराचम्यपत्न्यपितूष्णींद्विराचम्यपवित्रपाणिर्जलशुद्धिंकुर्यात् ॥ भूमौदर्भानास्तीर्यतत्रजलपूर्णंकलशंनिधायव्री
हियवानोप्यगंधपुष्पादिभिरभ्यर्च्यदूर्वापल्लवैराच्छाद्यापोहिष्ठेत्यभिमंत्र्यगंगेचयमुनेचेतितीर्थान्यावाह्यनमस्कुर्यात् ॥ इ

तिजलशुद्धिः ॥ ७ ॥ अथकन्यादानसंकल्पकारिक पारिजातेसंवर्तः ॥ तिलराशिः कृतोयावद्दिवाकरसमुच्छ्रितः॥
वर्षांतेगृह्यतेतस्यतिलराशेस्तुयावता ॥ संक्षयोलभतेतावद्ब्रह्मलोकेस्यनिश्चितः ॥ लैंगे ॥ यावंतिसंतिलोमानिकन्याया
श्चतनौपुनः ॥ तावद्वर्षसहस्राणिरुद्रलोकेमहीयते ॥ अत्रिः ॥ वालुकाभिः कृतोराशिर्यावत्सप्तर्षिमंडलं ॥ गतेवर्षसह
स्रेतुलवमेवंविशीर्यते ॥ क्षयस्यदृष्टिस्तस्यापिकन्यादानेनविद्यते ॥ ज्योतिष्टोमातिरात्राणांशतंशतगुणात्कृतं ॥ प्राप्नोतिक
न्यकांदत्वाहोममंत्रैश्चसंस्कृतामिति ॥ अथसंकल्पः ॥ कर्ताचम्यप्राणानायम्यदेशकालौसंकीर्त्यएवंगुणविषेषणविशि
ष्टायांशुभतिथौगंगावालुकाभिः कृतराशेर्वर्षसहस्रावसानेएकैकवालुकापकर्षक्रमेणसर्वराश्यपकर्षसंमितकालेब्रह्मलोके
निवाससिद्ध्यर्थंयवैश्चंद्रमंडलपर्यंतंकृतराशेर्वर्षसहस्रावसाने एकैकयवापकर्षक्रमेणसर्वराश्यपकर्षसंमितकालेब्रह्मलोके
निवाससिद्ध्यर्थंतिलैस्सूर्यमंडलपर्यंतं कृतराशेर्वर्षसहस्रावसानेएकैकतिलापकर्षक्रमेणसर्वराश्यपकर्षसंमितकालेब्रह्मलो
केनिवाससिद्ध्यर्थंकृतगोलोमभिःसप्तर्षिमंडलपर्यंतंकृतराशेर्वर्षसहस्रावसानेएकैकलोमापकर्षक्रमेणसर्वराश्यपकर्षसंमि
तकालेब्रह्मलोकेनिवाससिद्ध्यर्थंशतगव्यूतिगणगणानांत्रिगुणीकृताग्निष्टोमातिरात्राश्वमेधशतफलसिद्ध्यर्थं आंगिरसबा
र्हस्पत्यभारद्वाजेतित्र्यार्षेयप्रवरान्वितभारद्वाजगोत्रोत्पन्नस्य यज्ञशर्मणोममकुलोत्पन्नानांसर्वेषांमततातपितॄणां मयासह
दशपूर्वेषांदशापरेषांमद्वंश्यानांनरकादुत्तीर्यनिरातिशयसानंदब्रह्मलोकावाप्त्यादिकन्यादानकल्पोक्तफलावाप्तये अनेनैव
वरेणास्यांकन्यायामुत्पादयिष्यमाणसंतत्याद्वादशावरान्द्वादशपरान्पुरुषान्पवित्रीकर्तुमात्मनश्चश्रीलक्ष्मीनारायणप्रीत

येब्राह्मविवाहविधिनायथासंभवंसालंकृतकन्यादानमहंकरिष्ये ॥ इतिदर्भाक्षतजलहस्तस्संकल्प्यतदंगत्वेनवधूवरपूजां करिष्ये ॥ इतिसंकल्प्याथदातपयसाघृतेनाद्भिरितिप्रत्येकंतयोःपादौप्रक्षालयति ॥ अस्मिन्राष्ट्रेश्रियमावेशयाम्यतोदेवीः प्रतिपश्याम्यापः॥दक्षिणंपादमवनेनिजेस्मिन्राष्ट्रइंद्रियंदधामि ॥ सव्यंपादमवनेनिजेस्मिन्राष्ट्रइंद्रियंवर्धयामि ॥ पूर्वमन्य मपरमन्यंपादाववनेनिजे ॥ देवाराष्ट्रस्यगुप्त्याअभयस्यावरुध्यै ॥ आपःपादावनेजनीर्द्विषंतंनिर्दहंतुमे॥इतितयोःपादौप्र क्षाल्यापआचमय्यगंधमाल्यादिकंसर्वंश्रीलक्ष्मीनारायणस्वरूपायनमइतिदत्वातैजसपात्रेगव्यक्षीरंघृतंच निक्षिप्यप्रक्षा लिततंडुलान्पात्रांतरेनिधायाथवरःप्रक्षालितपाणिः प्रक्षालितवध्वंजलौतैजसपात्रस्थसाज्यक्षीरंस्वहस्तद्वयमध्यमानामि काभ्यांद्विरुपस्तीर्यद्विवारंतंडुलानोप्यद्विरभिघारयत्यथदातावरांजलिमप्येवमेवपूरयत्यथतंडुलपूर्णकन्यांजलौसुवर्णंनिधा यतदंजलिंवरांजल्युपरिनिधायपूर्वमार्चितकलशमिडादेवहूरित्यादायतिष्ठन्वोपविश्यवारुदक्षिणस्थितभार्याहस्तेप्रदाय॥ कन्यांकनकसंपन्नांसर्वाभरणभूषितां ॥ दास्यामिविष्णवेतुभ्यंब्रह्मलोकजिगीषया ॥ विश्वंभरास्सर्वभूताःसाक्षिणःसर्वदेव ताः॥इमांकन्यांप्रदास्यामिपितॄणांतारणायच॥श्रीरूपैषामयादत्तातुभ्यंश्रीधररूपिणे ॥ नवोनवोभवतिजायमानोन्हांकेतुरु षसामेत्यग्रे ॥ भागंदेवेभ्योविदधात्यायन्प्रचंद्रमास्तिरतिदीर्घमायुः ॥ इत्युक्त्वातदंजल्योरधः कांस्यपात्रंनिधायवरांज ल्युपरिकन्यांजलिंनिधायतदंजलौभार्याहस्तस्थकलशमादायतेनजलेनधारामनवच्छिन्नांक्षिपन्वदेत् ॥ यथाकांस्यपात्रे जलंपतेत् ॥ ॐपुंण्याहंदीर्घमायुरस्तुशिवाआपस्संतु ॥ सौमनस्यमस्तु ॥ अक्षतंचारिष्टंचास्तु ॥ सहिरण्यंकन्यातारय

तु ॥ स्वस्तिदक्षिणाः पांतुबह्वुधेयंचास्तु पुण्यंवर्धतांशांतिरस्तुपुष्टिरस्तुतुष्टिरस्तुवृद्धिरस्तुअविघ्नमस्तुआयुष्यमस्तुआरो
ग्यमस्तुशिवंकर्मास्तुकर्मसिद्धिरस्तुइष्टसंपदस्तुपुंण्याहंभवंतोब्रुवंतु स्वस्तिभवंतोब्रुवंतु रिद्धिंभवंतोब्रुवंतु श्रीरस्त्वितिभवं
तोब्रुवंतु॥ आंगिरसबार्हस्पत्यभारद्वाजेतित्र्यार्षेयप्रवरान्वितभारद्वाजगोत्रोत्पन्नःकेशवशर्माहंममकुलोत्पन्नानांसर्वेषामती
तपितृणांनिरतिशयब्रह्मलोकावाप्त्यादिकन्यादानकल्पोक्तफलावाप्तये अनेनैववरेणास्यांकन्यायामुत्पादयिष्यमाणसंत
त्याद्वादशावरान्द्वादशपरान्पवित्रीकर्तुमात्मनश्चश्रीलक्ष्मीनारायणप्रीतये ॥ काश्यपावत्सारनैध्रुवत्र्यार्षेयप्रवरान्वितका
श्यपगोत्रोद्भवायामुकशर्मणः प्रपौत्रायामुकशर्मणः पौत्रायामुकशर्मणः पुत्रायामुकशर्मणेवराय ॥ आंगिरसबार्हस्पत्यभा
रद्वाजेतित्र्यार्षेयप्रवरान्वितभारद्वाजगोत्रोद्भवांदेवदत्तशर्मणः प्रपौत्रींशर्मणः पौत्रींशर्मणःपुत्रीममुकनाम्नींकन्यांवरार्थिनीं
श्रीरूपांप्रजापतिदैवत्यांप्रजासहत्वकर्मभ्यः प्रजोत्पादनार्थंतुभ्यमहंसंप्रददेश्रियै ॥ एवमेकवारंत्रिवारंवादत्वाकन्यांप्रति
गृण्हातुभवानितिवरहस्तेसकुशाक्षतजलंक्षिपेत्॥ वरः॥ ॐस्वस्तीतिवदेत्॥ अथवधूवरयोरंजलिस्थानक्षतान्वधूवस्त्रप्रांते
बध्वातदवशिष्टानक्षतानन्योन्यंशिरसिप्रकिरतः ॥ ततोवरःकन्यायादक्षिणस्कंधमभिमृश्यब्रूयात्॥ देवस्यत्वा ॥ हस्ता
भ्यांप्रतिगृण्हामि ॥ राजात्वावरुणोनयतुदेविदक्षिणेप्रजापतयेकन्यां॥ तयामृतत्वमश्यां ॥ वयोदात्रे ॥ मयोमह्यमस्तुप्र
तिगृहीत्रे ॥ कइदंकस्माअदात् ॥ कामः कामाय ॥ कामोदाता ॥ कामः प्रतिगृहीता ॥ कामँसमुद्रमाविश ॥ कामे
नत्वाप्रतिगृण्हामि ॥ कामैतत्ते ॥ एषातेकामदक्षिणा ॥ उत्तानस्त्वांगिरसः प्रतिगृण्हातु ॥ धर्मप्रजासंपत्त्यर्थंकन्यांप्र

तिगृण्हामि ॥ ततोदाता ॥ गौरींकन्यामिमांविप्रयथाशक्तिविभूषितां ॥ गोत्रायशर्मणेतुभ्यंदत्तांविप्रसमाश्रय ॥ कन्ये
ममाग्रतोभूयाः कन्येमेदेविपृष्ठतः ॥ कन्येमेपार्श्वतोभूयास्त्वद्दानान्मोक्षमाप्नुयां ॥ ममवंशकुलेजातापालितावत्सराष्टकं ॥
तुभ्यंविप्रमयादत्तापुत्रपौत्रप्रवर्धिनी ॥ यदिन्यूनाधिकवयस्कातदापालितावर्षसप्तकं ॥ पालितानववत्सरं ॥ इत्याद्यू
हः कार्यः ॥ धर्मेचार्थेचकामेचनातिचरितव्यात्वयेयं ॥ इतिदाता ॥ नातिचरामीतिवरः ॥ सहधर्मंश्चर्यतामितिदाता ॥
चरिष्यामीतिवरः ॥ ततः कन्यादानसांगतासिद्ध्यर्थंयथाशक्तिहिरण्यंतुभ्यमहंसंप्रददे ॥ इतिदद्यात् ॥ उत्तानस्त्वांगिर
सःप्रतिगृण्हात्वितिप्रतिगृण्हीयात् ॥ एवंभोजनपात्रंजलपात्रंगांदासीमित्यादियथाशक्तिदद्यात् ॥ अथदाताकृतस्यक
न्यादानकर्मणस्सांगतासिद्ध्यर्थंयथाशक्तिब्राह्मणान्भोजयिष्ये ॥इत्युक्त्वा अनेनकन्यादानकर्मणाश्रीलक्ष्मीनारायणःप्री
यतां ॥इतिकन्यादानं ॥ ॥ ७ ॥ ॥ अथवधूवरयोरायुर्वर्धनार्थंपरस्परमक्षतारोपणंकुरुतः ॥ तांप्रतिगृण्हीयात्प्रजापतिः
स्त्रियांयशइत्येताभिःषड्भिरनुच्छंदसमितिसूत्रं ॥ कुमारस्वामिकारिकायां ॥ प्रजापतिस्त्रियामाद्यैःषड्भिस्त्रीप्रत्यृचंस्पृशे
त् ॥ अक्षतारोपणपूर्वकंस्पृशेत् ॥ मंगलार्थत्वात् ॥ अथवरःस्वांजलिनावध्वंजलिंक्षीरेणद्विरुपस्तीर्यद्विवारंतंडुलानोप्य
द्विरभिघारयति ॥ ततोदातावरांजलिंद्विरुपस्तीर्यद्विवारंतंडुलानोप्याभिघार्यतदंजल्योः सुवर्णंनिधायकन्यांजल्युपरिवरां
जलिंनिधायद्वितीयकलशजलधारांसिंचन्वदेत् ॥ शांतिरस्तु ॥ पुष्टिरस्तु ॥ तुष्टिरस्तु ॥ अविघ्नमस्तु ॥ आयुष्यमस्तु
आरोग्यमस्तु ॥ प्रजापतिस्त्रियांयशः ॥ मुष्कयोरदधात्स्वपं ॥ कामस्यतृप्तिमानंदं ॥ तस्याग्नेभाजयेहमा ॥ १ ॥ मोदःप्रमोद

आनंदः ॥ मुष्कयोर्निहितःसपः ॥ श्रुत्वेत्रकामस्यस्तृप्याणि ॥ दक्षिणानांप्रतिग्रहे ॥ ४ ॥ मनसश्चित्तमाकूतिं ॥ वाचः सत्यमशीमहि ॥ पशूनागुँरूपमन्नस्य ॥ यशःश्रीःश्रियतांमयि ॥३॥ यथाहमस्याअतृपगुँस्त्रियैपुमान् ॥ यथास्त्रीतृप्य तिपुगुँसिप्रिये ॥ प्रियाएवंभगस्यतृप्याणि १ यज्ञस्यकाम्यःप्रियः ॥४॥ ददामीत्यग्निर्वदति ॥ तथेतिवायुराहतत् ॥ हंतेतिसत्यंचंद्रमाः ॥ आदित्यस्सत्यमोमिति ॥ ५ ॥ आपस्तत्सत्यमाभरन् ॥ यशोयज्ञस्यदक्षिणां ॥ प्रजामेकामस्स मृद्ध्यतां ॥ इतिवरांजलिस्थतंडुलान्वधूशिरस्यावपेत् ॥ वध्वपितथैववरशिरस्यावपेत् ॥ पुनःपूर्ववत्पूरयित्वापूर्ववत्कल शोदकधारांसिंचन्शांतिरस्त्वित्यादिसप्तकमुक्त्वाप्रजापतिस्त्रियामित्यनुवाकांतेपशवोमेकामःसमृद्ध्यतामितिवधूपूर्वकम क्षतांच्छिरसिविकीर्य॥ एवमेवतृतीयपर्यायेकलशोदकधारांसिंचंच्छांतिरस्त्वित्यादिसप्तकमुक्त्वाप्रजापतिरित्यनुवाकांते यज्ञोमेकामः समृद्ध्यतामितिवरपूर्वकं ॥ चतुर्थपर्यायेपूर्ववत्पूरयित्वातूष्णींकलशजलधारामभिषिच्यतूष्णीमेवसर्वोमेका मः समृद्ध्यतामितिवधूपूर्वकंशिरसिविकिरेत् ॥ इत्यक्षतारोपणं ॥ अथकंठसूत्रंस्वर्णादिकंसूत्रेप्रोत्यगंधपुष्पादिभिरभ्य र्च्यवरोवधूकंठेबध्नाति ॥ मांगल्यतंतुनानेनममजीवनहेतुना ॥ कंठेबध्नामिसुभगेत्वंजीवशरदांशतं ॥ इतिबध्वाततोगुड जीरकाक्षतहरिद्राखंडपंचपूगीफलानिचपीठादौनिधायवरः ॥ ममविवाहव्रतस्यनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजांकरिष्य इतिसंकल्प्य॥गणानांत्वेतिषोडशोपचारान्कलापृथक्पृथग्वधूवरयोरुत्तरीयवस्त्रप्रांतेबध्वाव्रतसमाप्तिपर्यंतंनविसृजेत्॥नी ललोहितेभवतः कृत्यासक्तिर्व्यज्यते ॥ एधंतेअस्याज्ञातयः पतिर्बंधेषुबध्यतामितिवधूवरयोर्वस्त्रप्रांतौमिथोबध्वाथैनांवरो

दक्षिणेहस्तेगृण्हाति ॥ मित्रोसीति ॥ स्त्रीणामुपनयनंपाणिग्रहाख्यः संस्कारः ॥ उक्तश्चपाणिग्रहोविधिः॥स्त्रीणामौपना
यनिकः स्मृतइतिमातृदत्तः ॥ चिंतामणौतु ॥ मित्रोसिगृण्हातिचदक्षहस्तंतामर्पयेतांपितरौसुलग्ने ॥ अथसप्तपदक्रमणा
र्थंसप्ततंडुलराशिंकृत्वातेषुवधूदक्षिणपादंक्रमेणनिधापयति ॥ एकमिषेविष्णुस्त्वान्वेतु ॥ द्वेऊर्जेविष्णुस्त्वान्वेतु ॥ त्री
णिव्रतायविष्णुस्त्वान्वेतु ॥ चत्वारिमायोभवायविष्णुस्त्वान्वेतु ॥ पंचपशुभ्योविष्णुस्त्वान्वेतु ॥ षड्रायस्पोषायविष्णुस्त्वा
न्वेतु ॥ सप्तसप्तभ्योहोत्राभ्योविष्णुस्त्वान्वेतुइति ॥ सप्तमंपदमुपसंगृह्यजपति ॥ सखासिसप्तपदाअभूम ॥ सख्यंतेगमे
यं ॥ सख्यातेमायोषं ॥ सख्यान्मेमायोष्ठाइति ॥ ततःपूर्ववदुपविश्याथब्राह्मणाअस्मेदेवासइत्यनुवाकंमंगलसूक्तंपठेयुः ॥
ततोबांधवामंगलवस्त्राणिदद्युः ॥ सुवासिन्यआरार्तिक्यंकुर्युः ॥ ततःसभापूजांकृत्वातांबूलदक्षिणादिभिः संतोष्याशिषो
गृहीत्वाहोमार्थंगच्छेत् ॥ अथेदानींवारुंधतीदर्शनात्परंवावधूवरौदेवतायतनंगत्वासौभाग्याद्यभिवृद्ध्यर्थंमहालक्ष्मींशचीं
गौरींचपूजयेत् ॥ प्राणानायम्यदेशकालौसंकीर्त्यममसौभाग्यादिप्राप्त्यर्थंमहालक्ष्मीशचीगौरीपूजांकरिष्यइतिसंकल्प्य॥
श्रीमहालक्ष्म्यैनमः ॥ शच्यैनमः गौर्यैनमइतिषोडशोपचारान्कृत्वाप्रार्थयेत् ॥ सर्वमंगलमांगल्येशिवेसर्वार्थसाधके॥शरण्ये
त्र्यंबकेदेविनारायणिनमोस्तुते ॥ देवेंद्राणिनमस्तुभ्यंदेवेंद्रप्रियभामिनि ॥ वैवाहंभाग्यमारोग्यंपुत्रलाभंचदेहिमे ॥ इति
प्रार्थ्यसुवासिनीभ्योमंगलद्रव्यफलदानानिचदत्वाथवधूवरौमंगलघोषेणदेवयजनंगच्छेतां ॥ तत्रोपवेशनक्रमः ॥ सं
स्कारकस्तुसर्वत्रतिष्ठेदुत्तरतस्सदा ॥ संस्कार्यःपुरुषोवाथस्त्रीवादक्षिणतस्सदा ॥ इयंव्यवस्थानिर्णीताकपर्दिप्रमुखैरिह ॥

स्मार्तकर्मसुसर्वत्रतस्मादेवंहिकारयेदिति ॥ अथदेव नस्यपश्चादुदग्देशेनवाससास्तीर्णेभद्रासनेप्राङ्मुखउत्तरतोव
रोदक्षिणतोवधूरितिक्रमेणवधूवरावुपविश्याद्विराचम्यप्राणानायम्यदेशकालौसंकीर्त्य विवाहहोमंकर्तुंस्थलशुद्ध्यर्थंस्थंडि
लोल्लेखनाख्यंकर्मकरिष्ये ॥ इतिसंकल्प्यतत्कृत्वातत्रलौकिकाग्निंप्रतिष्ठाप्यतस्मिन्नात्मन्यारोपितमग्निंउपावरोहजातवेदः
पुनस्त्वंदेवेभ्योहव्यंवहनःप्रजानन् ॥ आयुःप्रजाँरयिमस्मासुधेहि ॥ अजस्रोदीदिहिनोदुरोणे ॥ ॐभूर्भुवस्सुवरोंअ
ग्निंप्रतिष्ठापयामीत्यग्निंप्रतिष्ठाप्यप्राणानायम्यदेशकालौसंकीर्त्य प्रतिगृहीतायामस्यांवध्वांभार्यात्वसिद्ध्येगृह्याग्निसिद्ध
येचानयानवोढयावध्वासहविवाहहोमंकरिष्ये ॥ विवाहहोमःकर्मआघारवत्तंत्रंपंचदशदारुरिध्मः अग्नीषोमावाज्यभागौ
योजकोनामाग्निःप्रजापतिर्देवतालाजाहविः अग्निः स्विष्टकृत्आज्यस्यमांत्रवर्णिक्योदेवताअंगदेवताः प्रधानदेवतास्ता
स्सर्वास्सन्निहितास्संतु ॥ एवंसांगेनकर्मणासद्योयक्ष्ये ॥ तदंगमन्वाधानंकरिष्यइतिसंकल्प्य ॥ तत्कृत्वापात्रासाद
नकाले आज्यस्थालींस्रुवंप्रणीताप्रणयनंशूर्पंप्रोक्षणींइध्माबर्हिरिध्मप्रवृश्चनानिरूप्यंमेक्षणंदृषदंचेतिपात्राण्यासादयि
त्वा प्रणीतासादनांतंकृत्वाथपवित्रेआदायाग्नेःपश्चाद्दर्भेषुशूर्पंनिधाय तस्मिन्प्रागग्रेपवित्रेनिधाय देवस्यत्वा ÷ हस्ता
भ्यां प्रजापतयेजुष्टंनिर्वपामीतित्रिर्लाजान्निरूप्यतूष्णींचतुर्थं ॥ देवस्यत्वा ÷ हस्ताभ्यां प्रजापतयेवोजुष्टंप्रोक्षामीतिसकृ
न्मंत्रेणद्विस्तूष्णींप्रोक्ष्याथाग्नेःपश्चादाज्यस्थाल्यामुदगग्रेपवित्रेनिधायाज्यंविलाप्य तत्पात्रआनीयोत्तरतोंगारान्निरूह्यते
ष्वधिश्रित्याभिद्योतनकुशद्वयमग्नौप्रज्वाल्याभिद्योत्यापउपस्पृश्य द्वेदर्भाग्रेप्रच्छिद्यापउपस्पृश्यप्रक्षाल्याज्येप्रत्यस्यतावे

वदभौं(पूर्वांभिद्योतनदर्भावित्यर्थः) ॥ पुनःप्रज्वाल्याभिद्योत्यापउपस्पृश्यपुनर्दर्भद्वयंप्रज्वाल्यलाजानाज्यंचत्रिः पर्यग्नि
कृत्वावर्त्मकरणादिकंसर्वंपूर्ववत्कृत्वामेक्षणंसंस्कृत्यशूर्पेनिधायदर्वीकार्यमापन्नमपिनांजलिंसंमार्ष्टि ॥ अथवध्वामन्वारब्धा
यांवरः प्रागादिप्रदक्षिणमग्निंपरिसमूहति ॥ जुषस्वनइत्याद्यग्निमुखांतंकृत्वाथस्वयमुत्थायोत्थितायावध्वादक्षिणस्कंधे
स्वदक्षिणंबाहुंनिधायहृदयमभिमृशति ॥ अत्रविश्वपतिप्रयोगे ॥ आसीनायाःस्त्रियास्तिष्ठन्गृभ्णामीत्यग्निमंतरा ॥ गृ
ह्णीयात्पाणिमुत्तानंसांगुष्ठांगुलिदक्षिणमितिविश्वप्रकाशकारिकावचनमुदाहृतंतदापस्तंबाश्वलायनपरं ॥ तेषांस्वयमुत्थि
तस्सन्नासीनायाःपाणिंगृह्णीयादित्युक्तत्वात् ॥ बोधायनानांतु ॥ ममहृदयइत्यस्मात्प्रागेवद्वयोरुत्थानमुक्तंविश्वामित्रका
रिकायां ॥ हुतेत्वग्निमुखेस्थित्वातिष्ठन्वाबाहुकेकरं ॥ निधायस्वीयमस्यास्तुहृदयंसंस्पृशन्जपेत् ॥ ममादिमंत्रान्तस्या
स्तुकर्णेमांतेमनोजपेत् ॥ तस्याहस्तंतुसांगुष्ठंगृह्णात्युत्तानकारितं ॥ गृभ्णामितइतित्युक्त्वावन्हिंपर्याणयेच्चतां ॥ पारि
त्वाग्नइतिप्रोच्यतथोपाविशतस्ततइति ॥ ममहृदयेहृदयंतेअस्तुममचित्तेचित्तमस्तुते ॥ ममवाचमेकमनाःशृणुमामेवानु
व्रतासहचर्यामयाभवेत्यथापउपस्पृश्य ॥ अथास्यदक्षिणेकर्णेजपति ॥ मांतेमनःप्रविशतु ॥ मांचक्षुर्मामुतेभगः ॥ म
यिसर्वाणिभूतानिमयिप्रज्ञानमस्तुते ॥ मधुहेमध्वगाहेजिव्हामेमधुवादिनी ॥ मुखेमेसारघंमधुदत्सुसंवननंकृतं ॥ चा
क्रवाकँसंवननंयन्नदीभ्यउदाहृतं ॥ यद्विद्वौदेवगंधर्वौतेनसंवनिनौस्वः ॥ स्पृशामितेहमंगानिवायुरापश्चमापरः ॥ मां
चैवपश्यसूर्यंचमान्येषुचमनस्कृथाः ॥ सोमःप्रथमोविविदेगंधर्वोविविदउत्तरः ॥ तृतीयोअग्निष्टेपतिस्तुरीयस्तेमनुष्यजाः ॥

पुनः पतिभ्योजायांदाअग्नेप्रजयासहेति॥पुनः पूर्ववदश्मानमास्थापय
ग्निंपर्याणयति॥तुभ्यमग्रेपर्यवहन्त्सूर्यांवहतुनासह॥पुनः पतिभ्योजायांदाअग्नेप्रजयासहेति॥पुनः पूर्ववदश्मानमास्थापय
ग्निंपर्याणयति॥तुभ्यमग्रेपर्यवहन्त्सूर्यांवहतुनासह ॥पुनः पतिभ्योजायांदाअग्नेप्रजयासहेति॥
ति ॥ आतिष्ठेममितिपुनःपूर्ववदागत्यपूर्ववत्स्थित्वापूर्ववदुपस्तीर्यापराधांदवदायपूर्वार्धादवद्यतीतिद्वितीयाद्यवदानोविशे
ष: ॥अभिघारयतिप्रत्यनक्ति पुरस्तात्स्रुवाहुतिंहुत्वा ॥ इयंनार्युपब्रूतइतिपूर्ववद्धुत्वाथैनांपुनःपूर्ववत्पर्याणयति ॥ पुनःपत्नी
मग्निरदादायुषासहवर्चसा ॥ दीर्घायुरस्यायःपतिस्सएतुशरदःशतमिति ॥ पुनःपूर्ववदश्मानमास्थापयति ॥ आतिष्ठेममि
तिपुनःपूर्ववदानीयतथैवजुहोति ॥ इयंनार्युपब्रूतइतितृतीयमग्निंपर्याणयति ॥ विश्वाउतत्वयावयंधाराउदन्याइव ॥ अति
गाहेमहिद्विषइति ॥ एवंत्रिवारमश्मास्थापनंलाजहोमंप्रदक्षिणंचकृत्वापुनरुपस्तीर्योत्तरार्धात्सकृदवदायद्विरभिघार्यपं
चावत्तिनांतुत्रिरभिघारणं॥ वत्साविदाआर्ष्टिषेणजामदग्न्याइत्येतेपंचावत्तिनः ॥ नप्रत्यनक्तिअंजलिमंतःपरिधौनिधाय
व्याहृतीर्हुत्वापुरस्तात्स्रुवाहुतिंहुत्वा ॥ ॐअग्नयेस्विष्टकृतेस्वाहा ॥ अग्नयेस्विष्टकृतइदं ॥ इतीशानभागेस्विष्टकृतंहुत्वाला
जानामन्यत्रचतुर्थीहोमादिषुहव्यवाहमितिपुरोनुवाक्यामनूच्यस्विष्टमग्नइतियाज्ययाजुहोति ॥ पक्वत्स्वेवस्विष्टवती
भ्यांस्विष्टकृद्धोमः ॥ अन्यत्रनाममंत्रेणेति ॥ अथमेक्षणमग्नौप्रहृत्यांजलावुदकंपूरयित्वावैश्वानरेहविरिदमित्यादिसर्वंपूर्व
वत् ॥ दर्वीकार्यंसर्वमप्यंजलिनैवकुर्यात् ॥ अथजयप्रभृतिप्रायश्चित्तहोमांतंहुत्वापूर्णाहुतिंविनोत्तरपरिषेकादिसर्वंकृत्वा
ब्रह्मोद्वासनंप्रणीताविमोचनंचकृत्वादंपतीप्रोक्ष्यशेषंसमापयेत् ॥ नवग्रहहोमादिषु ॥ देवागातुविदः *॥* मूर्धानंदिवः*॥*
पूर्णाहुतिमुत्तमांजुहोतीतिपूर्णाहुतिंजुहुयात् ॥ इतिविवाहहोमप्रयोगः ॥ ॥ ७ ॥ ॥ अथगृहप्रवेशः ॥ बोधाय

नानांसामगानांचनगृहप्रवेशहोमः ॥ किंतुमंत्रपठणमेव ॥ यदावरोवधूमात्मगृहन्नयति ॥ तदैतमग्निंप्रत्यक्षमनुनयंति ॥
अत्रकारिका ॥ अथासीनांवधूमंकेपितृभ्रात्रादिकस्यतु ॥ हस्तेगृहीत्वानिष्क्रामेद्येवध्वश्चंद्रमीरयन् ॥ अथकश्चित्तमग्निं
तुप्रत्यक्षंसंतमाहितं ॥ आदायवरवध्वोस्तुपृष्ठतोनुव्रजेत्सहेति ॥ अत्रशिष्टाचारः ॥ येवध्वइत्युदूहनादिपंचमेहनिस्थालीपा
कपर्यंतंश्वशुरगृहएवकुर्वंति ॥ तस्यप्रयोगः ॥ अथविवाहहोमानंतरमेनांवधूंपित्र्याद्यंकेस्थितांदक्षिणेहस्तेगृहीत्वोद्वाहय
ति ॥ प्राणानायम्यदेशकालौसंकीर्त्यानयानवोढयावध्वासहगृहप्रवेशंकरिष्यइतिसंकल्प्य ॥ वधूदक्षिणहस्तेगृहीत्वोदूह्य
मानोजपति ॥ येवध्वश्चंद्रंवहतुंयक्ष्मायंतिजनाँ॒अनु ॥ पुनस्तान्यज्ञियादेवानयंतुयतआगताइति ॥ अथैनांस्ववाह
नमारोप्यस्वान्गृहानानयति ॥ पूषात्वेतोनयतुहस्तगृह्याश्विनौत्वाप्रवहतांरथेन ॥ गृहान्गच्छगृहपत्नीयथासोवशि
नीत्वंवितथमावदासीति ॥ अथपंथानंप्राप्यानुमंत्रयते ॥ सुगंपंथानमारुक्षमरिष्टँस्वस्तिवाहनं ॥ यस्मिन्वीरोनरिष्य
त्यन्येषांविंदतेवस्विति ॥ अथयदिपथिगच्छतओषधिवनस्पतिनदीवनानिवाप्राप्नोतितदायथालिंगंजपति ॥ याओषध
योयावनस्पतयोयानद्योयानिधन्वानियेवना ॥ तेत्वावतुप्रजावतींप्रत्वेमुंचंत्वंहसइत्यथजायांदक्षिणपादपुरस्सरंस्वगृ
हान्प्रापयति ॥ भद्रान्गृहान्सुमनसःप्रपद्येवीरघ्नीवीरवतःसुवीरान् ॥ इरांवहतोघृतमुक्षमाणास्तेष्वहंसुमनास्संविशा
नीति ॥ अथैनांवधूंकल्याणींवाचंवाचयति ॥ प्रजावतीपशुमतीरयिमतीपुष्टिमतीतेजस्विनीगृहमेधिनीयशस्विनीब्रह्मव
र्चस्विनीभूयासमिति ॥ अथलोहितमनडुहंचर्मप्राचीनग्रीवमुत्तरलोमकंग्रहमध्यआस्तीर्यतस्मिन्वधूमुपवेशयति ॥ इहगा

॥ अथामात्यास्तोक्मान्यारोपयत ॥ आ
व:प्रजायध्वमिहाश्वाइहपूरुषाः ॥ इहोसहस्रदक्षिणोरायस्पोषोनिषीदत्विति ॥ अथदंपतीनक्षत्रदर्श
भ्यांदंपतीभ्यांतोक्मानूहरिद्वर्णानूअंकुरार्पणकृतानलंकारानूआरोपयंते ॥ (अलंकुरुतइत्यर्थः) ॥ एधंते
नपर्यंतंवाचंविसृजेतां ॥ अथाहोरात्रयोस्संधिमीक्षमाणामनुमंत्रयते ॥ नीललोहितेभवतःकृत्यासक्तिर्व्यज्यते ॥ उदायुषास्वा
अस्याज्ञातयःपतिर्बंधेषुबध्यतामिति ॥ अथोदितेषुनक्षत्रेषूभौदंपतीवाचंविसृज्यवत्समन्वारभ्योत्तिष्ठतः ॥ उदायुषास्वा
युषोदोषधीनागुँरसेनोत्पर्जन्यस्यशुष्मेणोदस्थाममृतागुँअन्विति ॥ अथप्राचीमुदीचींवादिशमुपनिष्क्रम्यध्रुवमरुंधतींच
वधूंदर्शयति ॥ ध्रुवोसिध्रुवक्षितिर्ध्रुवमसिध्रुवतःस्थितः ॥ तंनक्षत्राणांमेध्यसिसमापाहिपृतन्यतइति ध्रुवं ॥ सप्तर्षयःप्र
थमांकृत्तिकानामरुंधतीं ॥ येध्रुवतागुँहनिन्युः ॥ षट्कृत्तिकामुख्ययोगंवहंतीयमस्माकमेधत्वमी ॥ इत्यरुंधतींवधूंदर्श
यिलाव्रतग्रहणंकुर्यात् ॥ इतिगृहप्रवेशप्रयोगः ॥ ॥ ५ ॥ ॥ अथाग्नेःपश्चादुभावुपविश्यस्त्रियान्वारब्धःप्राणाना
यस्यदेशकालौसंकीर्त्यानयानवोढयावध्वासहविवाहव्रतग्रहणंकरिष्यइतिसंकल्प्यान्वाधानंकृत्वा परिसमूह्यपर्युक्ष्यपरि
स्तीर्यजुषस्वनइत्याद्यग्न्यलंकरणांतंकृत्वाथपालाशीश्चतस्रःसमिधआर्द्रास्सपलाशास्सप्रारोहाःप्रादेशमात्राःप्रतिशुक्रा
ग्राघृतान्वक्ताअभ्याधापयन्वाचयतियज्ञवृक्षसामिधोवा ॥ ॐअग्नेव्रतपतेवैवाहंव्रतंचरिष्यामितच्छकेयंतन्मेराध्यतागुँ
स्वाहा ॥ अग्नयेव्रतपतयइदं ॥ १ ॥ ॐवायोव्रतपतेवैवाहंव्रतंचरिष्यामितच्छकेयंतन्मेराध्यतागुँस्वाहा ॥ वायवेव्रतपत
यइदं ॥ २ ॥ ॐआदित्यव्रतपतेवैवाहंव्रतंचरिष्यामि ÷ राध्यतागुँस्वाहा ॥ आदित्यायव्रतपतयइदं ॥ ३ ॥ ॐव्रतानां

व्रतपतेवैवाहंव्रतंचरिष्यामितच्छकेयंतन्मेराध्यतागुँस्वाहा ॥ व्रतानांव्रतपतयइदं ॥ ४ ॥ पुनर्जुषस्वनइत्यादि ॥ अने
नव्रतोपक्रमहोमकर्मणाश्रीपरमेश्वरःप्रीयतां ॥ इतिव्रतग्रहणंकृत्वात्रिरात्रंव्रतंचरतः ॥ अक्षारलवणाशिनावधःशायिनौ
ब्रह्मचारिणावासाते॥अहतानांचवाससांपरिधानगुँसायंप्रातश्चालंकरणमिषुप्रतोदयोश्चधारणमग्निपरिचर्ययाचेतिसूत्रं॥
अत्रब्रह्मचर्यन्नामाष्टांगमैथुनवर्ज्यं॥तल्लक्षणमाहबृहस्पतिः ॥ स्मरणंकीर्तनंकेलिःप्रेक्षणंगुह्यभाषणं॥ संकल्पोध्यवसाय
श्चक्रियानिर्वृतिरेवच ॥ एतन्मैथुनमष्टांगंप्रवदंतिमनीषिणः ॥ विपरीतंब्रह्मचर्यंतदेवाष्टांगलक्षणमिति ॥ अत्रस्नानव
र्ज्यंत्रिरात्रंवसतः ॥ तयोःशय्यायाअधःपुरुषमात्रऔदुंबरदंडइतिविष्णुभट्टः ॥ अरत्निमात्रइतिप्रयोगरत्ने॥ बंधेव्रतेग्निं
परिषिच्यसम्यगौदुंबरंदंडमरत्निमात्रं ॥ वस्त्रेणसूत्रैरथवापरीतमधःक्षिपेदास्करएरकायाइति ॥ अरत्निमात्रमौदुंबरं
दंडंसूत्रवेष्टितंगंधानुलिप्तंशय्यायाअधःस्थापयित्वाव्रतविसर्जनपर्यंतंनोद्धरेत् ॥ इतिव्रतग्रहणंकृत्वाऔपासनंकुर्यात् ॥
तस्यकालनिर्णयः॥ आश्वलायनधर्मे॥रात्रावहनिवादानंकन्यायाःस्वीकृतिर्यदा॥तदानीमेवहोमःस्याद्विवाहस्यचसिद्धये॥
विवाहश्चेद्भवेद्रात्रौसार्धयामद्वयादधः॥तदैवौपासनंकुर्यात्केचित्गृह्यविदोविदुः॥२॥ नित्यहोमेतुकालःस्याद्रात्रौनाडीनवा
त्मकः॥द्विगुणःस्याद्विवाहेतुप्रवदंतिमहर्षयः ॥३॥ स्मार्तप्रदीपिकायां॥रात्रिंत्रेधाविभज्यादिमभागद्वयेविवाहहोमसमाप्ति
श्चेत्तदानीमेवौपासनारंभःकार्यः॥अन्यथापरेद्युरेवेति ॥ प्रयोगदर्पणे॥ प्रदोषांतोहोमकालइतिसूत्रं॥संगवांतःप्रातइतिच॥
प्रदोषोनवनाडिकेतिस्मृतेश्च ॥ शौनकस्तु ॥ पश्चादस्तमयात्कालोयोभवेत्रिमुहूर्तकः ॥ ससायंहोमकालश्चप्रदोषांतउ

दाहृतः ॥ यत्तुषण्णाडिकःकालःपश्चादेवोदयाद्भवेः ॥ सहोमकालोविप्राणांसंगवांतइतिस्मृतइति ॥ रात्रौप्रदोषोमुख्यः स्यादितिवेदविदोविदुरिति ॥ (प्रदोषोरजनीमुखमित्यमरकोशः) ॥ इदन्नित्यहोमपरं ॥ प्रथमारंभस्तुअष्टादशघटिकाम ध्येविवाहहोमसमाप्तिश्चेत्तदानीमेवौपासनारंभः ॥ अन्यथापरेद्युरेवेति ॥ इत्यौपासनकालनिर्णयः॥ ॥७॥ ॥अथौ पासनप्रयोगः ॥ अथप्रथमौपासनेव्रतग्रहणानंतरमग्नेः पश्चाद्दर्भेषुसपत्नीकोवरः प्राङ्मुखउपविश्य द्विराचम्यप्राणा नायम्यदेशकालौसंकीर्त्य औपासनारंभंकर्तुंस्वस्तिपुण्याहवाचनंकरिष्ये ॥ तदंगत्वेनगणपतिपूजांकरिष्यइतिसंक ल्प्य तत्कृत्वास्यौपासनारंभकर्मणःपुण्याहंस्वस्त्यृद्धिमितिवाचयित्वाशिवंकर्मास्तुअग्निसूर्यप्रजापतयः प्रीयंतामितिविशे षः ॥ एवंपुण्याहंवाचयित्वापूर्ववदुपविश्याचमनप्राणायामौकृत्वापत्न्यान्वारब्धोदेशकालौसंकीर्त्यममोपात्तदुरितक्षयद्वा राश्रीपरमेश्वरप्रीत्यर्थंपयआदिष्वौपासनद्रव्येष्वन्यतमद्रव्येणयावज्जीवंसायंप्रातरौपासनंकरिष्ये ॥ तत्रेदानींसायमौ पासनाहुतिर्व्रीहिभिर्होष्यामीतिसंकल्प्य ॥ जुष्टोदमूनाइत्युपस्थायाथैनंप्रत्यक्दक्षिणमग्निंपरिसमूह्यपर्युक्ष्यपरिस्तीर्य तदुत्तरतःपात्रेहवनीयद्रव्यंनिधायदर्भद्वयमग्नौप्रज्वाल्यहोमद्रव्यंप्रागादित्रिः प्रदक्षिणंपर्यग्निकृत्वाउदकूनिरस्यापउपस्पृ श्याग्नेःपश्चाद्दर्भेष्वासाद्य ॥ जुषस्वनस्समिधमग्नेअद्यशोचाबृहद्यजतंधूममृण्वन् ॥ उपस्पृशंदिव्यगुँसानस्तूपैस्सगुँ रश्मिभिस्ततनस्सूर्यस्येत्यथैनंप्रदक्षिणमग्निंपरिषिच्य अदितेनुमन्यस्वेतिदक्षिणतः प्राचीनमनुमतेनुमन्यस्वेतिपश्चादु दीचीनगुँसरस्वतेनुमन्यस्वेत्युत्तरतःप्राचीनंदेवसवितः प्रसुवेतिसमंतंप्रदक्षिणंप्रागादिपरिषिच्य ॥ अग्नयेनमः ॥ जात

वेदसे ॥ सहोजसे ॥ आजिराप्रभवे ॥ वैश्वानराय ॥ नर्यापसे ॥ पंक्तिराधसे ॥ विसर्पिणेनमः ॥ इत्यष्टनामभिरष्टदि
क्षुगंधाक्षतादिभिरलंकृत्य ॥ अग्निंप्रज्वलितंवंदेजातवेदंहुताशनं ॥ सुवर्णवर्णमनलंसमिद्धंविश्वतोमुखं ॥ इतिनमस्कृ
त्यतूष्णीमेकांसमिधमग्नौनिधायतस्यामादीप्तायांतत्पश्चिमभागेहोमद्रव्यंगृहीत्वाहस्तबिलेप्राङ्मुखंप्रबाहुग्जुहोति ॥
ॐअग्नयेस्वाहा ॥ अग्नयइदं ॥ १ ॥ पुनःपूर्वाधिकंगृहीत्वातांदक्षिणतोतिहायसमिध्येवपूर्वभागेप्रत्यग्घस्तबिलेनासं
स्पृष्टंप्रतिमुखंप्रबाहुंमनसैवजुहोति ॥ प्रजापतयेस्वाहा ॥ प्रजापतयइदं ॥ २ ॥ आहुतिप्रमाणमुक्तंसूत्रे ॥ व्रीहीणां
वायवानांवाशतमाहुतिरिष्यतेइति ॥ निर्वापणसंस्रावणलाजहोमनित्यहोमांश्चकायतीर्थेनकुर्यात् ॥ (कनिष्ठिकामूलदेशः
कायतीर्थमित्युच्यते ) ॥ पुनर्जुषस्वनइत्यादिपूर्ववत्परिषिंचत्यदितेन्वमग्ँस्थाः ॥ अनुमतेन्वमग्ँस्थाः ॥ सरस्वतेन्वम
ग्ँस्थाः ॥ देवसवितःप्रासावीरितिपरिषिच्यतूष्णीमेकांसमिधंनिधायउत्थायाथैनमुपतिष्ठते ॥ यत्तेअग्नेतेजइतित्रिभिःपर्या
यैर्मयिमेधांमयिप्रजामितितिसृभिरथोपविश्य मानस्तोकइत्युपस्थायाग्नेरुत्तरभागेपूर्वभागेवानामिकयाभस्मगृहीत्वा ओ
जोसीतिसप्तभिस्सप्तस्थानानिरुपृष्ट्वा श्रद्धांमेधामित्यग्निमाशिषःप्रार्थयित्वास्वगोत्रप्रवरमुक्त्वाभिवाद्याग्निंप्रदक्षिणीकृत्य
अग्नेनयसुपथारायेअस्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठांतेनमउक्तिंविधेम ॥ प्रवः
शुक्रायेत्यादीनुक्त्वानमस्कुर्यात् ॥ यदिपरिस्तृणातिनतान्प्रहरातिधारयत्येवइतिसायमौपासनं ॥ अथप्रातरौपासनं ॥
प्राणायामादिकंकृत्वाप्रातरौपासनाहुतिंतंडुलैर्होष्यामीतिसंकल्प्य व्रीहिभिर्वातत्राग्निस्थानेसूर्यायस्वाहा ॥ सूर्याये

दं ॥ तामुत्तरतोतिहायद्वितीयामाहुतिंपूर्वतोभूयसीमवदायतद्वदेवप्रतिमुखंप्रबाहुग्जुहोति ॥ प्रजापतयेस्वाहेतिमनसा ॥ शेषंसमानं ॥ अनेनप्रातरौपासनकर्मणाश्रीपरमेश्वरःप्रीयतां ॥ इत्यौपासनप्रयोगः ॥ ॥ ७ ॥ ॥ अथ सायमौपासनानंतरंदंपत्योःसहभोजनमुक्तंहेमाद्रौगालवः॥ विवाहकालेयात्रायांपथिचोरसमाकुले॥ असहायोभवेद्विप्र स्तदाकार्यंद्विजन्मभिः ॥ एकासनसमारोहमेकपात्रेचभोजनं ॥ विवाहेपथियात्रायांकृत्वाविप्रोनदोषभाक् ॥ अन्यथादो षमाप्नोतिपश्चाच्चांद्रायणंचरेदिति ॥ स्मृत्यर्थसारे ॥ विवाहेदंपतीस्यातांत्रिरात्रंब्रह्मचारिणौ ॥ अलंकृतोवधूश्चैवसहश य्यासनाविति ॥ क्षारलवणंवर्जयित्वात्रिरात्रमेवंव्रतंकृत्वाचतुर्थ्यांपक्कहोमंकुर्यात् ॥ अथचतुर्थीप्रयोगः ॥ अथचतुर्थ्यां रात्रेरपरभागेबुद्ध्वावधूवरौहस्तपादौप्रक्षाल्य द्विराचम्यप्राणानायम्यतदुत्तरतः स्थंडिलोल्लेखनादिकंकृत्वातमेवाग्निंप्रति ष्ठाप्यपुनःप्राणानायम्यदेशकालौसंकीर्त्यश्रीपरमेश्वरप्रीत्यर्थमनयानवोढयावध्वासहचतुर्थ्यांरात्रौपक्कहोमंकरिष्ये ॥ च तुर्थीपक्कहोमःकर्माघारवत्तंत्रंपंचदशदारुरिध्मोग्नीषोमावाज्यभागौपक्कमोदनंपायसंवाहविर्जातवेदोग्निर्देवताअग्निः स्विष्ट कृदाज्यस्यमांत्रवर्णिक्योदेवताअंगदेवताइत्याद्युक्त्वाएवंसांगेनकर्मणासद्योयक्ष्ये ॥ तदंगमन्वाधानंकरिष्यइतिसंक ल्प्यतत्कृत्वापात्रासादनकाले ॥ आज्यस्थालींस्रुवंचैवदर्वींचस्रुचमेवच ॥ प्रणीतांप्रोक्षणींचैवचरुस्थालींसमेक्षणां ॥ इध्मं चबर्हिषंचैवयैरन्यैश्चप्रयोजनं ॥ इत्यासाद्याप्रणीताभ्यःकृत्वातिरःपवित्रंचरुस्थाल्यांतंडुलान्निर्वपति ॥ देवस्यत्वा ० ह स्ताभ्यां ॥ जातवेदसेग्नयेजुष्टंनिर्वपामीतित्रिर्मंत्रेणतूष्णींचतुर्थं॥देवस्यत्वा ० हस्ताभ्यांजातवेदसेग्नयेवोजुष्टंप्रोक्षामीति

सकृन्मंत्रेणद्विस्तूष्णींप्रोक्ष्याग्नावधिश्रित्याथाज्यमाधिश्रित्योभयंत्रि : पर्यग्निकृत्वामेक्षणंस्त्रुवंचसंमार्ष्ट्यथैनंचरुगुँश्रपयित्वा
भिघार्योदंचमुद्वास्यप्रतिष्ठितमभिघारयतिपरिधानप्रभृत्याग्निमुखान्तंकृत्वा स्त्रुवेणदर्व्यामुपस्तीर्यपूर्वार्धाच्चरोरवदायापरा
र्धादवद्यत्यभिघारयतिप्रत्यनक्तिपुरस्तात्स्त्रुवाहुतिंहुत्वा ॥ ॐयस्त्वाहृदाकीरिणामन्यमानोमर्त्यंमर्त्योजोहवीमि ॥ जात
वेदोयशोअस्मासुधेहिप्रजाभिरग्नेअमृतत्वमश्यां यस्मैत्वगुँसुकृतेजातवेदउलोकमग्नेकृणवस्योनं ॥ अश्विनगुँसपुत्रिणंवी
रवंतंगोमंतगुँरयिन्नशतेस्वस्तिस्वाहा ॥ जातवेदसेग्नयइदं ॥ उपरिष्टात्स्त्रुवाहुतिंहुत्वा ॥ पुनर्दर्व्यामुपस्तीर्यउत्तरा
र्धात्सकृच्चरुमवदायाद्विरभिघार्यातः परिधौनिधायाथाज्याहुतीरुपजुहोति ॥ ॐअग्नेप्रायश्चित्तेत्वंदेवानांप्रायश्चित्तिरसि
ब्राह्मणस्त्वानाथकामः प्रपद्येयास्यांपतिघ्नीतनूःप्रजाघ्नीपशुघ्नीलक्ष्मिघ्नीजारघ्नीमस्यैतांकृणोमिस्वाहा ॥ अग्नयेप्रायश्चि
त्तायेदं ॥ १ ॥ ॐवायोप्रायश्चित्तेत्वंदेवानां ०॥० वायवेप्रायश्चित्तायेदं ॥ २ ॥ ॐआदित्यप्रायश्चित्तेत्वंदेवानांप्रायश्चि
त्तिरसि ०॥० आदित्यायप्रायश्चित्तायेदं ॥ ३ ॥ ॐप्रजापतेप्रायश्चित्तेत्वंदेवानांप्रायश्चित्तिरसि ०॥० ब्राह्मणस्त्वानाथका
मःप्रपद्येयास्यांपतिघ्नीतनूः प्रजाघ्नीपशुघ्न्यलक्ष्मिघ्नीजारमस्यैतांकृणोमिस्वाहा ॥ प्रजापतयेप्रायश्चित्तायेदं ॥ ४ ॥
व्याहृतीर्हुत्वापुरस्तात्स्त्रुवाहुतिंहुत्वा ॥ ॐहव्यवाहमभिमातिषाहगुँरक्षोहणंपृतनासुजिष्णुं ॥ ज्योतिष्मंतंदीद्यतंपु
रंधिमग्निगुँस्विष्टकृतमाहुवेमागुँस्विष्टमग्नेअभितत्पृणाहिविश्वादेवपृतनाअभिष्य ॥उरुन्नः पंथांप्रदिशन्विभाहिज्योतिष्मद्धे
ह्यजरन्नआयुःस्वाहा ॥ अग्नयेस्विष्टकृतइदं ॥ उपरिष्टात्स्त्रुवाहुतिंहुत्वामेक्षणमग्नौप्रहृत्यपरिध्यपांनिनयनाद्युत्तरपरिषेका

त्साकृत्वाथवधूमूर्ध्निहिरण्यमंतर्धायाज्यशेषेणसगुँस्रावंजुहु ॥ ॐभूस्वाहा ॥ अग्नयइदं ॥ ॐभुवःस्वाहा ॥वायवइदं ॥ ॐगुँसुवःस्वाहा ॥ सूर्यायेदं ॥ ॐभूर्भुवस्सुवःस्वाहा ॥ प्रजापतयइदं ॥ ओगुँस्वाहा ॥ब्रह्मणइदं ॥अत्रकारिका ॥ आज्यशेषेणजुहुयाव्द्याहृतिप्रणवैःक्रमात् ॥ हिरण्यमंतर्धायैवमूर्ध्निवध्वाअथार्थितइति ॥ प्रयोगरत्ने ॥ तिष्ठन्प्राक्परिषेकतोथनिहितस्वर्णेवधूमूर्धनीति ॥ उपविश्यमूर्ध्निसगुँस्रावंजुहोतीतिकेचित् ॥ तिष्ठन्निति कुमारस्वामिकारिकायां ॥ तिष्ठन्नितिशिष्टाचारः ॥ अथैनांप्रदक्षिणमग्निंपर्याणयति ॥ अर्यम्णोअग्निंपरियंतुक्षिप्रं ॥ प्रतीक्षंतागुँश्वश्रुवोदेवराश्चेति ॥ अथाग्नेःपश्चात्पूर्ववदुपविश्यजुषस्वनइत्याद्युत्तरपरिषेकंप्रणीताविमोकंब्रह्मोद्वासनंचकुर्यात् ॥ इतिचतुर्थीहोमः ॥ ७ ॥ ॥ ॥ ७ ॥ ॥ अथव्रतविसर्जनं ॥ प्राणानायम्यदेशकालौसंकीर्त्यानयानवोढयावध्वासहचतुर्थ्यांरात्रौविवाहव्रतविसर्जनहोमंकरिष्यइतिसंकल्प्य तत्राग्निर्वाय्वादित्यव्रतपतयोदेवताआज्याक्तपालाशसमिधोद्रव्यंसद्योयक्ष्यइत्युक्त्वान्वाधानंकृत्वाग्न्यलंकरणांतंसर्वंपूर्ववत्कृत्वापूर्वोक्तास्समिधोघृतान्वक्ताअभ्याधापयन्वाचयति ॥ ॐअग्नेव्रतपतेवैवाहंव्रतमचारिषंतदशकंतन्मेराधिस्वाहा ॥ वायोव्रतपतेवैवाहंव्रतमचारिषंतदशकं ॥ आदित्यव्रतपतेवैवाहंव्रतमचारिषं ॥ व्रतानांव्रतपतेवैवाहंव्रतमचारिषंतदशकंतन्मेराधिस्वाहा ॥ पूर्ववदुद्देशत्यागः ॥ जुषस्वनइत्यादिसर्वंपूर्ववत् ॥ इतिव्रतंविसृज्याथशय्यायांदंडमुत्थापयति ॥ ऊर्ध्वःपृथिव्याअध्युत्थितोसिवनस्पतेशतवल्शोविरोह ॥ त्वयावयमिषमूर्जंवदंतोरायस्पोषेणसमिषामदेमेति ॥ अथैनंदंडंवध्वैप्रयच्छति ॥ प्रजायात्वासगँसृजामिमास्मरेणस्मरामिवेति ॥ तंवधप्रतिगृह्णाति ॥

प्रजावतीभूयासमिति ॥ अथैनंवरायप्रयच्छति ॥ प्रजयात्वासगुँसृजामिमासरेणसुरामिवेति ॥ तंवरःप्रतिगृण्हातिप्रजा वान्पशुमान्भूयासमित्यथैनंस्थूणादेशेनिदधाति ॥ (स्तंभोपरिनिदधातीत्यर्थः )इतऊर्ध्वंश्रौताधानपर्यंतंगृह्याग्निरजस्त्रो नित्योधार्यः ॥ अथवासमारोप्यकर्मण्युपावरोह्यतत्रकुमारस्वामिकारिका ॥ विवाहाग्नेरजस्त्रत्वंयावद्ब्रह्मौदनंपचेत् ॥ अज स्त्रधारणाशक्तौगृह्याग्नेरपिवागृही ॥ याज्ञिक्यांसमिधिस्यात्तमारोप्यायंतइत्यृचा ॥ होमकालेक्षिपेदग्नौलौकिकेसमिधंतु तां ॥ आजिव्हानोत्तमंत्राभ्यांकुर्यात्कर्माणितत्रतु ॥ औपासनादिगृह्याणिकुर्वीतैवंपुनःपुनरिति ॥ शिष्टास्तुपंचमेहनिपार्व णस्थालीपाकहोमानंतरंसमारोपणंकुर्वंति ॥ ४ ॥ अथोपसंवेशनं ॥ तत्रकारिका ॥ होमदेशात्ततोगच्छेदागारंसर्वशोभनं ॥ कुड्येलिखितपद्मास्त्रिःस्वस्तिकादिविभूषितं॥मूर्ध्नदेशोपरिक्षिप्तसादर्शपूर्णकुंभकं॥घृतवर्तिप्रदीपैश्चदीप्तंप्रतिदिशंकृतैः॥गं धपुष्पाढ्यतल्पस्थांवधूमनुनिषिद्यसः॥इतिगृह्यसूत्रे ॥ अथश्रीमंतमागारगुँसंमृष्टोपलिप्तंगंधवंतंपुष्पवंतंधूपवंतंदीपवंतंतंत ल्पवंतगुँसाधिवासंदिक्षुसर्पिस्सूत्रेंधनप्रद्योतितमुदकुंभादर्शोस्थिरसंप्रपाद्यतस्मिन्नेनागुँसंवेश्यतस्यांतिकेजपतीति ॥ दि क्षुसर्पिःसूत्रेंधनप्रद्योतितामित्याज्याक्तसूत्राणिकाष्ठानामग्रेषुसंयोज्यप्रज्वाल्यचतुर्दिक्षुस्थापयेदित्यर्थः ॥ एवंपूर्वोक्तप्रका रेणनानाविधमंगलैरुपशोभितंवितानवंतमागारंप्रविश्यवधूंशय्यायामशाययित्वातस्यास्समीपेस्वयमुपविश्यजपति ॥ उ दीर्ष्वातोविश्वावसोनमसेडामहेत्वा ॥ अन्यामिच्छप्रफर्व्यागुँसंजायांपत्यासृज॥उदीर्ष्वातःपतिवतीह्येषाविश्वावसुन्नमसा गीर्भिरीट्टे ॥ अन्यामिच्छपितृषदव्यक्तागुँसतेभागोजनुषातस्यविद्धीति ॥ अथास्यायोनिंविवृणोति ॥ प्रजायैत्वासगुँसृजा

मिमासरेणसुरामिवेति ॥ अथैनामुपसंवेशयति(संयोगंकरोतीत्यर्थः) ॥ प्रजापतिःस्त्रियांयशइत्येतमनुवाकमुक्त्वामिथुनी भूयसायद्यश्रुकुर्यात्तामनुमंत्रयते ॥ जीवाᳯँरुदंतीविमयंतोअध्वरेदीर्घामनुप्रसितिंदीधियुर्नरः ॥ वामंपितृभ्योयइदᳯँस मेरिरेमयःपतिभ्योजनयः परिष्वजइति ॥ अथवरः प्राणानायम्यदेशकालौसंकीर्त्यममतांबूलचर्वणयोग्यतासिद्ध्यर्थं श्रीलक्ष्मीनारायणप्रीत्यर्थंतांबूलदानंकरिष्यइतिसंकल्प्य ॥ ब्राह्मणान्संपूज्यदक्षिणासहितंतांबूलंगृहीत्वा ॥ तांबूलं श्रीकरंभद्रंब्रह्मविष्णुशिवात्मकं ॥ तस्मादस्यप्रदानेनअतःशांतिंप्रयच्छमे ॥ इतिदत्वाएवमेवस्त्रीभ्यश्चदद्यात् ॥ अ थाचार्यस्त्रीर्थस्तयोर्मध्येतांबूलानिविकिरंति ॥ तानिवधूवरौसंगृह्यभक्षणंकुर्वंतः ॥ ततआरार्तिकंकृत्वाब्राह्मणामंत्राक्षता न्दद्युः ॥ अत्रयोनिविवृणनादिकंनकुर्वंतिशिष्टैरनाचरितत्त्वात्लौकिकविरोधाच्च ॥ किंतुमंत्रावृत्तिरेव ॥ इतिचतुर्थीप्रयो गस्समाप्तः ॥ ४ ॥ अथपंचमेहनिस्थालीपाकप्रयोगः ॥ गंधाक्षतपुष्पलाजपिष्टादिकंगृहीत्वा ॥ यत्रैकमूलउदुंबरोवृक्ष स्तिष्ठति ॥ (एकमूलस्तरुणवृक्षइत्यर्थः) ॥ वृद्धवृक्षस्यबहुमूलत्वात्तत्रगत्वाचम्यप्राणानायम्यदेशकालौसंकीर्त्यममपंच मेहनिविवाहांगतयाविहितमुदुंबरपूजांकरिष्ये ॥ तदंगत्वेनगणपतिपूजांकरिष्यइतिसंकल्प्य गणपतिंसंपूज्याथौदुंब रस्येशानीमारभ्यप्रदक्षिणांपरिसमूह्यपर्युक्ष्यप्रदक्षिणंगंधैरनुलिंपन्जपति ॥ यथात्वंवनस्पतऊर्जाभ्युत्थितः शतवल्शो विरोहस्येवमहंपुत्रैश्चपशुभिश्चसहस्रवल्शाविवयᳯँरुहेमेतितस्यमूलंपुष्पैः प्रच्छादयति ॥ यथात्वंवनस्पतेफलवान्स्ये वमहंपुत्रैश्चपशुभिश्चफलवंतोभवानीतितत्रैवत्रिवृदन्नेनबलिमुपहरति ॥ तल्लक्षणंतु ॥ अन्नंचापित्रिवृद्धियाद्दलाब्राह्म

णभोजने ॥ भक्षंभोज्यंचपेयंचेत्येतत्समुदितंत्रिवृदिति ॥ ऊर्जस्वान्पयस्वान्पयसापिन्वमानास्मान्वनस्पतेपयसाभ्या
ववृत्स्वेति ॥ गंधपुष्पधूपदीपनैवेद्यनमस्कारांतंकृत्वाथौदुंबरपूजाकर्मांगतयाविहितंस्वस्तिपुंण्याहवाचनंकरिष्यइतिसं
कल्प्यास्यौदुंबरपूजाकर्मणःपुंण्याहंस्वस्त्यृद्धिमितिवाचयित्वावनस्पतिः प्रीयतामितिविशेषः ॥ एवंपुंण्याहंवाचयित्वाशौ
नकोक्तवसंतंपूजयेत् ॥ यथा ॥ उदुंबरमूलेष्टदलपद्मंविलिख्यकुंकुमोदकपूर्णंहरिद्रोदकपूर्णंवाकलशंनिधायप्राणानाय
म्यममविवाहांगतयाविहितांपंचमेहनिवसंतपूजांकरिष्यइतिसंकल्प्य ॥ कनकारुणमासुरंप्रपन्नंहयवक्त्रंमदनस्यसाहच
र्यं ॥ द्विभुजंधृतपल्लवप्रसूनंभजतामिष्टदमर्चयेद्वसंतं ॥ इतिध्यात्वावसंतायनमइतिध्यानावाहनादिषोडशोपचारान्कृत्वात
ज्जलंबंधुभिस्सहान्योन्यमभिषेकंकुर्वतः ॥ इत्थंसंपूज्यविधिनाअभिषेकंसमाचरेत् ॥वसंतादींश्चसंतर्प्यदिङ्नागान्दिक्पती
नपि ॥ ब्राह्मणैर्बंधुभिःसार्धमभिषिंचेच्चतज्जलमिति॥ अथौदुंबरंप्रदक्षिणीकृत्यपूर्वस्थूणादेशेस्थापितदंडमप्सुप्रास्याथतत्रैव
जानुदघ्नजलभवतीर्यप्राचीनदेशेनाहतेनवाससामत्स्यान्गृण्हीतः ॥ पिष्टमयानितिकुमारस्वामी ॥ गृण्हीतपौष्टिकानत्र
मत्स्यान्प्राग्दशवाससेति ॥ पिष्टमयान्वामत्स्यान्जलपूर्णपात्रेस्थापयित्वाब्रह्मचारिणंपश्येत्युक्त्वाथदंपतीपृच्छतः ॥ ब्र
ह्मचारिन्किंपश्यसीतिसपृष्टः प्रतिब्रूयात्पुत्राँश्चपशूँश्चपश्यामीति ॥ अथैतान्मत्स्यानुदुंबरमूलेबकानांबलिमुपह
रति ॥ दीर्घायुत्वायवर्चसइति ॥ अत्रैवनिर्माल्यानिपरिभुक्तानिवासाँसिप्रतिसराँश्चविसृज्यौदुंबरशाखायांसँसृज्य
नापितकर्मकुर्वंतितस्मैपयोदनंदत्वाक्षौरनखकृंतनादिकंकृत्वाजलसमीपंगत्वा ॥ प्रतियुतोवरुणस्यपाशः प्रत्यस्तोवरुण

स्यपाशइत्यपोवगाह्योत्तीर्यान्योन्यमलंकृत्य रक्तानिवासांगुँसिपरिधायाहतानिवा।द्विराचम्यगृहमागत्यपादौप्रक्षाल्याच
म्यस्थालीपाकंकुर्यात् ॥ अथकर्ताप्राणानायम्यकरिष्यमाणस्थालीपाककर्मणोनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजांकरिष्य
इतिसंकल्प्य तत्कृत्वापुनःप्राणानायम्यपंचमेहनिस्थालीपाकहोमंकर्तुंशांत्यर्थमित्यादिस्वस्तिपुंण्याहवाचनंकरिष्यइति
संकल्प्य स्थालीपाककर्मणःपुंण्याहंस्वस्त्यृद्धिमितिवाचयित्वाग्निःप्रीयतामितिविशेषः ॥ प्रोक्षणांतंकृत्वाचस्यप्राणानाय
म्यदेशकालौसंकीर्त्यानयानवोढयावध्वासहपंचमेहन्याग्नेयस्थालीपाकंकरिष्यइतिसंकल्प्य स्थंडिलोल्लेखनादिकंकृत्वात
मेवौपासनाग्निंप्रतिष्ठाप्याग्नेयस्थालीपाकहोमः कर्माघारवत्तंत्रंपंचदशदारुरिध्मअग्नीषोमावाज्यभागौपचनोनामाग्निरग्नि
र्देवताअग्निःस्विष्टकृत् ॥ आज्यस्यमांत्रवर्णिक्योदेवताइत्यादिसंकल्प्यान्वाधानाद्याप्रणीताभ्यःकृत्वातंडुलान्निर्वपति ॥
देवस्यत्वा ॥ हस्ताभ्यांअग्नयेजुष्टंनिर्वपामीतित्रिस्तूष्णींचतुर्थं ॥ देवस्यत्वा ॥ हस्ताभ्यांअग्नयेवोजुष्टंप्रोक्षामीतिसकृ
न्मंत्रेणद्विस्तूष्णींप्रोक्ष्यात्रिः प्रक्षाल्यस्थाल्यांतिरः पवित्रंनिधायापः पयोवानीयाग्नावधिश्रित्यातिरःपवित्रंतंडुलानोप्याधि
श्रयत्यथाज्यंनिरूप्यपर्यग्निकरणाद्यभिघारणांतंकुर्यात् ॥ अथस्रुवेणदर्व्यामुपस्तीर्यपूर्वार्धाच्चरोरवदायापरार्धादवद्यत्य
भिघारयतिप्रत्यनक्तिपुरस्तात्स्रुवाहुतिंहुत्वा ॥ ॐअग्निर्मूर्धादिवःककुत्पतिःपृथिव्याअयं॥अपांगुँरेतांगुँसिजिन्वतोंभुवो
यज्ञस्यरजसश्चनेतायत्रानियुद्भिःसचसेशिवाभिः॥दिविमूर्धानंदधिषेसुवर्षांजिव्हामग्नेचकृषेहव्यवाहगुँस्वाहा ॥अग्नयइदं
॥ अथस्विष्टकृतमवदायांतःपरिधौनिधायव्याहृतीर्हुत्वास्विष्टकृदादिसर्वंपूर्ववत् ॥ इतिस्थालीपाकहोमविधिः ॥ ७ ॥

अथसमारोपणं ॥ पालाशीमाश्वत्थीमौदुंबरींखादिरींवासमिधमादायपत्न्यान्वारब्धः ॥ ॐअयंतेयोनिर्ऋत्वियोयतोजा
तोअरोचथाः ॥ तंजानन्नग्नआरोहाथानोवर्धयारयिं ॥ इतिसमारोप्याथास्तमितआदित्येस्थंडिलोल्लेखनादिकंकृत्वालौ
किकाग्निंप्रतिष्ठाप्याजुह्वानउद्बुध्यस्वाग्नइति द्वाभ्यामारोपितसमिधमग्नावाधायसायमौपासनंहुत्वासमारोप्याथवधूवरा
वन्योन्यमलंकृत्यवाग्यतौशय्यांगच्छतः ॥ तत्रवरोवधूमभिमंत्रयते ॥ सुमंगलीरियंवधूरिमाँसमेतपश्यत ॥ सौभाग्यम
स्यैदत्वायाथास्त्वंविपरेतनेति ॥ अथैतस्यास्सर्वसुरभिपुष्पमालाःशिरसियुनक्ति ॥ सन्नाम्नस्सगुँहृदयानिवः ॥ स
न्नाम्नस्संतनुत्वचः ॥ संत्वाकामस्ययोक्त्रेण ॥ युंज्याम्यविमोचनायेति ॥ इतिपंचमेहनिप्रयोगः ॥ ॥ ५ ॥ ॥ अथ
गृहप्रवेशः ॥ तत्रादौकालनिर्णयःनिर्णयसिंधौ ॥ संग्रहे ॥ विवाहमारभ्यवधूप्रवेशोयुग्मेतिथौषोडशवासरांतात् ॥
ऊर्ध्वंततोब्देयुजिपंचमाब्दादतःपरस्तान्नियमोयचास्ति ॥ १ ॥ नारदः ॥ समवर्षेसमेमासियत्रनारीगृहंव्रजेत् ॥ आयु
ष्यंहरतेभर्तुस्सानारीमरणंव्रजेत् ॥ संग्रहे ॥ विवाहादिचतुर्थेतंषोडशेदिनएववा ॥ युग्मास्वातिथयोवाह्निप्रवेशेमंगलप्रदाः
॥ ३ ॥ षष्ठष्टमेवादशमेदिनेवाविवाहमारभ्यवधूप्रवेशः ॥ पंचांगसंशुद्धदिनंविनापिविधेयमाहुर्मुनयःप्रशस्तं ॥ ४ ॥ मा
सदोषश्चादिवर्षेवर्षदोषोद्वितीयके ॥ गृहप्रवेशेवैवाहेनचतुर्नचषष्ठके ॥ ५ ॥ वधूप्रवेशःप्रथमेचवर्षेतृतीयवर्षेपिशुभप्रदः
स्यात् ॥ द्वितीयवर्षेप्यथवाचतुर्थेषष्ठप्रवेशोपिचभर्तृनाशः ॥ ६ ॥ नृपप्रवेशोपिनरात्रिकालेवधूप्रवेशोहिदिवानशस्तः ॥
दिवाचरात्रौचगृहप्रवेशंप्रवेशभेषुप्रवदंतिसंतः ॥ ७ ॥ युग्मवर्षनिषेधस्तुपंचमाब्दादर्वाग्वेदितव्यः ॥ अतऊर्ध्वंन्नदोषः ॥

तथाहि ॥ उद्वाहाच्चतुरष्टषट्दशादिनेश्रेष्ठंवधूवेशनंमासेष्वष्टमषट्चतुर्थदशकेश्रीसंपदायुःक्षयं॥वर्षेवृद्धिचतुष्टयंभयकरंपंचा
ब्दमुख्यंपरेवर्षास्सर्वमनोहराःशुभकरावध्वाःप्रवेशेशुभाः ॥ ८॥ मासेधिकेशून्यहरिप्रसुप्तेद्वितीयवर्षेप्रतिशुक्रमूढे ॥ नवो
ढजायन्नकरोतिमंदिरंविवाहएतन्मुनयोवदंति ॥ ९ ॥ लुल्लः॥ स्वभवनपुरप्रवेशेदेशानांविभ्रमेतथोद्वाहे ॥ नववध्वागृहगम
नेप्रतिशुक्रविचारणानास्ति ॥ १० ॥ मांडव्यः ॥ नित्ययानेगृहेजीर्णेप्राशनांतेषुसप्तसु॥ वधूप्रवेशेमांगल्येनमौढ्यंगुरु
शुक्रयोः ॥ ११ ॥ कश्यपेषुवसिष्ठेषुभृग्वत्र्यंगिरगौतमाः ॥ भरद्वाजेषुवत्सेषुप्रतिशुक्रोनविद्यते ॥ १२ ॥ बादरायणः ॥
तस्यकालमाह ॥ नीहारांशुघनोत्तरादितिगुरुब्रह्मानुराधाश्विनीशक्राहस्करवायुविष्णुवरुणत्वष्ट्रप्रशस्तातिथौ ॥ कुंभाजा
लिगतेरवौशुभकरेप्राप्तोदयेभार्गवेजीवज्ञोशनसांदिनेनववधूवेश्मप्रवेशःशुभः ॥ १३ ॥ नीहारांशुघनःमृगशिरः ॥ व्यव
हारतत्वे॥पौष्णात्कभाच्चश्रवणाच्चयुग्मेहस्तत्रयेमूलमघोत्तरासु॥पुष्येचमैत्रेचवधूप्रवेशोरिक्तेतरेव्यर्किकुजेचशस्तः॥१४॥
पौष्णाद्युग्मेरेवत्यश्विन्यौ ॥ काद्युग्मेरोहिणीमृगशिरसी ॥ अनेनभरणीकृत्तिकार्द्राश्लेषपूर्वाफल्गुनीविशाखपूर्वाषाढप्रौष्ठ
पदाइत्यष्टौवर्ज्याः ॥ अन्याःशुभाः ॥ प्रयोगदर्पणे ॥ वधूप्रवेशःप्रथमेतृतीयेशुभप्रदःपंचमकेथवाह्नि ॥ द्वितीयकेवापिचतु
र्थकेवाषष्ठेवियोगामयदुःखदःस्यात् ॥ १५ ॥ शुभांशेशुभवारेषुशुभदृष्टेस्थिरांशके ॥ दिवाप्रवेशस्संपत्त्यैनिशिवाशोभ
नोभवेत् ॥ अत्रवर्ज्यमासानाहबृहस्पतिः ॥ कुलीरकन्याकुंभेषुदिनेशेनविशेद्गृहं ॥ ग्रामंवानगरंवापिपत्तनंवानराधिपः॥
इति ॥ ज्योतिःप्रकाशे ॥ वामेशुक्रेनवोढायास्सुखंहानिःस्वदक्षिणे ॥ धनंधान्यंचपृष्ठस्थेसर्वनाशःपुरस्थितइति ॥ ग्रा

मांतरप्रवेशेशुक्रविषयेविशेषोवक्ष्यते ॥ पृष्ठस्थंदक्षिणस्थंवाभृगुंकृत्वाविशेत्सदा ॥ पुरतोवामतोवापिप्रतिशुक्रन्नचाविशेत्
॥ १८ ॥ इतिनिर्णयः ॥ अथप्रयोगः ॥ अथस्थालीपाकहोमानंतरंशुभेदिनेवधूप्रवेशंकुर्यात् ॥ यथा ॥ पत्न्यान्वारब्धऔ
पासनाग्निंसमारोप्यहस्तेगृहीत्वाबंधुजनैस्सहमंगलघोषपुरस्सरंस्वगृहंगत्वादेहल्याबहिरुपविश्याचम्यप्राणानायम्यदे
शकालौसंकीर्त्यममानयानवोढयावध्वासहसर्वसौभाग्यप्राप्त्यर्थंसमस्तमांगल्यप्राप्त्यर्थंगृहप्रवेशंकरिष्ये ॥ तदंगत्वेनग
णपतिक्षेत्रपालवास्तोष्पतिपूजांकरिष्यइतिसंकल्प्य गणपतिंसंपूज्यक्षेत्रस्यपतिनावयमितिक्षेत्रपालंवास्तोष्पतेवास्तो
ष्पतइतिद्वाभ्यांवास्तोष्पतिंचदेहल्यांसंपूज्य भद्रान्यहानितिगृहंप्रविश्यअथैनांकल्याणीवाचंवाचयतिप्रजावतीपशुमती
ति ॥ एनामनडुहिचर्मण्युपवेशयति ॥ इहगावःप्रजायध्वमित्युपविश्यगणपतिस्मरणपूर्वकंलक्ष्मींग्रहदेवतांचसंपू
ज्यगृहप्रवेशांगपुण्याहंकुर्यात् ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यानयानवोढयावध्वासहगृहप्रवेशांगभूतंस्वस्ति
पुण्याहवाचनंकरिष्यइतिसंकल्प्य गणपतिंसंपूज्यास्यगृहप्रवेशकर्मणःपुण्याहंस्वस्त्यृद्धिमितिवाचयित्वाप्रजापतिःप्रीय
तामितिविशेषः॥ब्राह्मणान्संपूज्याशिषोवाचयेत्॥ इतिगृहप्रवेशप्रयोगः ॥ ॥ ७ ॥ ॥ अथवैश्वदेवारंभः ॥ यदिद
शदिनादर्वाग्गृहप्रवेशस्तदागृहप्रवेशानंतरंवैश्वदेवारंभः ॥ दशदिनात्परतश्चेच्छ्वशुरगृहएववैश्वदेवंकृत्वापुनःकालांतरे
गृहप्रवेशंकुर्यात् ॥ अत्रसूत्रं ॥ पंचमेहनिस्थालीपाकहोमानंतरंश्वोभूतेवैश्वदेवेनप्रातिपद्यतइति ॥ प्रयोगरत्ने ॥
अथदशमेहनिजुहुयाद्विश्वेदेवाइतिद्वाभ्यामिति ॥ कारिकायां ॥ दशमेहनिसंप्राप्तेवैश्वदेवंतुनैत्यकं ॥ आरभेततथाश्रा

द्धंमत्स्यस्यानंतरेन्हिवा ॥ षष्ठेन्हिवैश्वदेवंचेत्कृष्णपक्षेपितृक्रियेति ॥ कृष्णपक्षेपितृक्रियेत्यनेनमासिश्राद्धंकर्तव्यमितिवि
वक्षितं ॥ गृह्यसूत्रेपि ॥ श्वोभूतेवैश्वदेवेनप्रतिपद्यतेमासिश्राद्धेनचापरपक्षइति ॥ विवाहात्षष्ठेष्टमेदशमेन्हिवावैश्वदेवारं
भः ॥ अस्यविवाहशेषत्वान्नांदीश्राद्धंकृताकृतं ॥ अथषष्ठेहनिप्रातरौपासनांतंनित्यकर्मकृत्वासपत्नीकःकर्तापवनादिकंकृ
त्वागणपतिंसंपूज्यवैश्वदेवारंभकर्तुंपुंण्याहवाचनंकरिष्यइतिसंकल्प्य वैश्वदेवारंभकर्मणःपुंण्याहंस्वस्तिऋद्धिमितिवाच
यित्वाविश्वेदेवाःप्रीयंतामितिविशेषः ॥ अथस्थंडिलोल्लेखनादिलौकिकाग्निंप्रतिष्ठाप्याजुव्हानउद्बुध्यस्वाग्नइत्यारोपित
समिधमग्नावाधायप्राणानायम्यदेशकालौसंकीर्त्यानयानवोढयावध्वासहवैश्वदेवारंभहोमंकरिष्ये ॥ वैश्वदेवारंभहोमःक
र्मआघारवत्तंत्रंपंचदशदारुरिध्मअग्नीषोमावाज्यभागौआवसक्थ्योनामाग्निर्विश्वेदेवादेवताचरुर्हविरग्निःस्विष्टकृदाज्यस्य
मांत्रवर्णिक्योदेवताइत्यादिसंकल्प्यान्वाधानाद्याप्रणीताभ्यःकृत्वाविश्वेभ्योदेवेभ्योजुष्टंनिर्वपामीतिचरुंनिरूप्यप्रोक्ष्याग्नि
मुखांतंकृत्वापक्वाज्जुहोति ॥ ॐविश्वेदेवाऋतावृधऋतुभिर्हवनश्रुतः॥ जुषंतांयुज्यंपयो विश्वेदेवाःशृणुतेमगुँहवंमेयेअंतरि
क्षेयउपद्यविष्ठ ॥ येअग्निजिव्हाउतवायजत्राआसद्यास्मिन्बर्हिषिमादयध्वगुँस्वाहा ॥ विश्वेभ्योदेवेभ्यइदं ॥ १ ॥ अ
थास्विष्टकृतमवदायांतःपरिधौनिधायदेवकृतस्यैनसइत्यादिभिरष्टौसमिधआदधातीतिधर्मप्रश्नउक्तं ॥ यथा ॥ देवकृतस्यै
नसोवयजनमासिस्वाहा ॥ अग्नयइदं ॥ १ ॥ मनुष्यकृतस्यैनसोवयजनमासिस्वाहा ॥ अग्नयइदं ॥ २ ॥ पितृकृतस्यै
नसोवयजनमासिस्वाहा ॥ अग्नयइदं ॥ ३ ॥ आत्मकृतस्यैनसोवयजनमासिस्वाहा ॥ अग्नयइदं ॥ ४ ॥ अन्यकृतस्यै

नसोवयजनमसिस्वाहा ॥ अग्नयइदं ॥ ५ ॥ अस्मत्कृतस्यैनसोवयजनमसिस्वाहा ॥ अग्नयइदं ॥ ६ ॥ यद्दिवाचनक्तंचै नश्चकृमतस्यावयजनमसि स्वाहा ॥ ७ ॥ यत्स्वपंतश्चजाग्रतश्चैनश्चकृमतस्यावयजनमसिस्वाहा ॥ ८ ॥ सर्वत्राग्नय इदं ॥ ९ ॥ इत्यष्टसमिधोहुत्वा चरुशेषंपात्रांतरआनीयप्रभूतमाज्यमानीयहस्तेनैवजुहोति ॥ अग्नयेस्वाहा ॥ अग्न यइदं ॥ १ ॥ सोमायस्वाहा ॥ सोमायेदं ॥ २ ॥ ध्रुवायस्वाहा ॥ ध्रुवायेदं ॥ ३ ॥ ध्रुवायभूमायस्वाहा ॥ ध्रुवा यभूमायेदं ॥ ४ ॥ ध्रुवक्षितयेस्वाहा ॥ ॥ ध्रुवक्षितयइदं ॥ ५ ॥ अच्युतक्षितयेस्वाहा ॥ अच्युतक्षितयइदं ॥ ६ ॥ ईशानायस्वाहा ॥ इशानायेदं ॥ ७ ॥ जयंतायस्वाहा ॥ जयंतायेदं ॥ ८ ॥ धर्मायस्वाहा ॥ धर्मायेदं ॥ ९ ॥ धर्मरुच येस्वाहा ॥ धर्मरुचयइदं ॥ १० ॥ धान्वंतरायस्वाहा ॥ धान्वंतरायेदं ॥ ११ ॥ विद्यायैस्वाहा ॥ विद्यायाइदं ॥ १२ ॥ अंबिकायैस्वाहा ॥ अंबिकायाइदं ॥ १३ ॥ हरयेस्वाहा ॥ हरयइदं ॥ १४ ॥ गणेभ्यःस्वाहा ॥ गणेभ्यइदं ॥ १५ ॥ गणपतिभ्यःस्वाहा ॥ गणपतिभ्यइदं ॥ १६ ॥ वर्षेभ्यःस्वाहा ॥ वर्षेभ्यइदं ॥ १७ ॥ विश्वेभ्योदेवेभ्यःस्वाहा ॥ विश्वेभ्योदेवेभ्यइदं ॥ १८ ॥ साध्येभ्योदेवेभ्यःस्वाहा ॥ साध्येभ्योदेवेभ्यइदं ॥ १९ ॥ सर्वेभ्योदेवेभ्यःस्वाहा ॥ सर्वेभ्योदे वेभ्यइदं ॥ २० ॥ सर्वाभ्योदेवताभ्यःस्वाहा ॥ सर्वाभ्योदेवताभ्यइदं ॥ २१ ॥ ॐभूःस्वाहा ॥ अग्नयइदं ॥ ॐभुवःस्वाहा ॥ वायवइदं ॥ ओँसुवःस्वाहा ॥ सूर्यायेदं ॥ ॐभूर्भुवःसुवःस्वाहा ॥ प्रजापतयइदं ॥ २५ ॥ इतिपंचविंशत्याहुतिर्हुत्वा ॥ अग्नयेस्विष्टकृतेस्वाहा ॥ अग्नयेस्विष्टकृतइदं ॥ इतीशान्यभागेहुत्वाबलिहरणंकुर्यात् ॥ अथाग्निःपश्चाद्भूमौचतुरस्रमंडलं

कृत्वातत्तत्स्थानेषुपत्न्यागंधपुष्पाक्षतैः परिसमूह्यपर्युक्ष्याभ्यर्चितेषुस्वयंपुरस्तादुपरिष्टाच्चोभयतःपरिषेकंकृत्वावक्ष्यमाण
प्रकारेणबलिहरणंकुर्यात् ॥ तत्रादौचतुर्दिक्षुमध्येचपंचबलयः ॥ ॐधर्मायस्वाहा ॥ अधर्मायस्वाहा ॥ कद्रुवेनागमात्रेस्वा
हा ॥ सर्पेभ्यःस्वाहा ॥ब्रह्मणेस्वाहा॥५॥इतिपंच अथेशानमारभ्यप्रदक्षिणाकारेणएकविंशतिबलयः ॥ अचलायैदेव्यैस्वा
हा॥ वास्तुपाल्यैसगणायैस्वाहा॥ अद्भ्यःस्वाहा ॥ वरुणायस्वाहा ॥ प्रजापतयेस्वाहा ॥ परमेष्ठिनेस्वाहा ॥ ऋषभायस्वा
हा ॥ रुद्रायस्वाहा ॥ रुद्राण्यैस्वाहा ॥ ओषधिवनस्पतिभ्यःस्वाहा ॥ रक्षोदेवजनेभ्यःस्वाहा॥ कामायस्वाहा ॥ भगायस्वा
हा ॥ श्रियैस्वाहा ॥ विष्णवेस्वाहा ॥ ग्रहायस्वाहा ॥ ग्रहराजायस्वाहा ॥ धनधनभ्यागुँस्वाहा॥१८॥ वैश्रवणायस्वाहा॥
श्रियैस्वाहा ॥ पुष्ट्यैस्वाहा ॥२५॥ पुनरपीशानादिपूर्ववत्पंचदश ॥ उलूखलमुसलाभ्यागुँस्वाहा ॥ दृषदुपलाभ्यागुँस्वा
हा ॥ समूहन्यैदेव्यैस्वाहा ॥ गृह्याभ्यःस्वाहा ॥ अवसानेभ्यःस्वाहा ॥ अवसानुपतिभ्यःस्वाहा ॥ ६ ॥ सर्पदेवजनेभ्यः
स्वाहा ॥सर्वभूतेभ्यःस्वाहा ॥ अंतरिक्षायस्वाहा ॥ अवांतरिक्षायस्वाहा ॥१०॥ धात्रेस्वाहा ॥ विधात्रेस्वाहा ॥ भूत्यै
स्वाहा ॥ प्रभूत्यैस्वाहा ॥ यदेजतिजगतियच्चचेष्टतिनाम्नोभागोयन्नाम्नेस्वाहा ॥ १५ ॥ अथमंडलमध्येप्रागपवर्गाश्चतु
स्त्रिंशद्बलयः॥जेष्ठाभ्यागुँस्वाहा ॥१॥ करस्कराभ्यागुँस्वाहा॥ श्रियैस्वाहा ॥ विष्णवेस्वाहा ॥ रुद्रायस्वाहा ॥ वसुभ्यःस्वा
हा ॥ पशुपतयेस्वाहा ॥ वास्तोष्पतयेस्वाहा ॥ पृथिव्यैस्वाहा ॥ अंतरिक्षायस्वाहा ॥ दिवेस्वाहा ॥ सूर्यायस्वाहा॥
चंद्रमसेस्वाहा ॥ नक्षत्रेभ्यःस्वाहा ॥ अद्भ्यः ॥१५॥ ओषधीभ्यः॥ वनस्पतिभ्यः॥ चराचरेभ्यः ॥ परिप्लवेभ्यः ॥ सरीसृ

पेभ्यः ॥ देवेभ्यः॥कालेभ्यः॥ लोकेभ्यः ॥वेदेभ्यः॥देवेभ्यः ॥ऋषिभ्यः ॥२६॥ वसुभ्यः ॥ रुद्रेभ्यः ॥ आदित्येभ्यः ॥ इंद्रा
य ॥ ३० ॥ बृहस्पतये ॥ प्रजापतये ॥ ब्रह्मणे ॥ आयतनवतेस्वाहा ॥३४॥ अथदक्षिणभागेदर्भेषुप्राचीनावीतीपितृभ्यः
स्वधानमःस्वाहा ॥ पितामहेभ्यःस्वधा ॥ प्रपितामहेभ्यःस्वधा ॥मातृभ्यःस्वधानमः॥पितामहीभ्यःस्वधानमः॥प्रपिताम
हीभ्यःस्वधा ॥ मातामहेभ्यः स्वधा ॥ मातुः पितामहेभ्यःस्वधा ॥ मातुःप्रपितामहेभ्यःस्वधा ॥ मातामहीभ्यःस्वधा ॥ मा
तुःपितामहीभ्यःस्वधा ॥ मातुःप्रपितामहीभ्यः स्वधानमःस्वाहा ॥ अथापउपस्पृश्ययज्ञोपवीती॥उदग्दिशि ॥ नमोरु
द्रायभगवतेस्वाहा ॥ अथदिक्षु ॥ प्राच्यैदिशेस्वाहा ॥दक्षिणायैदिशेस्वाहा ॥ प्रतीच्यैदिशेस्वाहा ॥ उदीच्यैदिशेस्वाहा॥
उर्ध्वायैदिशेस्वाहा॥अवरायैदिशेस्वाहा ॥ आग्नेयादिविदिक्षु ॥ अग्नयेस्वाहा ॥ निर्ऋतयेस्वाहा ॥ वायवेस्वाहा ॥ ईशाना
यस्वाहा ॥ उदग्दिशि ॥ येभूताः प्रचरंतिदिवानक्तंबलिमिच्छंतोवितुदस्यप्रेष्याः ॥ तेभ्योबलिंपुष्टिकामोहरामिमयिपु
ष्टिंपुष्टिपतिर्ददातुस्वाहा ॥ इतिदिवा ॥ नक्तंबलिमिच्छंतइतिनक्तं ॥ नमोरुद्रायभूमायस्वाहा ॥ इति ॥ अथप्रक्षा
लितपाणिपादअपआचम्याग्नेःपश्चाद्दर्भेषूपविश्यदर्भान्धारयमाणःप्राणानायम्यगायत्रींदशवारंजपित्वावेदादीन्जपित्वा॥
अग्निर्मूर्धादिवः ÷ जिन्वति ॥ यद्देवादेवहेडनमितिसानुषंगंकूष्मांडीयन्नमोब्रह्मणइतित्रिरनूच्यापउपस्पृश्य ॥ देवयज्ञे
नयक्ष्यइतिसंकल्प्य ॥ विद्युदसिविद्यमेपाप्मानमृतात्सत्यमुपैमिशिरश्चक्षुषीनासिकेश्रोत्रेहृदयमालभ्य ॥ परिस
मूह्यादितेतुमन्यस्वेत्यादिभिः परिषिच्य ॥ देवेभ्यःस्वाहा ॥ देवेभ्यइदं ॥ इतिसमिधंहुत्वा ॥ आदितेन्वमगुँस्थाइति

पुनःपारिषिच्य ॥ वृष्टिरसिवृश्चमेपाप्मानमृतात्सत्यमु ा ॥ शिरश्चक्षुषीनासिकेश्रोत्रेहृदयमालभते ॥ अथप्राचीना
वीती ॥ पितृयज्ञेनयक्ष्ये ॥ विद्युदसि ॥ अदितेनुमन्यस्वेत्यग्नेर्दक्षिणतोपसव्यंपरिसमूह्यपर्युक्ष्यदर्भेषुपितृभ्यः स्वधा
स्तु ॥ इतिपिंडमापोवादत्वाअदितेन्वमगुँस्थाइत्यपसव्यंपरिषिच्ययज्ञोपवीती ॥ भूतयज्ञेनयक्ष्ये ॥ विद्युदसीत्युक्त्वाग्ने
रुत्तरतः॥ उत्तराग्रान्दर्भान्संगुँस्तीर्यपूर्ववत्परिषिच्यभूतेभ्योनमइत्यन्नंफलंपुष्पंवादत्वापुनः परिषिच्यवृष्टिरसीत्यपस्पृष्ट्वा
इतिभूतयज्ञः ॥ मनुष्ययज्ञेनयक्ष्ये ॥ विद्युदसि ॥ मनुष्येभ्योहंता ॥ इत्यतिथयेअन्नंदत्वाअभावेभूमौवादद्यात् ॥
वृष्टिरसि ॥ एषमनुष्ययज्ञः ॥ ब्रह्मयज्ञेनयक्ष्ये ॥ पूर्ववत् ॥ ततइष्टेभ्यःस्वाहेत्यादिभिरष्टभिर्हुत्वास्विष्टकृत्प्रभृतिवरदा
नांतंकृत्वाअनेनवैश्वदेवबलिहरणकर्मणाश्रीपरमेश्वरःप्रीयतां ॥ दशममहस्संज्ञकश्राद्धंकृताकृतं ॥ श्राद्धंकुर्वीतवानवेति
कुमारस्वामिकारिकावचनात् ॥ ततोवरःसपत्नीकःवस्त्राभरणादिभिरलंकृत्यबाह्यदेवतायतनानिगत्वादेवताःसंपूज्यगृहं
गत्वावृद्धान्नमस्कृत्यप्रतोदामिषुंचब्राह्मणेभ्योदत्वानमस्कुर्यात् ॥ इतिवैश्वदेवारंभबलिहरणविधिः ॥ ॥ ७ ॥ ॥ अथ
कुलदेवताउत्थापनं ॥ कन्याविवाहेचतुर्थीहोमानंतरंयथावकाशंउपनयनेसुश्रवसःपूजानंतरंयथावकाशंदेवकोत्थापनंकु
र्यात् ॥ तत्रकालः ॥ समेचदिवसेकार्यंदेवकोत्थापनंबुधः ॥ षष्ठंचदिवसंनेष्टमुक्त्वापंचमसप्तमाविति ॥ अस्यार्थः ॥ समे
षष्ठंदिनंनेष्टंअन्यानिश्रेष्ठानि ॥ विषमेपंचमसप्तमौश्रेष्ठौ ॥ अन्येवर्ज्याः ॥ देवप्रतिष्ठादिनादारभ्येत्यर्थः ॥ इत्युक्तशुभ
दिनेवरः सपत्नीकोमंडपमध्यउपविश्यासनप्राणायामौकृत्वाममविवाहांगत्वेनस्थापितदेवकोत्थापनंमंडपोद्वासनंचकरि

ष्यइतिसंकल्प्यतदंगत्वेनपुंण्याहंवाचयित्वाकुलदेवतान्त्संपूज्यनमस्कारांतंकृत्वा ॥ उत्तिष्ठब्रह्मणस्पतेदेवयंतस्त्वेमहे ॥ उपप्रयंतुमरुतःसुदानवः ॥ इंद्रप्राशूर्भवासचा ॥ इत्युद्वास्यब्राह्मणान्त्संपूज्यनमस्कृत्याशीर्गृण्हीयात् ॥ इतिकुलदेवतोद्वासनं ॥ अथयदिविवाहहोमानंतरमौपासनारंभात्प्रागग्निरुद्वातश्चेत्पुनर्विवाहहोमएवाग्निसिद्ध्यर्थंकार्यः ॥ अथविवाहव्रतमध्येग्नावुद्वाते ॥ अपहताअसुरारक्षांसिपिशाचायेक्षियंतिपृथिवीमनु ॥ अन्यत्रैतोगच्छंतुयत्रैषांगतंमनः ॥ इतितत्सर्वंभस्मप्रोक्ष्यायंतेयोनिर्ऋत्वियइतितद्भस्मसमारोप्यलौकिकाग्निंप्रतिष्ठाप्यपरिस्तीर्याजुव्हानउद्बुध्यस्वाग्नइतिद्वाभ्यांसमारोपितसामिधमग्नावाधायप्राणानायम्यदेशकालौसंकीर्त्यममविवाहव्रतमध्येग्न्युद्वातप्रायश्चित्तहोमंकरिष्ये ॥ प्रायश्चित्तहोमःकर्माग्निहोत्रिकंतंत्रंचित्तिर्नामाग्निः अग्न्यादयोदेवताआज्यंहविरित्याद्याज्यसंस्कारांतंकृत्वाथस्रुवाहुतीर्जुहोति ॥ ॐअयाश्चाग्नेः ॥ अग्नयेअयसइदं ॥ ॐअग्निर्होता ॥ अश्विनाध्वर्यू ॥ त्वष्टाग्नीत् ॥ मित्रउपवक्ता ॥ सोमस्सोमस्यपुरोगाः ॥ शुक्रःशुक्रस्यपुरोगाः ॥ श्रातास्तइंद्रसोमाः ॥ वातापेर्हवनःश्रुतःस्वाहा ॥ इंद्रायेदं ॥ ॐब्राह्मणएकहोता ॥ सयज्ञः ॥ समेददातुप्रजांपशून्पुष्टिंयशः ॥ यज्ञश्चमेभूयात्स्वाहा ॥ ब्रम्हणइदं ॥ अग्निर्द्विहोता ॥ सभर्ता ॥ समे०॥०भर्ताचमेभूयात्स्वाहा ॥ अग्नयइदं ॥ २ ॥ पृथिवीत्रिहोता ॥ सप्रतिष्ठा ॥ समे०॥० प्रतिष्ठाचमेभूयात्स्वाहा ॥ पृथिव्याइदं ॥ ३ ॥ अंतरिक्षंचतुर्होता ॥ सविष्ठा ॥ समे०॥० विष्ठाश्चमेभूयात्स्वाहा ॥ अंतरिक्षायेदं ॥४॥ वायुःपंचहोता ॥ सप्राणः ॥ समे०॥० प्राणश्चमेभूयात्स्वाहा ॥ वायवइदं ॥ ५ ॥ चंद्रमाःषड्होता ॥ सऋतून्कल्पया

ति ॥ समे ॰॥॰ऋतवश्चमेकल्पंतागुँस्वाहा ॥ चंद्रमसइदं ॥ ६ ॥ अन्नगुँसप्तहोता ॥ सप्राणस्यप्राणः ॥ संमे ॰॥॰प्राणस्यच
मेप्राणोभूयात्स्वाहा ॥ अन्नायेदं ॥ ७ ॥ द्यौरष्टहोता ॥ सोनाधृष्यः ॥ समे ॰॥॰अनाधृष्यश्चभूयासगुँस्वाहा ॥ दिवइ
दं ॥ ८ ॥ आदित्योनवहोता ॥ सतेजस्वी ॥ समे॰॥॰तेजस्वीचभूयासगुँस्वाहा ॥ आदित्यायेदं ॥ ९ ॥ प्रजापतिर्दशहोता ॥
सइदगुँसर्वं॥समे॰॥॰सर्वंचमेभूयात्स्वाहा ॥ प्रजापतयइदं ॥ १० ॥मिंदाहुतीर्महाव्याहृतीर्व्याहृतीश्चहुत्वाहोमशेषंसमाप्य॥
पूर्ववदौपासनंकुर्यात् ॥इत्यग्न्युद्वातप्रायश्चित्तं ॥अथकन्यासमर्पणं॥ वधूवरयोःपित्रादयःसर्वेसभामध्यउपविश्यवधूवरौप्रा
ङ्मुखावुपवेश्यवक्ष्यमाणकथापूर्वकंकन्यांवरपित्रादिहस्तेदद्यात्॥इतिशिष्टाचारः॥यथा॥देवासुरगणैःपूर्वंमथितःक्षीरसाग
रः ॥ वेत्रंचवासुकिंकृत्वामंथानंमंदरंगिरिं ॥ मथितेचतदासिंधावुत्पन्नारत्नजातयः ॥ पूर्वंहालाहलंजातंशिवेनांगीकृतंत
दुइत्यादि ॥ अस्यार्थः ॥ पूर्वंदेवासुराश्चसंभूयवयममृतंसंपादयामइतिनिश्चित्यतदर्थंक्षीरसागरमथनंकुर्मइत्यालोच्यमं
दरपर्वतंमंथानंकृत्वावासुकिंरज्जुंकृत्वाएकत्रदेवाअन्यत्रराक्षसाःस्थित्वातैःसमुद्रेमथ्यमानेतत्रपूर्वंकालकूटविषमुत्पन्नं ॥
तत्तुशिवेनभक्षणंकृतं ॥ ततउच्चैःश्रवानामाश्वउत्पन्नः ॥ सतुदेवेंद्रेणगृहीतः ॥ अथकल्पद्रुमादयउत्पन्नाःततोनानाविधा
निरत्नान्युत्पन्नानि ॥ तत्सर्वंदेवायथायोग्यंगृहीतवंतः ॥ ततोअमृतकलशंगृहीत्वाधन्वंतरिर्जातः ॥ तत्तुअमृतंनारायणो
मोहिनीरूपेणराक्षसान्वंचयित्वादेवानपाययत् ॥ ततोलक्ष्मीर्जाता ॥ राक्षसास्तांदृष्ट्वाइयमस्माकंभवेदितिसंतुष्टाअभ
वन् ॥ देवाश्चतदानीमेवंसमयंकृतवंतः ॥ स्वयंवरंकारयित्वायंवरयेत्तस्यभार्याभविष्यतीत्येवंनिश्चित्यसभांकारयित्वापु

ष्पमालांतस्याहस्तेदत्वालक्ष्मींपुरतःकृत्वाधन्वंतरिरनुगच्छन् ॥ निंदास्तुतिरूपेणतत्रस्थितदैवतानांगुणावगुणान्वर्णय
न्वक्ष्यमाणप्रकारेणलक्ष्मीमुवाच ॥ किमुवाचेत्याकांक्षायामाह ॥ एषब्रह्मातिवृद्धस्त्रिदशपतिरसौगर्वितःक्षीयतेऽब्जोदि
ग्वासानीलकंठस्तपतिदिनकरश्चंचलोमातरिश्वा ॥ इत्थंसंचिंत्यलक्ष्म्याभ्रमरकलकलारावगीतप्रफुल्लामालादत्तामुरारेः
सुरतरुकुसुमालंकृतापातुयुष्मान् ॥ अब्जःशशांकः ॥ उत्तुंगस्तनमंडलोपरिलसत्प्रालंबमुक्तामणेरंतर्बिंबितमिंद्रनीलनिकर
च्छायानुकारद्युति ॥ लज्जाव्याजमुपेत्यनम्रवदनास्पष्टंमुरारेर्वपुःपश्यंतीमुदतांमुदेस्तुभवतांलक्ष्मीर्विवाहोत्सवे ॥ २ ॥
कुलंचशीलंचवपुर्वयश्चवित्तंचविद्यांचसनाथतांच ॥ एतान्गुणान्सप्तपरीक्ष्यदेयाकन्याबुधैःशेषमचिंतनीयं ॥३॥ कन्याव
रयतेरूपंमातावित्तंपिताश्रुतं ॥ बांधवाःकुलमिच्छंतिमिष्टान्नमितरेजनाः ॥ ४ ॥ कार्येषुमंत्रीकरणेषुदासीभुक्तौतुमाता
शयनेषुवेश्या ॥ धर्मेषुधर्मीक्षमयाधरित्रीशट्कर्मयुक्ताकुलमुद्धरित्री ॥५॥ अनयासहधर्मचर्ययापुरुषार्थत्रयसाधनार्हा ॥
मुदमाप्नुहिशाश्वतीःसमाभजधर्मंत्वमनन्यमानसः ॥ ६ ॥ वसनाभरणान्नदानपानैर्भरणीयानुदिनंसुरक्षणीया ॥ मृदुभि
र्वचनैःसुभाषणीयागृहकृत्येष्वखिलेषुयोजनीया ॥ ७ ॥ ममत्र्यबलाक्रियास्वदक्षावचनेकर्मणिकौशलंनयस्याः ॥ तादियं
भवतासुरक्षणीयानखरेणापिमुदाचलालसेन ॥ ८ ॥ याकृष्णभांडेसिततंडुलानांपक्तेत्यशक्ताकिमुतान्यकृत्ये ॥ तथाप्य
नल्पंक्षमयात्वयेयमंगीकृतातुप्रतिपालनीया ॥ ९ ॥ अष्टवर्षात्वियंकन्यापुत्रवत्पालितामया ॥ इदानींतवपुत्रायदत्ता
स्नेहेनपाल्यतां ॥ १० ॥ अथपुनर्विवाहः ॥ यद्यकालेकृतेविवाहेपंचांगशुद्ध्यादिरहितदोषयुक्तेवाज्योतिःशास्त्रोक्तशुभकाले

पुनर्विवाहःकार्यः ॥ तत्रनृसिंहः ॥ श्रीधरीये ॥ पुनर्विवाहंवक्ष्यामिदंपत्योःशुभवृद्धिदं ॥ लग्नेंदुलग्नयोर्दोषेग्रहतारा
दिसंभवे ॥ अन्येष्वशुभकालेषुदुष्टयोगादिसंभवे ॥ विवाहेच्चापिदंपत्योराशौचादिसमुद्भवे ॥ तस्यदोषस्यशांत्यर्थंपु
नर्वैवाहइष्यतइति ॥ विवाहस्यावश्यकर्तव्यकालेसुमुहूर्तालाभेयथासंभवमुहूर्तेविवाहंकृत्वा ॥ पुनःसुमुहूर्तेतयोर्विवा
हःकर्तव्यः ॥ अथवाविवाहानंतरंबहुधाहानिदृश्यतेतत्रापिसुमुहूर्तेपुनर्विवाहंकुर्यात् ॥ तत्रप्रयोगः ॥ विवाहोक्तशुभदि
नेआत्मनोनुकूलेसुमुहूर्तेपुनर्विवाहंकरिष्यन्पूर्वेद्युःपुनर्विवाहांगत्वेननांदीश्राद्धंकृत्वाश्वोभूतेमंगलस्नानंकृत्वा स्नानपवना
दिकंचकृत्वागणपतिंसंपूज्यपुंण्याहंवाचयित्वाप्राणानायम्यदेशकालौसंकीर्त्य ममसर्वानिष्टनिरसनार्थंसर्वाभीष्टसिद्ध्यर्थं
पुनर्विवाहहोमंकरिष्यइतिसंकल्प्य ॥ मधुपर्कवर्ज्यं ॥ सुमुहूर्तेनिरीक्षांकृत्वाअभ्रातृघ्नीमितिवधूंसमीक्ष्याघोरचक्षुरिति
तयेक्ष्यमाणोजपित्वाइदमहंयालवयीतिभ्रूमुखेदर्भेणसंमृज्यस्थंडिलोल्लेखनाद्यावरदानांतंविवाहहोमंकुर्यात् ॥ नान्यद्व्रतच
र्यादिकमस्ति ॥ इतिपुनर्विवाहप्रयोगः॥ अथाग्निद्वयसंसर्गविधिरुच्यते ॥ यदिकेनापिनिमित्तेनसत्यामाद्यायामन्यापरि
णीतातत्रविवाहकर्मणिसमस्तेनिर्वृत्तेएकादशेद्वादशेवादिवसेअग्निद्वयसंसर्गंकुर्यात् ॥ तत्रकारिका ॥ कृतेतत्रविवाहेतु
श्राद्धांतंतुपरेहनि ॥ अग्निंसामिध्यसंस्तीर्यसंस्कृत्याज्यंचतत्स्रुचा ॥ इत्यादि ॥ द्वितीयमौपासनाग्निंस्थंडिलेनिधायप्राणा
नायम्याग्निद्वयसंसर्गांगत्वेनचतुर्गृहीतहोमंकरिष्यइतिसंकल्प्य ॥ चतुर्गृहीतहोमःकर्मआपूर्विकंतंत्रंऋषींद्रब्रह्मणोदेवता
आज्यंहविःसद्योयक्ष्ये ॥ तदंगमन्वाधानंकृत्वाप्रोक्षणीमाज्यस्थालींस्रुक्स्रुवौचसादयित्वाज्यंसंस्कृत्यानयानवोढयावध—

न्वारब्धःस्रुचिचतुर्गृहीतंगृहीत्वा ॥ ओन्नमस्तेऋषयेगद ॥ अव्यथायैत्वास्वधायैत्वां ॥ मानइंद्राभितस्तदष्टारिष्टासः ॥
एवाब्रह्मन्तवेदस्तुस्वाहा ॥ ऋषयइंद्रायब्रह्मणइदं ॥ इतिहुत्वातमग्निमयंतेयोनिर्ऋत्वियइतिसमिधिसमारोप्यपुनस्थंडि
लोल्लेखनादिकंकृत्वाग्निंप्रतिष्ठाप्यपूर्वौपासनाग्निंसमारोपणसमिधमाजुव्हानउद्बुध्यस्वेतिलौकिकाग्निंनिधाय प्रज्वाल्याथ
द्वितीयाग्निसमारोपणसमिधमाजुव्हानउद्बुध्यस्वाग्नइति तत्रनिधायासनप्राणायामौकृत्वा देशकालौसंकीर्त्य गृह्याग्निसा
ध्यानांकर्मणांतत्रानुष्ठानफलसिद्ध्यर्थमौपासनाग्निद्वयसंसर्गहोमंकरिष्ये ॥अग्निसंसर्गहोमःकर्माघारवत्तंत्रंपंचदशदारुरि
ध्मअग्नीषोमावाज्यभागौबलवर्धनोनामाग्निः पुरीष्याग्निर्देवताचरुर्हविरित्यादिसंकल्प्यान्वाधायस्रुक्स्रुवसम्मार्जनंकृत्वा
ज्यंसंस्कृत्यस्रुचिचतुर्गृहीतंगृहीत्वापत्नीभ्यामन्वारब्धः ॥ योब्रह्माब्रह्मणइत्यष्टौमंत्रानुच्चार्यसर्वांतेसकृद्धुत्वा ॥ ब्रह्मणे
प्राणेश्वरायकृत्तिवाससेपिनाकिन ईशानायदेवायघर्म्मऋषयईशानाययमायपुरुरूपायजयंतायाकांयाश्रियैलक्ष्म्यादौप
लायाअंबिकायाइंद्रसेनायैदाक्षायणीभ्योदिव्येभ्योगणेभ्योभुवनस्यगोप्तृभ्यईशानायवसुभ्योरुद्रेभ्यआदित्येभ्योमरुद्भ्य
स्साध्येभ्योरुद्रेभ्योभृगुभ्यःसर्पेभ्योंगिरोभ्यःसाध्येभ्यइदं ॥ इतिहुत्वापुनःपात्रासादनचरुनिर्वापणाद्याज्यसंस्काराद्यग्नि
मुखांतंकृत्वापक्वाज्जुहोति ॥ ॐसमितगुँसंकल्पेथागुँसंप्रियौरोचिष्णुसुमनस्यमानौइषमूर्जमभिसंवसानौसंवाम्मनागुँ
सिसंव्रतासमुचित्तान्याकरोमग्नेपुरीष्याधिपाभवात्वन्नः ॥ इषमूर्जंयजमानायधेहिस्वाहा ॥ अग्नयेपुरीष्यायेदं ॥ अथ
स्विष्टकृतमवदायांतःपरिधौनिधायस्रुवेणाज्यमादायजुहोति ॥ ॐपुरीष्यस्त्वमग्नेरयिमान्पुष्टिमागुँअसि ॥ शिवाःकृत्वा

दिशःसर्वास्स्वांयोनिमिहासदःस्वाहा ॥ पुरीष्यायाग्नयइदं ॥ १ ॥ ॐभवतन्नस्समनसौसमोकसावरेचसौ ॥ माय
ज्ञगुँहिगुँसिष्टंमायज्ञपतिंजातवेदसौशिवौभवतमद्यनःस्वाहा ॥ जातवेदाभ्यांशिवाभ्यामिदं ॥ २ ॥ ॐमातेवपुत्रंपृथि
वीपुरीष्यमाग्निगुँस्वेयोनावभारुखा ॥ तांविश्वैर्देवैर्ऋतुभिःसंविदानःप्रजापतिर्विश्वकर्माविमुंचतुस्वाहा ॥ पृथिव्यैपुरीष्या
भयाग्नयेविश्वेभ्योदेवेभ्यऋतुभ्यःप्रजापतयेविश्वकर्मणइदं ॥ ३ ॥ ॐयदस्यपारेरजसःशुक्रंज्योतिरजायत ॥ तन्नःप
रुषदतिद्विषोग्नेवैश्वानरःस्वाहा ॥ अग्नयेवैश्वानरायेदं ॥ ४ ॥ ॐनमःसुतेनिर्ऋतेविश्वरूपेयस्मयंविचृताबंधमेतं ॥ यमे
नत्वंयम्यासंविदानोत्तमन्नाकमधिरोहयेमगुँस्वाहा ॥ निर्ऋतयेविश्वरूपायैयमायेदं ॥ ५ ॥ ॐयत्तेदेवीनिर्ऋतिराबबंध
दामग्रीवास्वविचर्त्यं ॥ इदंतेतद्विष्याम्यायुषोनमध्यदथाजीवः पितुमद्धिप्रमुक्तःस्वाहा ॥ देव्यैनिर्ऋतयइदं॥६॥ॐयस्या
स्तेअस्याः क्रूरआसंजुहोम्येषाबंधानामवसर्जनाय ॥ भूमिरितित्वाजनाविदुर्निर्ऋतितित्वाहंपरिवेदाविश्वतः स्वाहा ॥ भू
म्यैनिर्ऋत्याइदं ॥ ७ ॥ ॐअसुन्वन्तमयजमानमिच्छस्तेनस्येत्यांतस्करस्यान्वेषि ॥ अन्यमस्मदिच्छसातइत्यानमोदे
विनिर्ऋतेतुभ्यमस्तुस्वाहा ॥ देव्यैनिर्ऋत्याइदं ॥ ८ ॥ ॐदेवीमहंनिर्ऋतिंवंदमानः पितेवपुत्रंदसयेवचोभिः ॥ विश्वस्य
याजायमानस्यवेदाशिरः शिरः प्रतिसूरीविचष्टेस्वाहा ॥ देव्यैनिर्ऋत्याइदं ॥ ९ ॥ ॐनिवेशनस्संगमनोवसूनांविश्वारू
पाभिचष्टेशचीभिः ॥ देवइवसवितासत्यधर्मेंद्रोनतस्थौसमरेपाथिनागुँस्वाहा ॥ देवायसवित्रइंद्रायेदं ॥ १० ॥ ॐसंवर
त्रादधातननिराहावांकृणोतन ॥ सिंचामहाअवटमद्रिणंवयंविश्वाहादस्तुमक्षितगुँस्वाहा ॥ अवटायाक्षितायेदं ॥ ११ ॥

ॐनिष्कृताहावमवटगुँसुवरत्रगुँसुषेचनं ॥ उद्रिणगुँसिंचेअक्षितगुँस्वाहा ॥ अवटायाक्षितायेदं ॥ १२ ॥ ॐसीरायुंजं
तिकवयोयुगावितन्वतेपृथक् ॥ धीरादेवेषुसुम्नयास्वाहा ॥ देवेभ्यइदं ॥ १३ ॥ ॐयुनक्तसीराव्रियुगातनोतकृतेयोनाव
पतेहवीजं ॥ गिराचश्रुष्टिस्सभराअसन्नोनेदीयइत्सृण्यापक्वमेरयत्स्वाहा ॥ सीराभ्यांबीजायेदं ॥ १४ ॥ लांगलंपवीर
वगुँसुशेवगुँसमतित्सरु ॥ उदत्कृषतिगामविंप्रभव्यंचपविर्री ॥ प्रस्थावद्रथवाहनगुँस्वाहा ॥ लांगलायेदं॥१५॥शुनन्नः
फालाविनुदंतुभूमिगुँशुनंकीनाशाअभियंतुवाहान् ॥ शुनंपर्जन्योमधुनापयोभिः शुनासीराशुनमस्मासुधत्तगुँस्वाहा॥ फा
लेभ्यः कीनाशेभ्यः पर्जन्यायशुनासीराभ्यामिदं ॥ १६ ॥ ॐकामंकामदुघेधुक्ष्वमित्रायवरुणायच ॥ इंद्रायाग्नयेपूष्णओ
षधीभ्यः प्रजाभ्यःस्वाहा ॥ मित्रावरुणायेंद्रायाग्नयेपूष्णओषधीभ्यः प्रजाभ्यइदं ॥१७॥ घृतेनसीरामधुनासमक्ता
विश्वैर्देवैरनुमतामरुद्भिः ॥ ऊर्जस्वतीपयसापिन्वमानास्मान्त्सीरेपयसाभ्यावत्स्वास्वाहा॥ विश्वेभ्योदेवेभ्योमरुद्भ्यऊ
र्जस्वत्यैसीतायाइदं ॥ १८ ॥ इतिहुत्वाथस्विष्टकृत्प्रभृतिवरदानांतंब्रह्मजज्ञानंपिताविराजोतिद्वाभ्यांदर्भस्तंभेहुतशेषंनि
धायहोमशेषंसमाप्य समारोपणंकृत्वातस्मिन्नेवाग्नौसायंप्रातरौपासनादिसर्वंकुर्यात् ॥ इतिकारिकाविष्णुभट्टीप्रयोगोक्ता
ग्निद्वयसंसर्गप्रयोगः ॥ ७ ॥ विष्णुभट्टीप्रयोगेप्रकारांतरमप्युक्तं ॥ यथा ॥ यद्वैकस्यामेवसमिधिद्वावप्यग्निक्र
मेणमंत्रवत्समारोप्यस्थंडिलोल्लेखनादिकंकृत्वा लौकिकाग्निंप्रतिष्ठाप्यतस्मिन्तांसमिधमाजुव्हानउद्बुध्यस्वभवतन्नइतिति
सृभिः प्रक्षिप्यपूर्ववत्संकल्प्याघारवत्तंत्रंमृडोनामाग्निर्वैश्वानरोग्निर्देवता ॥चरुर्हविरित्याद्यन्वाधानांतंकृत्वाज्यसंस्कृत्यस्रु

चिचतुर्गृहीतंगृहीत्वासमिद्वत्यग्नौपारिश्रितेपत्नीभ्यामन्वारब्धः सप्ततेअग्नइतिपू र्णाहुतिंहुत्वापुनःसंधानवद्ब्रह्मणेवरंदत्वा ग्निमुखांतंकृत्वापक्वाज्जुहोति ॥ ॐवैश्वानरोनऊत्याप्रयातुपरावतः॥अग्निरुक्थेनवाहसों पृष्टोदिविपृष्टोअग्निःपृथिव्यां पृष्टोविश्वाओषधीराविवेश ॥वैश्वानरःसहसापृष्टोअग्निः सनोदिवासरिषः पातुनक्तगुँस्वाहा ॥वैश्वानरायाग्नयइदं ॥ अ थस्विष्टकृतमवदायांतः परिधौनिधायाथाज्याहुतीरुपजुहोति ॥ ॐवैश्वानरोनऊत्या०॥०वैश्वानरायाग्नयइदं ॥१॥ ॐऋ तावानंवैश्वानरमृतस्यज्योतिषस्पतिं ॥ अजस्रंघर्ममीमहेस्वाहा ॥ वैश्वानरायज्योतिष्मतयइदं ॥ २ ॥ ॐवैश्वानरस्य दगुँसनाभ्योबृहदरिणादेकस्वपस्ययाकविः ॥ उभापितरामहयन्नजायताग्निर्द्यावापृथिवीभूरिरेतसेस्वाहा ॥ वैश्वानरा याग्नयेद्यावापृथिवीभ्यामिदं ॥ ३ ॥ ॐपृष्टोदिवि ÷ नक्तगुँस्वाहा ॥ वैश्वानराग्नयइदं ॥ ४॥ ॐजातोयदग्नेभुवनाव्यख्यः पशून्नगोपाइर्यः परिज्मा ॥ वैश्वानरब्रह्मणेविंदगातुंयूयंपातस्वस्तिभिः सदानःस्वाहा ॥ अग्नयेवैश्वानरायब्रह्मणइदं ॥ ॥५॥ॐत्वमग्नेशोचिषाशोशुचानआरोदसीअपृणाजायमानः ॥ त्वंदेवागुँअभिशस्तेरमुंचोवैश्वानरजातवेदोमहित्वास्वा हा ॥ अग्नयेवैश्वानरायजातवेदसइदं ॥ ६ ॥ ॐअस्माकमग्नेमघवत्सुधारयानामिक्षत्रमजरगुँसुवीर्यं ॥ वयंजयेमशतिन गुँसहस्रिणंवैश्वानरवाजमग्नेतवोतिभिः स्वाहा ॥ वैश्वानरायाग्नयइदं ॥ ७॥ ॐवैश्वानरस्यसुमतौस्यामराजाहिकंभुवना नामभिश्रीः ॥ इतोजातोविश्वमिदंविचष्टेवैश्वानरोयततेसूर्येणस्वाहा ॥ वैश्वानरायसूर्यायेदं ॥ ८ ॥ ॐदधिक्राव्णोअका रिषं ÷ तारिषत्स्वाहा ॥ दधिक्राव्णइदं ॥९॥ ॐउद्बुध्यस्वाग्ने०॥०अग्नयइदं ॥१०॥ ॐयस्मैत्वगुँसुकृतेजातवेदः०॥०जात

वेदसेन्नयइदं ॥ ११ ॥ ॐस्वस्तिनइंद्रोवृद्धश्रवाः ॥ इंद्रायवृद्धश्रवसेपूष्णेविश्ववेदसेताक्ष्यायारिष्टनेमयेस्वस्तयबृहस्पत
यइदं ॥ १२ ॥ ॐभूःस्वाहा ॥ ॐभुवःस्वाहा ॥ ॐसुवःस्वाहा ॥ ॐभूर्भुवःसुवःस्वाहा ॥ पूर्ववदुद्देशत्यागः ॥ १६ ॥
इतिषोडशाहुतीर्हुत्वास्विष्टकृदादिवरदानांतेग्रेणाग्निंपालाशपर्णेषुहुतशेषंनिदधाति ॥ वैश्वानरोनऊत्यापृष्टोदिवीतिद्वा
भ्यामथोत्तरपरिषेकादिहोमशेषंसमापयेत् ॥ यद्याहिताग्निश्चेद्विवाहकर्मणामनंतरमरण्योरग्निंसमारोप्यउदवसायमथि
त्वाग्नीन्विहृत्योद्वासिनीमिष्टिंकृत्वा समिध्यारोप्यपूर्ववदग्निंसंयोज्यब्रह्मौदनाद्याधेयिकंकर्मकृत्वासायंप्रातरग्निहोत्रंकु
र्यात् ॥ इत्याहिताग्नेरग्निद्वयसंसर्गविधिः ॥ ॥ अथद्वितीयविवाहः ॥ संग्रहे ॥ प्रमदामृतिवत्सरादितः पुन
रुद्वाहविधिर्वरस्यच ॥ विषमेमृतिवत्सरेशुभोयुगुलोवापिमृतिप्रदोभवेत् ॥ तृतीयविवाहविषयेयाज्ञवल्क्यः ॥ सत्याम
न्यांसवर्णायांधर्म्यंकार्यंनकारयेत् ॥ सवर्णासुविधौधर्म्येज्येष्ठयैवविनेतरां॥पैंग्यः॥ ब्रह्मचर्यंसमाप्यैवंभार्ययोर्द्वितयंतथा॥
तृतीयान्नोद्वहेद्विप्रइतिधर्मविदोविदुरिति ॥ कश्यपः ॥ अपाकृत्यऋणंचार्षंलक्षणांस्त्रियमुद्वहेत् ॥ एकांतुपितृदेवार्थंरत्य
र्थमपरांतुवा ॥ तृतीयाम्मानुषीन्नैवचतुर्थीयस्समुद्वहेत् ॥ पुत्रपौत्रादिसंपन्नः कुटुंबीसाग्निकोज्वलः ॥ उद्वहेद्रतिसिद्ध्य
र्थंतृतीयांनकदाचन ॥ मोहादज्ञानतोवापियादिगच्छेत्तुमानुषीं ॥ नश्यत्येवनसंदेहोगार्ग्यस्यवचनंयथा ॥ धर्माचारनि
मित्तोपिनोद्वहेन्मानुषींस्त्रियं ॥ तृतीयांयदिचोद्वाहेत्तर्हिसाविधवाभवेत् ॥ तृतीयविवाहस्यमानुषीविषयत्वात्तत्रार्ककन्यांवि
वाहेत् ॥ तथाचसंग्रहे ॥ तृतीयोयदिचोद्वाहस्तर्हिसाविधवाभवेत्॥ चतुर्थादिविवाहार्थंतृतीयेर्कंसमुद्वहेदिति ॥ तद्विधानमु

च्यतेसंग्रहे ॥ आदित्यदिवसेवापिहस्तर्क्षेवाशनैश्चरे ॥ शुभेदिनेवापूर्वाण्हेकुर्यादर्कविवाहकं ॥ ग्रामात्प्राच्यामुदीच्यां
वासुपुष्पफलसंयुतं ॥ परीक्ष्ययत्नतोधस्तात्स्थंडिलादियथाविधि ॥ स्नात्वालंकृतवासास्तुरक्तगंधादिभूषितः ॥ सपुष्प
फलशाखैकमर्कगुल्मंसमाश्रयेत् ॥ सुलक्षणेनसंयुक्तमर्कसंस्थाप्ययत्नतः॥अर्ककन्याप्रदानार्थमाचार्यंकल्पयेत्पुरा ॥ अ
र्कसंनिधिमागत्यतत्रस्वस्त्यादिवाचयेत् ॥ नांदीश्राद्धंहिरण्येनपितृवर्गान्प्रपूजयेत् ॥ पूजयेन्मधुपर्केणवरंविप्रस्यह
स्ततः ॥ यज्ञोपवीतंवस्त्रंचहस्तकर्णादिभूषणं ॥ उष्णीषगंधमाल्यादिवरायास्मैप्रदापयेत् ॥ स्वशाखोक्तप्रकारेणमधुप
र्कसमाचरेत् ॥ ब्रह्मपुराणे ॥ कृत्वार्कपुरतस्तिष्ठन्प्रार्थयेत्तुद्विजोत्तमः ॥ त्रिलोकवासिन्सप्ताश्वछाययासहितोरवे ॥ तृ
तीयोद्वाहजंदोषंनिवारयसुखंकुरु ॥ तत्राध्यारोप्यदेवेशंछाययासहितंरविं ॥ वस्त्रैर्माल्यैस्तथागंधैस्तत्तन्मंत्रेणपूजयेत् ।
अर्कंप्रदक्षिणंकुर्याज्जपेन्मंत्रमिमंबुधः ॥ ममप्रीतिकरायेयंममसृष्टापुरातनी ॥ अर्कजाब्रह्मणासृष्टाअस्माकंप्रतिरक्षतु ।
पुनः प्रदक्षिणंकुर्यान्मंत्रेणानेनमंत्रवित् ॥ नमस्तेमंगलेदेविनमःसवितुरात्मजे ॥ त्राहिमांकृपयादेविपत्नीत्वंमइहागता।
वृक्षाणामादिभूतस्त्वंदेवानांप्रीतिवर्धनः ॥ तृतीयोद्वाहजंदोषंमृत्युंचाशुविनाशय॥ ततश्चकन्यावरणंत्रिपुरुषंकुलमुच्चरेत्।
आदित्यःसविताचार्कः पुत्रीपौत्रीप्रपौत्रिका ॥ गोत्रंकाश्यपइत्युक्तंलोकेलौकिकमाचरेत् ॥ सुमुहूर्तेनिरीक्षेतस्वस्तिसू
क्तमुदीरयेत् ॥ आशीर्भिः सहितः कुर्यादाचार्यप्रमुखैर्द्विजैः ॥ अथाचार्यंसमाहूयविधिनातन्मुखाद्व्रतां ॥ प्रतिगृह्यतते
होमंगृह्योक्तविधिनाचरेत्॥ (आचार्यस्तद्दानमंत्रमुच्चार्यदद्यात्तांप्रतिगृण्हीयादित्यर्थः ) ॥ व्यासः ॥ अर्ककन्यामिमांवि

यथाशक्तिविभूषिता ॥ गोत्रायशर्मणेतुभ्यंदत्तांविप्रसमाश्रय ॥ अंजल्यक्षतपूर्णानिकृत्वाकौतुकबंधनं ॥ यावत्पंचावृतंसूत्रं
तावदर्कंप्रवेष्टयेत् ॥ स्वशाखोक्तेनमंत्रेणगायत्र्यावाथवाजपेत् ॥ पंचकृत्यपुनः सूत्रंकंठेबध्नातिमंत्रतः ॥बृहत्सामेतिमंत्रेणसू
त्रेरक्षांप्रकल्पयेत् ॥ अर्कस्यपुरतः पश्चाद्दक्षिणोत्तरयोस्तथा ॥ कुंभांश्वानिक्षिपेत्पश्चादाग्नेयादिचतुष्टये ॥ सवस्त्रप्र
तिमाकुंभंत्रिःसूत्रेणैववेष्टयेत् ॥ हरिद्रागंधसंयुक्तंपूरयेच्छीतलंजलं ॥ प्रतिकुंभंमहाविष्णुंसंपूज्यपरमेश्वरं ॥ पाद्यार्घ्या
दिनिवेद्यांतंप्रकुर्यान्नाममंत्रतः ॥ शौनकः ॥ तृतीयेचविवाहेतुसंप्राप्तेपुरुषस्यतु ॥ अर्कविवाहंवक्ष्यामिशौनकोहंविधान
तः ॥ अर्कसन्निधिमागत्यतत्रस्वस्त्यादिवाचयेत् ॥ नांदीश्राद्धंप्रकुर्वीतस्थंडिलंतुप्रकल्पयेत् ॥ अर्कमभ्यर्च्यसोर्थीचगं
धपुष्पाक्षतादिभिः ॥ स्वयंचालंकृतस्तद्वद्वस्तुमाल्यादिभिः शुभैः ॥ अर्कस्योत्तरदेशेतुसमन्वारब्धएतया ॥ उल्लेखना
दिकंकुर्यादघोरांतमतः परं ॥ आज्याहुतिंचजुहुयात्संगोभिरतिचैकया ॥ यस्मैत्वंकामकामायेत्येकयाथघृतंहुनेत् ॥
व्याहृतिभिश्चहुत्वाथहोमशेषंसमापयेत् ॥ पुनः प्रदक्षिणंकुर्यान्मंत्रमेतमुदीरयेत् ॥ मयाकृतमिदंकर्मस्थावरेषुजरायुजा ॥
अपत्यानिचमेदेहितत्सर्वंक्षंतुमर्हसि ॥ इत्युक्त्वाशांतिसूक्तानिजप्त्वातंविसृजेत्पुनः ॥ गोयुग्मंदक्षिणांदद्यादाचार्यायचभ
क्तितः ॥ इतरेभ्योपिविप्रेभ्योदक्षिणांचापिभक्तितः ॥ तत्सर्वंगुरवेदद्यादंतेपुंण्याहमाचरेदिति ॥ ब्रह्मपुराणे ॥ चतुर्थेदि
वसेतीतेयमभ्यर्च्यततःपरं ॥ व्यस्ताःसमस्ताव्याहृतीस्ततश्चास्विष्टकृद्भवेत् ॥ परिषेचनपर्यंतमयाश्चेत्यादिभिः क्र
मात् ॥ विसृज्यहोममग्निंचविधिनामानुषींपुरा ॥ उद्वहेदन्यथानैवपुत्रपौत्रादिवृद्धिमान् ॥ नपशून्नचमित्राणिमंगलंवैप्रय

च्छति ॥ एवमेवद्विजश्रेष्ठोविधिनासम्यगुद्वहेत् ॥ धनधान्यसमृद्धिंचसम्यगर्कःप्रयच्छति ॥ इत्यर्कविवाहः ॥ ५॥ अथ प्रयोगः ॥ अर्कवासरेशनिवासरेहस्तनक्षत्रेवान्यस्मिन्वाशुभेदिनेपूर्वाण्हेस्नात्वावाससीपरिधायरक्तगंधभूषणैरलंकृत्य ग्रामात्प्राच्यामुदीच्यांवाफलपुष्पशाखयुक्तैकार्कवृक्षमूलंगत्वाउपलेपनादिभिरलंकृत्य पुंण्याहपूर्वकंहिरण्येननांदीश्राद्धं कृत्वागणपतिंसंपूज्य ममार्कविवाहंकर्तुंस्वस्तिपुंण्याहवाचनंकरिष्यइतिसंकल्प्यआदित्यः प्रीयतामितिविशेषः ॥ अथा र्ककन्याविवाहार्थमाचार्यंत्वांवृणइत्याचार्यंवृत्वाततोवरआसनप्राणायामौकृत्वादेशकालौसंकीर्त्य ममतृतीयमानुषीविवा हदोषपरिहारार्थमर्कविवाहंकरिष्यइतिसंकल्प्याथार्कवृक्षेवातत्समीपेवाछाययादेव्यासहितंसूर्यमावाह्यासनपाद्यादिषोड शोपचारान्कृत्वाप्रार्थयेत् ॥ त्रिलोकवासिन्सप्ताश्वछाययासहितोरवे ॥ तृतीयोद्वाहजंदोषंनिवारयसुखंकुरु ॥ इ तिप्रार्थ्य ॥ ममप्रीतिकरायेयंमयासृष्टापुरातनी ॥ अर्कजाब्रह्मणासृष्टाअस्माकंपरिक्षतु ॥ नमस्तेमंगलेदेविनमःसवि तुरात्मजे ॥ त्राहिमांकृपयादेविपत्नीत्वंमइहागता ॥ इतिप्रदक्षिणनमस्कारान्कृत्वा ॥ अर्कस्त्वंब्रह्मणासृष्टस्सर्वप्राणि हितायच ॥ वृक्षाणामादिभूतस्त्वंदेवानांप्रीतिवर्धनः ॥ तृतीयोद्वाहजंदोषंमृत्युंचापिविनाशय ॥ इतिप्रार्थ्य ॥ ततआचा र्योवरार्कवृक्षयोर्मध्येस्वस्तिकादिभिरलंकृतवस्त्रंधारयित्वाकाश्यपगोत्रोत्पन्नामादित्यप्रपौत्रींसवितृपौत्रीमर्कपुत्रीमिमाम र्ककन्यांवृणीमहइत्युक्ते ॥ विश्वामित्रगोत्रोद्भवायामुकप्रपौत्रायामुकपौत्रायामुकपुत्रायामुकशर्मणेवरायइमांकन्यांवृणी ध्वं ॥ इत्युक्त्वासुमुहूर्तोनिरीक्ष्य स्वस्तिनोमिमीतेतिस्वस्तिसूक्तंपठित्वाततआचार्योदेशकालौसंकीर्त्यार्ककन्यादानमहंक

रिष्यइतिसंकल्प्यार्ककन्यांवरंचसंपूज्यामुकगोत्रोद्भवायामुकप्रपौत्रायामुकपौत्रायामुकपुत्रायामुकशर्मणेवराय ॥ काश्य
पगोत्रोत्पन्नामादित्यप्रपौत्रींसवितृपौत्रीमर्कपुत्रीमिमांकन्यांतुभ्यमहंसंप्रददेश्रियेनममेतिदत्वा ॥ अर्ककन्यामिमांविप्र
यथाशक्तिविभूषितां ॥ गोत्रायशर्मणेतुभ्यंदत्तांविप्रसमाश्रय ॥ अथगायत्र्यावृतपंचगुणसूत्रेणकंकणबंधमिदानींवावा
ग्दानात्पूर्ववातंडुलपूर्णहस्तेबृहत्सामेतिबध्वातद्वत्पंचगुणसूत्रंकन्याकंठेबध्वाबृहत्सामेतिरक्षांकुर्यात् ॥ अथार्कस्याग्नेया
दिचतुर्दिक्षुवस्त्रप्रतिमासहितांश्चतुरःकलशान्प्रतिष्ठाप्यहरिद्रागंधयुक्तजलंपूरयित्वातेषुविष्णुमावाह्यविष्णवेनमइतिनाम
मंत्रेणपाद्यादिनैवेद्यांतंकृत्वातदुत्तरदेशेस्थंडिलेोल्लेखनंकृत्वाग्निंप्रतिष्ठाप्यपत्न्यान्वारब्धः प्राणानायम्यदेशकालौसंकीर्त्या
र्कविवाहहोमंकरिष्यइतिसंकल्प्यार्कविवाहहोमःकर्माघारवत्तंत्रंयोजकोनामाग्निस्सवितादेवता ॥ चरुर्हविरित्याद्याग्निमु
खांतंकृत्वागायत्र्यापक्वंहुत्वास्विष्टकृतमवदायांतःपरिधौनिधायाथाज्याहुतीरुपजुहोति ॥ संगोभिरित्यस्यांगिराऋषिः
त्रिष्टुप्छंदःबृहस्पतिर्देवता ॥ ॐसंगोभिरांगिरसोनक्षमाणोभगइवेदर्यमणान्निनाय ॥ जनेमित्रोनदंपतीअनक्तिबृहस्प
तेवाजयाशुंरिवाजौस्वाहा ॥ बृहस्पतयइदं ॥ ॐयस्मैत्वंकामकामायवयंसम्राडयजामहे ॥ तमस्मभ्यंकामंदत्वाथे
दंघृतंपिबस्वाहा ॥ अग्नयइदं ॥ २ ॥ व्याहृतीर्हुत्वास्विष्टकृदादिहोमशेषंसमाप्याचार्यायगोद्वयंदक्षिणांदत्वातंप्रार्थ
मयाकृतमिदंकर्मस्थावरेषुजरायुणा ॥ अर्कापत्यानिमेदेहितत्सर्वंक्षंतुमर्हसि ॥ इतिप्राथ्यकलशप्रोक्षणंकृत्वाविस[illegible]॥
अथपंचमेदिनेतमेवार्कमभ्यर्च्याग्निंप्रतिष्ठाप्य प्राणानायम्यार्कविवाहशेषहोमंकरिष्यइतिसंकल्प्याज्यंसंस्कृत्यायाश्चाग्ने

रितिहुत्वाव्याहृतीर्व्यस्तास्समस्ताश्चजुहुयात् ॥ इत्यर्कविवाहःसमाप्तः ॥ ॥ ७ ॥ ॥ अथरंभाविवा
हः ॥ रंभाविवाहंवदतिभगवांछौनकोमुनिः ॥ अर्कोद्वाहंविनानैवतृतीयांचोद्वहेद्द्विजः ॥१॥ ज्येष्ठोपिचेत्सरोगःस्याद्विक
लांगःक्षयादिना ॥ त्वग्दोषःकुब्जउन्मत्तअंधोमूकोभवेद्यदि ॥ २ ॥ एतेषांचैवपुत्राणांविवाहंकारयेद्यदि ॥ विवाहोक्त
दिनेकुर्यात्स्वगृह्योक्तविधानतः ॥ ३ ॥ नांदीमुखांकुरौचैवरक्षाबंधंचवर्जयेत् ॥ रंभामूलांतरंगत्वादेहलींकारयेदथ॥४॥
गोमयेनोपलिप्याथस्वस्तिवाचनपूर्वकं ॥ संकल्पंचततःकुर्यात्कन्यावरणवर्जितः ॥ ५ ॥ वस्त्राभरणमाल्यैश्चरंभामूलंतुवे
ष्टयेत् ॥ उपलेपादिसर्वत्रआज्यभागांतमाचरेत् ॥ ६ ॥ हस्तग्रहणवर्ज्यंस्यात्सप्तपाद्यादिवर्जयेत् ॥ स्वसूत्रोक्तविधानेन
विवाहाज्याहुतिर्हुनेत् ॥ ७ ॥ अश्मास्थापनलाजादिनकुर्याच्चप्रदक्षिणं ॥ ततःस्विष्टकृदारभ्यहोमशेषंसमापयेत् ॥ ८ ॥
औपासनंनकुर्वीतत्रिरात्रंव्रतमाचरेत् ॥ गंधपुष्पादितांबूलभक्षणंचनदोषकृत् ॥ ९ ॥ प्रसवांतेत्रिरात्रंतुसूतकव्रतमाचरे
त् ॥ तस्मात्सर्वप्रयत्नेनरंभाछेदनंकारयेत् ॥ १० ॥ इतिशौनकीयेरंभाविवाहविधिः ॥ ७ ॥ अथरंभाविवाहप्रयोगः॥
यदाज्येष्ठस्सहोदरोंधकुब्जादिदोषयुक्तोवामहारोगीवाभवेत्तदातस्यरंभाविवाहःकार्यः ॥यथा॥ विवाहोक्तदिनेरंभामूलंग
त्वातत्रदेहलींकल्पयित्वागोमयेनोपलिप्यासनप्राणायामौकृत्वागणपतिंसंपूज्य रंभाविवाहंकर्तुंपुण्याहवाचनंकरिष्यइति
संकल्प्याग्निः प्रीयतामित्युक्त्वाप्रोक्षणांतंकृत्वानांदीश्राद्धंवर्जयित्वाथवस्त्राभरणमाल्यादिभिरंभामूलमलंकृत्य स्थंडिलोल्ले
खनाद्यग्निंप्रतिष्ठाप्याचम्यप्राणानायम्यदेशकालौसंकीर्त्यममगृहस्थाश्रमसिद्ध्यर्थंरंभाविवाहहोमंकरिष्यइतिसंकल्प्यत

बैठा ॥५६॥ क्रमानुसार अन्न भोजन और जलपान छोड़कर योगाभ्यासमें निरतहो स्थिर आसनपर बैठ निरन्तर विश्वस्रष्टा प्रजापतिका ध्यान करने लगा ॥ ५७ ॥ इधर देवराज इन्द्र वृत्रासुरको तपस्यामें निरत जानकर अत्यन्त चिन्तायुक्त हुए और उसकी तपस्यामें विघ्नकरनेके निमित्त अमित प्रभावयुक्त गन्धर्व्व ॥ ५८ ॥ यक्ष, पन्नग, किन्नर, विद्याधर, अप्सरा और अन्यान्य देवतागणोंके दूतोंको भेज दिया ॥ ५९ ॥ वह मायावी गन्धर्व इत्यादि देवयोनि तपस्यामें विघ्न करनेके निमित्त अनेक उपायसे अनेक प्रकारकी चेष्टा और यत्न करने लगे किन्तु परम तपस्वी त्वष्टाका पुत्र अपने ध्यान योगसे किसी प्रकार विचलित न हुआ ॥ ६० ॥ इति श्रीदेवीभागवते महापुराणे

त्यक्त्वान्नं वारिपानं च योगाभ्यासपरायणः ॥ ध्यायन्विश्वसृजं चित्ते सोपविष्टःस्थिरासने ॥ ५७ ॥ मघवा तं तपस्यंतं ज्ञात्वा चिंतातुरो ह्यभूत्॥गंधर्वान्प्रेषयामास विघ्नार्थं पाकशासनः ॥५८॥ यक्षांश्च पन्नगान्सर्पान्किन्नरानमितौजसः ॥ विद्याधरानप्सरसो देव दूताननेकशः ॥५९॥ उपायास्तैः कृताः सम्यक्तपोविघ्नाय मायिभिः ॥ न चचाल ततो ध्यानात्त्वाष्ट्रः परमतापसः ॥६०॥ इति श्रीदेवीभागवते महापुराणे षष्ठस्कंधे तृतीयोऽध्यायः ॥ ३ ॥ व्यास उवाच ॥ निर्गतास्ते परावृत्तास्तपोविघ्नकराः सुराः ॥ निराशाः कार्यसंसिद्ध्यै तं दृष्ट्वा दृढचेतसम् ॥ १ ॥ जाते वर्षशते पूर्णे ब्रह्मा लोकपितामहः ॥ तत्राऽऽजगाम तरसा हंसारूढश्च तुर्मुखः ॥ २ ॥ आगत्य तमुवाचेदं त्वष्टृपुत्र सुखी भव ॥ त्यक्त्वा ध्यानं वरं ब्रूहि ददामि तव वांछितम् ॥ ३ ॥ तपसा तेऽद्य तुष्टोऽस्मि त्वां दृष्ट्वा चाऽतिकर्शितम् ॥ वरं वरय भद्रं ते मनोऽभिलषितं तव ॥ ४ ॥

षष्ठस्कन्धे भाषाटीकायां तृतीयोऽध्यायः ॥ ३ ॥ व्यासजीने कहा हे महाराज ! वृत्रासुरको दृढचित्त देखकर तपस्यामें विघ्न करनेवाले देवतागण कार्य्य सिद्धिके विषयमें निराश होगये और वहांसे निकलकर पुनर्वार अपने अपने स्थानको चले आये ॥ १ ॥ अनन्तर सौ वर्ष पूर्ण होनेपर लोकपितामह चतुरानन ब्रह्माजीने हंसपर चढ़ उस स्थानमें ॥ २ ॥ आनकर कहा हे वृत्रासुर ! तुम सुखी होओ इस समय ध्यान त्यागकर वरकी प्रार्थना करो मैं तुमको इच्छानुसार वर दूंगा ॥ ३ ॥ हे वत्स ! तपस्यासे तुम्हारा देह अत्यन्त क्षीण हो गया है तुम्हारी

इस उत्कट तपस्याको देखकर मैं इस समय अत्यन्त संतुष्ट हुआ हूं तुम्हारा कल्याण हो इस समय अभिलषित वरकी प्रार्थना करो ॥ ४ ॥ व्यासजीने कहा हे राजन् ! वृत्रासुर जगत्कर्त्ता ब्रह्माके अत्यन्त स्पष्टाक्षरयुक्त अमृतके समान भरे हुए वचन सुनकर योगपरित्याग आनन्दके आँसू गिराता हुआ सहसा खड़ा हो गया ॥ ५ ॥ तब ब्रह्माजीके सामने जाय विनय सहित मस्तक झुकाय उनके दोनों चरणोंमें प्रणाम किया और विनय नम्र हो तथा हाथ जोड उन तपस्यासे प्रसन्न वरप्रद ब्रह्माजीसे गद्गद वचन कहने लगा ॥ ६ ॥ हे प्रभो ! आपका दुर्लभ दर्शन प्राप्त करते ही अब मुझको सब देव ताओंका पद प्राप्त हुआ हे कमलासन ! मेरे मनमें एक दुष्पूरणीय वासना उपस्थित रहती है आप सर्वज्ञ

व्यास उवाच ॥ वृत्रस्तदाऽतिविशदां पुरतो निशम्य वाचं सुधासमरसां जगदेककर्तुः ॥ संत्यज्य योगकलनां सहसोदतिष्ठत्संजातहर्षनयनाश्रुकलाकलापः॥५॥पादौ प्रणम्य शिरसा प्रणयाद्विधातुर्बद्धांजलिः पुरत एव समाससाद ॥ प्रोवाच तं सुवरदं तपसा प्रपन्नं प्रेम्णाऽतिगद्गदगिरा विनयेन नम्रः॥६॥प्राप्तं मया सकलदेवपदं प्रभोऽद्य यद्दर्शनं तव सुदुर्लभमाशु जातम्॥वाञ्छाऽस्ति नाथ मनसि प्रवणे दुरापा तां प्रब्रवीमि कमलासन वेत्सि भावम् ॥७॥ मृत्युश्च मा भवतु मे किल लोहकाष्ठशुष्कार्द्रवंशनिचयैरपरैश्च शस्त्रैः ॥ वृद्धिं प्रयातु मम वीर्यमतीव युद्धे यस्माद्भवामि सबलैरमरैरजेयः॥८॥व्यास उवाच॥इत्थं संप्रार्थितो ब्रह्मा तमाह प्रहसन्निव॥उत्तिष्ठ गच्छ भद्रं ते वांछितं सफलं सदा॥९॥न शुष्केण नचाऽऽर्द्रेण न पाषाणेन दारुणा॥भविष्यति च ते मृत्युरिति सत्यं ब्रवीम्यहम्॥१०॥

हैं सब ही जान सकते हैं तथापि मैं उसको कहता हूं सुनिये ॥७॥ हे नाथ ! लोहा, काष्ठ, सूखी वा गीली वस्तु और बांस तथा अन्यान्य शस्त्रसमूह द्वारा मेरी मृत्यु नहीं हो और युद्धमें मेरी वीरता अत्यन्त वृद्धिको प्राप्त हो और मैं सैन्यसहित सब देवतागणोंसे अजय हूं ॥ ८ ॥ व्यासजीने कहा हे राजन् ! जब वृत्रासुरने ब्रह्माके निकट इस प्रकार प्रार्थना करी तब कमलासन कुछेक हँसते हुए कहने लगे हे वत्स ! उठकर इच्छानुसार स्थानमें जाओ तुम्हारा मंगल हो तुमने जो प्रार्थना की वह तुम्हारा मनोरथ सर्वदा ही सफल होगा सूखी व गीली वस्तुसे अथवा पत्थर तथा अन्यान्य काष्ठादिद्वारा तुम्हारी मृत्यु नहीं होगी यह मैंने तुम्हारे निकट सत्य ही कहा है ॥ ९ ॥ १० ॥

प्रजापति वृत्रासुरको इस प्रकार वर देकर ब्रह्मलोकको चले गये वृत्रासुर भी वर प्राप्तकर प्रसन्न हो घरको चलागया ॥ ११ ॥ अनन्तर वृत्रासुरने पिताके निकट इस वर प्राप्त करनेकी वार्त्ता निवेदन की, विश्वकर्म्मा पुत्रके वरप्राप्त करनेकी वार्त्ता सुन प्रसन्न सन्तुष्ट होकर कहने लगे॥ १२ ॥ हे महाभाग ! तुम्हारा मंगल हो तुममेरे परम शत्रु शतक्रतुको मारो उस त्रिशिराके मारनेवाले पापात्मा इन्द्रको मारकर फिर इस स्थानमें आओ ॥१३॥ तुम संग्रामजीत देवताओंके अधीश्वर होकर मेरी पुत्रजनित अत्यन्त मनोव्यथा दूर करो ॥ १४ ॥ पिता जब जीवित हो तब उनकी आज्ञा पालन, मृत्यु दिवस श्राद्ध दिनमें भोजनदान और गयामें पिण्डदान इन तीन कार्य्योंसेही पुत्रका पुत्रत्व होता है ॥ १५ ॥

इति दत्त्वा वरं ब्रह्मा जगाम भुवनं परम् ॥ वृत्रस्तु तं वरं लब्ध्वा मुदितः स्वगृह ययौ॥११॥शशंस पितुरग्रे तद्वरदानं महामतिः ॥ त्वष्टा तु मुदितः प्राप्तं पुत्रं प्राप्तवरं तदा ॥१२॥ स्वस्ति तेऽस्तु महाभाग जहि शक्रं रिपुं मम ॥ हत्वा गच्छ त्रिशिरसो हंतारं पाप संयुतम् ॥१३॥ भव त्वं त्रिदशाधीशः संप्राप्य विजयं रणे ॥ ममाधिं छिंधि विपुलं पुत्रनाशसमुद्भवम् ॥१४॥ जीवतो वाक्यकर णात्क्षयाहे भूरि भोजनात् ॥ गयायां पिंडदानाच्च त्रिभिः पुत्रस्य पुत्रता ॥ १५ ॥ तस्मात्पुत्र ममाऽत्यर्थं दुखं नाशितुमर्हसि ॥ त्रिशिरा मम चित्तात्तु नाऽपसर्पति कर्हिचित् ॥१६॥ सुशीलः सत्यवादी च तापसो वेदवित्तमः ॥ अपराधं विना तेन निहतः पापबु द्धिना ॥ १७ ॥ व्यास उवाच ॥ इति तस्य वचः श्रुत्वा पुत्रः परमदुर्जयः ॥ रथमारुह्य तरसा निर्जगाम पितुर्गृहात् ॥ १८ ॥ रणदुंदुभिनिर्घोषं शंखनादं महाबलम् ॥ कारयित्वा प्रयाणं स चकार मदगर्वितः ॥ १९ ॥

अतएव हे पुत्र ! तुम मेरे वचनकी रक्षा करके मेरा दुःख दूर करनेमें यत्नवान् होओ तुम निश्चय ही जानो कि त्रिशिरा मेरे मनसे कभी दूर नहीं होता ॥ १६ ॥ वह त्रिशिरा सुशील सत्यवादी तपस्वी और वेदके जाननेवालोंमें अग्रगण्य था हाय ! मेरे उसी गुणवान् प्रिय पुत्रको पापबुद्धि इन्द्रने विना अपराध ही मारा है ॥ १७ ॥ व्यासजीने कहा हे महाराज ! वह अत्यन्त दुर्ज्जय वृत्रासुर उनका यह वचन सुन रथपर चढ़कर शीघ्र पिताके घरसे निकला ॥ १८ ॥ उस मदसे गर्वित असुरने जब अपनी महती सेनाके सहित रणके उद्देशसे गमन किया तब रणदुन्दुभिका

शब्द और शंखनाद होनेलगा ॥१९॥ वह नीतिसम्पन्न वृत्रासुर चलनेके समय अपनी सेनासे कहने लगा आज देवताओंके राजा इन्द्रको मारक अकण्टक देवताओंका राज्य ग्रहण करूंगा ॥२०॥ हे राजन् ! असुरराज यह कह सैन्य समूहसे परिवृत हो महान् सेनाके शब्दसे अमरावतीको भय उत्पन्न कराता हुआ शीघ्र निकला ॥२१॥ हे भारत ! देवराज इन्द्र उसको आता हुआ जान भयसे संत्रस्त हो शीघ्र सेनागणोंका उद्योग करके कहने लगे ॥२२॥ और शीघ्र ही सब लोकपालगणोंको बुलाय युद्धके निमित्त प्रेरण कर स्थिति करने लगे ॥२३॥ वह महाद्युति शत्रु-तापन पाकशासन (इन्द्र) गृध्रव्यूह ( गृध्रपक्षीके समान सेना विशेष ) बनाय अवस्थिति करने लगे इधर शत्रुओंका मारनेवाला वृत्रासुर वेग-

निर्ययौ नयसंयुक्तः सेवकानिति संवदन् ॥ हत्वा शक्रं ग्रहीष्यामि सुरराज्यमकंटकम् ॥२०॥ इत्युक्त्वा निर्जगामाऽऽशु स्वसैन्य परिवारितः ॥ महता सैन्यनादेन भीषयन्नमरावतीम् ॥२१॥ तमागच्छंतमाज्ञाय तुराषाडपि सत्वरः ॥ सेनोद्योगं भयत्रस्तः कारया मास भारत ॥२२॥ सर्वानाहूय तरसा लोकपालानरिंदमः ॥ युद्धार्थं प्रेरयन्सर्वान्सर्वान्व्यरोचत महाद्युतिः॥२३॥गृध्रव्यूहं ततः कृत्वा संस्थितः पाकशासनः॥तत्राऽजगाम वेगाच्च वृत्रः परबलार्दनः॥२४॥ देवदानवयोस्तावत्संग्रामस्तुमुलोऽभवत्॥ वृत्रवासवयोः संख्ये मनसा विजयैषिणोः॥२५॥ एवं परस्परं युद्धे संदीप्ते भयदे भृशम्॥ आकूतं देवताः प्रापुर्दैत्याश्च परमां मुदम्॥२६॥ तोमरैर्भिंदिपालैश्च खड्गैः परशुपट्टिशैः॥ जघ्नुः परस्परं देवदैत्याः स्वस्वमरायुधैः ॥२७॥ एवं युद्धे वर्तमाने दारुणे लोमहर्षणे ॥ शक्रं जग्राह सहसा वृत्रः क्रोधसमन्वितः ॥ २८ ॥ अपावृत्य मुखे क्षिप्त्वा स्थितो पुत्रः शतक्रतुम् ॥ मुदितोऽभून्महाराज पूर्ववैरमनुस्मरन् ॥ २९ ॥

सहित आये उसी स्थानमें उपस्थित हुआ ॥२४॥ इसके उपरान्त देवता और दानवगणोंका तुमुल संग्राम आरंभ हुआ विजयकी इच्छा करनेवाले वृत्रासुर और इन्द्र घोरयुद्ध करने लगे ॥ २५ ॥ इस प्रकार उस भयंकर युद्धकी अग्निको प्रदीप्त हुआ देख देवतागण विमर्ष और दैत्यगण हर्षको प्राप्त हुए ॥ २६ ॥ देवता और दैत्यगण तोमर, भिन्दिपाल, खड्ग, परशु, पट्टिश इत्यादि अपने अपने शस्त्रोंसे परस्पर प्रहार करने लगे ॥२७॥ इसी प्रकार दारुण लोमहर्षण युद्ध उपस्थित हुआ. क्रोधयुक्त वृत्रासुरने इन्द्रको सहसा ग्रहण कर लिया॥ २८ ॥ और कवच तथा

वस्त्रादि आवरणरहित कर मुखमें डाल ग्रासपूर्वक पहलेकी शत्रुता स्मरणकर अत्यन्त प्रसन्न चित्तसे स्थिति करने लगा ॥ २९ ॥ वृत्रासुरके इन्द्रका ग्रास करनेपर देवतागण अत्यन्त संत्रस्त और कातर हो हा इन्द्र!हा इन्द्र!कह बारबार चीत्कार करने लगे ॥ ३० ॥ देवतागण इन्द्रको कवचादिरहित और वृत्रासुरके मुखमें स्थित जानकर दीन और व्यथितमन हो बृहस्पतिजीको प्रणामकर कहने लगे ॥ ३१ ॥ हे द्विजेन्द्र ! आप हमारे परमगुरु हैं इस समय क्या कर्त्तव्य है? देवतागणोंकी रक्षा करनेपरभी वृत्रासुरने इन्द्रको ग्रास किया है ॥ ३२ ॥ हम सभी हीन पराक्रम हैं अतएव हम इन्द्रके विना क्या करेंगे ? हे विभो ! आप इन्द्रको छुडानेका शीघ्र विचार कीजिये ॥ ३३ ॥ बृहस्पतिजीने कहा हे देवता-

शक्रे ग्रस्तेऽथ वृत्रेण संभ्रांता निर्जरास्तदा ॥ चुक्रुशुः परमार्तास्ते हा शक्रेति मुहुर्मुहुः ॥ ३० ॥ अपावृतं मुखे शक्रं ज्ञात्वा सर्वे दिवौकसः ॥ बृहस्पतिं प्रणम्योचुर्दीना व्यथितचेतसः ॥ ३१ ॥ किं कर्तव्यं द्विजश्रेष्ठ त्वमस्माकं गुरुः परः ॥ शक्रो ग्रस्तस्तु वृत्रेण रक्षितो देवतांतरैः ॥३२॥ विना शक्रेण किं कुर्मः सर्वे हीनपराक्रमाः ॥ अभिचारं कुरु विभो सत्वरः शुक्रमुक्तये ॥ ३३ ॥ बृहस्पतिरुवाच ॥ किं कर्तव्यं सुरा क्षितो मुखमध्येऽस्ति वासवः ॥ वृत्रेणोत्सादितो जीवन्नस्ति कोष्ठांतरे रिपोः ॥ ३४ ॥ व्यास उवाच ॥ देवाश्चितातुराः सर्वे तुरासाहं तथा कृतम् ॥ दृष्ट्वा विमृश्य तरसा चक्रुर्यत्नं विमुक्तये ॥ ३५ ॥ असृजंत महासत्त्वां जृंभिकां रिपुनाशिनीम् ॥ ततो विजृंभमाणः स व्यावृतास्यो बभूव ह ॥ ३६ ॥ विजृंभमाणस्य ततो वृत्रस्यास्यादवाप तत् ॥ स्वान्यंगान्यपि संक्षिप्य निष्क्रांतो बलसूदनः ॥ ३७ ॥

गणो ! देवराज इन्द्र वृत्रासुरके मुखमें पड़े हैं वृत्रासुरने उनको अवसन्न किया है किन्तु वह जीवित रहकरभी शत्रुके कोष्ठमें स्थित हैं अतएव जीवितावस्थामें निकालनेकी चेष्टा करनाही उचित है ॥ ३४ ॥ व्यासजीने कहा हे राजन् ! देवराज इन्द्रको उस अवस्थामें देखकर देवतागण अत्यन्त चिन्तातुर हुए और शीघ्र इन्द्रको छुडानेके निमित्त भलीभांति विचारपूर्वक यत्न करने लगे॥ ३५ ॥ अनन्तर उन्होंने महासत्व सम्पन्न वैरिविनाशिनी जँभाईको उत्पन्न किया तब वृत्रासुरको जँभाई लेनेपर उसका मुख खुल गया ॥ ३६ ॥ और बलविनाशन इन्द्र उसी अवकाशमें

अपने सम्पूर्ण अंग सकोडकर जँभाई लेते हुए वृत्रासुरके मुखसे निकल पडे ॥ ३७ ॥ हे महाराज ! जबहीसे जँभाई लोकके बीच प्राणिगणोंके देहमें स्थित रहती है तदनन्तर देवतागण इन्द्रको निकला हुआ देखकर अत्यन्त प्रसन्न हुए ॥३८॥ इस प्रकार इन्द्रके निकलनेपर फिर वृत्रासुर और इन्द्रका १०००० वर्ष पर्यन्त दारुण लोमहर्षण भयंकर संग्राम हुआ ॥ ३९ ॥ इधर सम्पूर्ण देवतागण युद्धको उपस्थित हुए, उधर विपुलविक्रम त्वष्टनन्दन वृत्रासुर संग्राम करने लगा ॥ ४० ॥ वृत्रासुर जब वरके मदसे मत्त हो रणमें वार्द्धित हुआ तब इन्द्र उसके तेजसे धर्षित

ततःप्रभृति लोकेषु जृंभिका प्राणिसंस्थिता ॥ जहृषुश्च सुराः सर्वे शक्रं दृष्ट्वा विनिर्गतम् ॥ ३८ ॥ ततः प्रववृते युद्धं तयोर्लोकभय प्रदम् ॥ वर्षाणामयुतं यावद्दारुणं लोमहर्षणम् ॥३९॥ एकतश्च सुराः सर्वे युद्धाय समुपस्थिताः ॥ एकतो बलवांस्त्वाष्ट्रः संग्रामे समवर्तत ॥४०॥ यदा व्यवर्धत रणे वृत्रो वरमदावृतः ॥ पराजितस्तदा शक्रस्तेजसा तस्य धर्षितः ॥४१॥ विव्यथे मघवा युद्धे ततः प्राप्य पराजयम् ॥ विषादमगमन्देवा दृष्ट्वा शक्रं पराजितम् ॥ ४२ ॥ जग्मुस्त्यक्त्वा रणं सर्वे देवा इंद्रपुरोगमाः ॥ गृहीतं देवसदनं वृत्रेणागत्य रंहसा ॥ ४३ ॥ देवोद्यानानि सर्वाणि भुंक्तेऽसौ दानवो बलात् ॥ ऐरावतोऽपि दैत्येन गृहीतोऽसौ गजो त्तमः ॥४४॥ विमानानि च सर्वाणि गृहीतानि विशांपते ॥ उच्चैःश्रवा हयवरो जातस्तस्य वशे तदा ॥४५॥ कामधेनुः पारिजातो गणश्चाप्सरसां तथा ॥ गृहीतं रत्नमात्रं तु तेन त्वष्टृसुतेन ह ॥ ४६ ॥ स्थानभ्रष्टाः सुराः सर्वे गिरिदुर्गेषु संस्थिताः ॥ दुःख मापुः परिभ्रष्टा यज्ञभागात्सुरालयात् ॥ ४७ ॥

हो पराजित हुए ॥४१॥ अनन्तर देवराज इन्द्र युद्धमें हारकर अति व्यथित हुए, देवतालोगभी उनको हारा हुआ देखकर अत्यन्त विषादको प्राप्त हुए ॥४२॥ जब इन्द्र इत्यादि सब देवतागण रणको त्यागकर भाग गये तब वृत्रासुरने शीघ्र जाकर त्रिदशालयपर अधिकार कर लिया ॥ ४३ ॥ वह दानवप्रवर बलपूर्वक सब देवोद्यान भोग करने लगा और गजराज ऐरावतको भी ले लिया ॥ ४४ ॥ उस त्वष्टाके पुत्र वृत्रासुरने सब विमान और घोड़ोंमें श्रेष्ठ उच्चैःश्रवा ॥४५॥ कामधेनु पारिजात अप्सरागण इत्यादि सब स्वर्गके रत्न ग्रहण कर लिये ॥४६॥ इधर संपूर्ण देवता स्थानभ्रष्ट

